(ग) आधारग्रन्थीयपरिशोधपरिज्ञानयोर्विषये तत्र तत्रोपयुक्तचरीणां चोपयोक्ष्यमाणानां च प्रागर्वाग्भाष्यटीकाटिप्पणनिबन्धादिप्रकारककृतीनां तन्नामतश्च तत्कर्तृनामतश्च संक्षेपेणूल्लेखो भवतीतीहापि तत्पुनर्वचनेऽभिरुचिर्न भवति ।

# ४. विधानक-सारसंग्रहः

## १. सामान्य-प्रकरणम्

### (क) सामग्र्याः संपूर्णत्वम्

एतद्ग्रन्थीये प्रकृते विभाग आधारभूतेषु श्रुतिग्रन्थेषु यावन्मात्रप्रयुक्तस्य सत एकैकस्य शब्दस्यैकैकस्य रूपस्य स्थल-नैःशेष्येण समावेशोऽकारीत्येतदीयं विशिष्टं लक्षणं भवति । एषाऽनतिशयितपूर्वकायविस्तरा सती शब्दसामग्रीहैव तावत् सर्वप्रथमं सर्वाङ्गीणया यौगिक्या प्रक्रियया व्यवस्थाप्य यथावद् निर्दिश्यते । अथ विश्वप्रागर्वाग्विबुधीयतत्तद्वैदिकविषयीयतत्तन्मन्त्रसामस्त्योल्लेखाऽऽलोचनोभयनिर्भरैश्च तस्य तस्य पाठस्य स्वरूपं च तस्य तस्य शब्दस्य व्युत्पत्तिं च तत्र तत्र विचारणीयतयोपतिष्ठमानास्तास्ताः साहितिकीर्वा वैयाकरणीर्वा वाक्यान्वयीया वा सौवरीर्वा छान्दसीर्वाऽर्थमीमांसीया वा सांशयिकीः स्थितीश्चाधिकृत्य प्रवर्तमानैश्च प्रतिपृष्ठीयैष्टिप्पणैः समग्रोऽयं ग्रन्थो मूलार्थविशदीकृतिप्रयोजनिकया वृत्त्येव सनाथ्यते ।

### (ख) आधिश्रुतिकौ संवाद-विसंवादौ

१. यदा बाह्वृचे श्रावितपूर्वः सन् पाठः पुनः श्राव्यते, तदा तस्य तत्तच्छब्दविशेषीयपुनःपाठाऽपाठविवेकतो यथायोगं प्रतिनियतस्वरूपः संकेतः क्रियते ।

२. यदा बाह्वृचः श्रुतिविशेषो ग्रन्थान्तरीयतया श्रुतिगोचरतामुपैति, तदा तस्य तत्तच्छब्दविशेषीयतद्गतपाठाऽपाठविवेकतो यथायोगं प्रतिनियतस्वरूपः संकेतः क्रियते ।

३. यदोक्तपूर्वस्तु तत्तच्छब्दविशेषीयः पाठभेदः स्वर-प्रत्ययान्यतरमात्रीयस्वरूपो भवति, तदा बाह्वृचमूलपाठो नित्यं टिप्पणे प्रदर्शितो भवति, तय. पृ. ४१४[k] ।

४. यदोक्तपूर्वस्तत्तच्छब्दविशेषीयः पाठभेदस्तत्पर्यायाऽपर्यायान्यतरभूतशब्दान्तराऽऽत्मको भवति, तदापि बाह्वृचमूलः पाठो नित्यं टिप्पणे प्रदर्शितो भवति, तय. पृ. १८[e] ।

५. यदा तूक्तपूर्वस्तत्तच्छ्रुतिविशेषीयः पाठभेदस्तच्छब्दविशेषीयप्रातिस्विकस्थानाऽऽपन्नशब्दान्तरतया व्यवस्थापयितुं दुःशको भवति, तदा बाह्वृचं मूलं स्थलाङ्कनमात्रेण विज्ञापितं भवति[१], तय. पृ. ४८[k] ।

६. बाह्वृचभिन्न-ग्रन्थान्तरीया अन्योन्याऽपेक्षया वर्तमानाः पाठभेदा अप्येवं यथायथं टिप्पणेषु प्रदर्शिता भवन्ति, तय. पृपृ. ४२[l], ७८[h], ९४[f], ४४५[l] ।

७. तत्तद्ग्रन्थीयमूलकोषीया विशिष्टपाठभेदीयाः संकेता अपि यथासंभवं टिप्पणेषु प्रदर्शिता भवन्ति, तय. पृपृ. ५७[k-m], ७५[p], ४२१[g], ४३८[e] ।

८. प्रागर्वाग्भाष्योपलभ्या दुरूहपाठविमर्शीया विशिष्टसंकेता अप्येवं टिप्पणेषु प्रदर्शिता भवन्ति, तय. पृपृ. ८२[f-g], ९२[p], ५०१[a] ।

---

[१] उपरितनात् खण्डात् प्रभृति बाह्वृचाऽपेक्षयाऽपि तुलनात्मकाध्ययनस्य सौकर्यसंपादनार्थं ग्रन्थान्तरीयास्तत्पाठभेदा अपि समानमेव टिप्पणेषु प्रदर्शयिष्यमाणा द्रष्टव्याः ।

९. कृष्णयजुर्वेदीयब्राह्मणभागीया शब्दावलिश्च श्रुत्यन्तरविवेकतोऽध्ययनसौकर्यार्थं संकेतपार्थक्येन निर्दिष्टा भवति ।

## (ग) पाठ-प्रतिष्ठापनम्

१. इहत्यादेकैकस्माद् निर्देशाच्च प्राक् तद्विषये वर्णतः स्वरतो योगतोऽन्वयतश्चाऽसकृच्च निःशेषं च स्थितिसमीक्षणं व्यधायि । येषां ग्रन्थानां प्राचीनाः पदपाठा उपालप्सत, तदीयानां निर्देशानां समये तेषामुपयोगोऽकारि । येषां तु ग्रन्थानां प्राचीनाः पदपाठा नोपालप्सत, तदीयनिर्देशसौकर्य्यार्थं तेषां प्राग्विधयैव नवीनाः पदपाठा अक्रियत । एवं यावन्मात्रं प्रागवर्गिभाष्यीय उपयोगः समभूत्, तावन्मात्रमसौ सम्यगकारि । दीर्घप्रततस्य नितरां परिश्रमसाध्यस्य चाऽस्य पर्यालोचनाऽऽस्मकस्य वैदिकग्रन्थाऽध्ययनकार्यस्य संपादनात्तावदयमनुभवः प्रापि यथा पाठपरिशुद्धिमुद्दिश्य सर्वे एवैते ग्रन्थाः पुनःसंस्करणविशेषाऽपेक्षा भवन्तीति ।

२. अस्याश्चाऽऽधारग्रन्थीयाया अपेक्षाया विषये खलु स्थले स्थले तां तां विकटां स्थितिमुद्देशतश्च यथासंभवं समाधानतश्चोदाहरन्ति टिप्पणानां शतानि साक्षीणि स्युः । एषां टिप्पणानां तावदेते मुख्याः प्रकारविशेषा भवन्ति—

(अ) यत्रादर्शितसमाधानं दुरूहमात्रं संकेतितं भवति, तय. पृ. १०[p] ।

(आ) यत्र समाधानप्रयत्नसहकृता दुरूहता संकेतिता भवति, तय, पृ २३६[f], ४४५[a] ।

(इ) यत्र शुद्धतया प्रसिद्धपूर्वाणां पाठानां विषये सांशयिकत्वं प्रदर्शितं भवति, तय. पृ. ८[i], ७९[i] ।

(ई) यत्र शुद्धतयोरीकृतपूर्वाणां पाठानां प्रत्याख्यानमिष्टं भवति ९[a], १७२[h] ।

(उ) यत्र यथाऽभिप्रेतं शोधविशेषः समर्थितो भवति, तय. पृ. ९[j], १०९[d], २०१[b,g], २७४[e], ३६९[a] ।

(ऊ) यत्र ग्रन्थविशेषीयमूनमिव सद् यथोपलम्भ-संस्करणं पूर्तिमिव नीतं भवति, तय. पृ. ९[m] ।

(ऋ) यत्र प्राचीनाः कृतयोऽर्घत आलोचिता भवन्ति, तय, पृ. १३[a], ४४[j], २०९[d], २४४[k] ।

(ॠ) यत्राऽर्वाक्तन्यः कृतयोऽर्घत आलोचिता भवन्ति, तय पृ. १३[e], २१[j], २६८[m], २७९[c] ।

## (घ) पाठानामर्थतोऽनुसंधानम्

यद्यपि श्रौतपदजातीयवैयाकरणव्यवस्थितिसहकृतनिर्देशमात्रोद्देशस्य सतोऽस्य ग्रन्थस्य श्रुतिपरंपरीयमर्थाऽनुसंधानं विषयो न भवति, तथाऽप्युक्तपूर्वपाठप्रतिष्ठापनशोधनप्रसङ्गाऽनुरोधतस्तत्र तत्र तदपि प्रसक्तं भवति, तय. पृ १३[a], १६[n], २१[k], ४७[a], ५२[j], ७०[e], ७३[j], ३०७[h], ३०९[c], ३३३[b] ।

## (ङ) श्रौतश्छन्दोविमर्शः

तत्तत्पाठपर्यालोचनप्रतिष्ठापनीयप्रयत्नप्रयोजितश्चेह तस्य तस्य मन्त्रस्य यथातत्तत्स्थितिविशेषविचारं छन्दोविमर्शोऽप्यानुषङ्गिकधर्मभाक् सन् समावेशं लभते । यच्चाऽस्मिन् विषये छन्दोऽनुलक्षणीकरणतत्त्वानुप्रापणोभयप्रयोजनकं विधानकं प्रवर्तितं चाऽनुसृतं च भवति (तय. पृ. ५०५[i], ५७२[e], ५९२[i] ) तस्याऽपराङ्गभावेन च पूर्णभावेन च क्रियमाणोऽभ्यासक्रमो भूयिष्ठानां पाठानां यथायथं प्रतिष्ठापुकः स्यादिति प्रतीयते ।

## (च) सांहितिकं दीर्घत्वम्

संहितापाठीयं दीर्घत्वं स्वरूपभेदतस्त्रेधाविशिष्टाया निर्देशिकायाः प्रयोजकं भवति । त इमे तावत् त्रयोऽपि विशेषा भवन्ति—

१. यत्र ( यथा मै. ) उदात्ताद्यच्के पदे परतः पदान्त्याऽऽकारात्मिका श्रुतिर् अस् , ए इत्येतयोर्मध्येऽन्यतरेण समूला भवति, तदाऽसौ यथास्वमूलविकृतो व्यवस्थाप्य प्रत्यापन्नतन्मूलस्वरूपतया निर्दिष्टा भवति, टिप्पणगतश्च तद्विस्तरो भवति, तय. पृ. ६४०[y] ।

२. कानिचित् तिङ्रूपाणि चाऽव्ययानि च ह्रस्वदीर्घोभयविधान्ततया श्रूयन्ते । तानीमानि प्राक्तनेषु पदपाठेषु नित्यं ह्रस्वान्ततयैव प्रदर्शितानि भवन्ति । इह तावत्तदीयस्याऽस्थौभयविध्यस्य सूचनार्थं समूढस्य सतस्तदीयस्य स्थलाङ्कनस्य मूर्धन्यः संस्तदुभयप्रकारसाधारणभूत एव तदीयो निर्देशो भवति (तु. भू. ४, ४, ग), तय. अध > धा, अभि > भी, अभि √रक्ष् > अभि···रक्षथ > था, √अव् > अव > वा ।

अथ यदा कश्चिदुपसर्गः पूर्वपदतां गतोऽनयैव द्विविधतया श्रूयते, तदाऽसावपि तदुभयप्रकारसाधारणभूतमेव निर्देशं भजते, तय. १अनु,>नू-राध- ।

३. यङि परतोऽभ्यासांशः प्रायेण दीर्घान्ततया श्रूयते, क्वचिदेव त्वपि ह्रस्वान्ततया वा ह्रस्वान्तमात्रतया वा । इहैतत् त्रैविध्यं यथायोगं संहितापाठमनु निर्दिष्टं भवति, तय. वावृधध्यै, ततृषाण- इति तातृषाण- इति च, ततृदान- ( वैतु. पदपाठानां प्रायिकी ह्रस्वान्तता-मात्रीया क्वाचित्क्येव च दीर्घान्ततामात्रीया प्रवृत्तिः, तय. ववसान- ववृषाण-, चाकनत्, चाकशीति ) ।

## ( छ ) प्राक्तनाः पदपाठाः

१. ऋग्वेदस्य च माध्यन्दिनतैत्तिरीययोर्यजुर्वेदयोश्च कौथुमस्य सामवेदस्य च शौनकीयस्याऽथर्ववेदस्य च प्राक्तनाः पदपाठा मुद्रिताः सन्त उपलभ्यन्ते । मैत्रायणीयः पदपाठोऽप्यंशतस्तत्संस्करणीयेषु टिप्पणेषु समाविष्टो भवति[१] ।

२. अस्मिन् कोष एतेषां पुराणानां पदपाठानामुपयोगप्रकारमधिकृत्य तावदिमे केचिद् विशेषा भवन्ति—

( अ ) यदाऽत्रत्यो निर्देशः पदपाठादविशिष्टो भवति, तदा पदपाठविषया परामर्शिका नैव क्रियते ।

( आ ) यदाऽत्रत्यो निर्देशः पदपाठाद् विशिष्टो भवति, तदा पदपाठो नित्यं टिप्पणगोचरीक्रियते प्रायेण तत्त्वत आलोच्यते च, तय. पृ. १००[a], २८८[b], ३४९[o], ४१२[o], ६६०[d] ।

( इ ) यदाऽत्रत्यो निर्देशः सांशयिको भवति, तदा पदपाठष्टिप्पणे दीयते, तत्तत्पक्षोपवर्णनं चाऽपि तत्रैव क्रियते, तय. पृ. ७[e], १७४[a], १८२[h] ।

( ई ) नञ्समासेषु नञ उत्तरमवग्रहो न क्रियते इति पदपाठीया सामान्या प्रवृत्तिर्भवति । इह तावद् यथापेक्षं नञ उत्तरमप्यवग्रहः क्रियते । ततः खलु अ-पतिघ्नी- इत्येवंप्रकारकाणां समासोत्तरपदानां सतां नञ्-समासानां स्वरः सुस्पष्टतरः स्यात् (वैतु. अपति-घ्नी- इति पदपाठीयो निर्देशः, यत इह पृथग्भूतेन पति-शब्देन नञः समासोऽनभिप्रेतो भवति, पति-घ्नी- इत्येतेन समासेन चाऽभिप्रेतो भवतीति दुर्वचमिव स्यात् ) ।

( उ ) यत्राऽप्यन्यत्र संदिग्धस्वरूपेषु समासेषु पदपाठीयाऽवग्रहाऽप्रवृत्तिर्भवति, तत्र सर्वत्रेहाऽवग्रहः क्रियते च टिप्पणीयेनाऽऽलोचनेन समाध्यते च, तय. पृ ७५[m] ।

---

[१] एतदीयः समग्रो मूलकोषोऽप्येकः पञ्जापविश्वविद्यालयपुस्तकालयीयतयाऽस्मत्पार्श्ववर्तितां भजते । यस्तु रावणकर्तृकत्वप्रसिद्धिबाह्वृचपदपाठीयसप्तमाष्टकमात्रीयोऽप्येको मूलकोष उक्तपूर्वे पुस्तकालये विद्यते, तस्य शाकलप्रसिद्धेः पदपाठान्नितरामभेदाद् रावण इत्यत्र प्रतिलेखक एव कश्चिद् स्यान्नतु स्वतन्त्रपदपाठकारः कश्चिदिति स्पष्टम् ।

( ऊ ) यदाऽत्रत्यनिर्देशाऽवग्रहीया स्थितिः पदपाठाऽवग्रहीयायाः स्थितेर्भिन्ना भवति, तदाऽयं स्थितिभेदष्टिप्पणे सम्यगालोचितो भवति, तय. पृ. १०६[e], १८८[k], १९४[a'c] ।

( ऋ ) श्रौता उपसर्गा उपसर्ज्यतिङपेक्षया व्यवहिताश्च भवन्त्यव्यवहिताश्च । ये तावद् व्यवहिता भवन्ति ते नित्यं सस्वरा भवन्ति, ये त्वव्यवहिता भवन्ति त उभयथा भवन्ति सस्वराश्च निःस्वराश्च । तद् ये निःस्वरा भवन्ति त एव पदपाठेषु पूर्वपदतया निर्दिश्यन्ते नेतरे । इह तु व्यवहिता अप्यव्यवहिता अप्यथ निःस्वरा अपि सस्वरा अपि येऽपि तिङ्-सापेक्षा भवन्ति, ते सर्वेऽपि पूर्वपदतया निर्दिष्टा भवन्तीत्येवमयं सहस्रशो निर्दिष्टिभेदकरः सुमहान् विशेषो द्रष्टव्यः ।

( ॠ ) संहितापाठीयस्य दीर्घत्वस्य निर्देशस्य विषये च यथाऽस्य कोषस्य पदपाठेभ्यो विसंवादाऽतिरेको भवति तथोपवर्णितचरमेव भवति ( तु. भू. ४, १, च ) ।

## ( ज ) वर्गिता-निर्देशिका

१. इह तावदाधारग्रन्थीयानि पदानि तिङन्तानि सुबन्तान्यव्ययानि चेति त्रेधा वर्गीकृत्य च यथासंभवं यौगिकीभाव्य च सामान्येन सतैकेन वर्णमात्राऽनुक्रमेण निर्दिष्टानि भवन्ति ।

२. यावत् प्रतिवर्गीया नैर्देशिका विशेषा उपरितनानां यथास्वप्रकरणानामेव विषयतां भजेरन्, सामान्यायाः सत्या निर्देशव्यवस्थाया विषये केचिद् विशेषास्तावदिहाऽप्युल्लिख्येरन्—

( अ ) तिङन्तीये वर्ग उपसृष्टाऽनुपसृष्टोभयविधानां सतां मूलधातूनां नामधातूनां च यथोपलम्भं सर्वलकारीयाणि रूपाणि समाविष्टानि भवन्ति ।

( आ ) शुद्धक्रियाख्याणि रूपाणि च णिच्प्रभृत्यर्थविशिष्टक्रियाख्याणि प्राक्रियिकाणि रूपाणि च पृथगुपवर्गकल्पनेनाऽन्योन्यतो विभज्यन्ते । एवं सार्वधातुकनिष्पन्नानि रूपाण्यार्धधातुकनिष्पन्नेभ्यो रूपेभ्यो निर्देशक्रमपार्थक्येन विविच्यन्ते ।

( इ ) सुबन्तानि रूपाणि यथास्वधातु-साक्षात्परंपरिताऽन्यतराऽभिसंबद्धप्रातिपदिकशिरस्कतया निर्दिश्यन्ते । अस्पष्टयोगत्वाद् धातवीयवंशपरंपराबाह्यनिर्देशानां सतां प्रातिपदिकानां च योगपरीष्टिष्टिप्पणगता भवति ।

( ई ) तद्धिता यथास्वप्रकृतिभूतेभ्यः कृद्भ्यः श्रेणि-भेदेन निर्दिश्यन्ते ।

( उ ) कृतां च तद्धितानां च पूर्वपदतश्चोत्तरपदतश्च सकलं सामासिकं वृत्तं यथायथं निर्दिश्यते च तुलनात्मकाऽध्ययनविशेषप्रयोजनकेन प्रतिपरामर्शिकासुभिक्षेण सनाथ्यते च ।

( ऊ ) कार्तं वा ताद्धितं वा सामासिकं वा स्त्रीवृत्तं यथायोगप्रतिविविक्तेन सता श्रेणिबन्धेन पृथङ् निर्दिश्यते ।

( ऋ ) यथायोगं निर्दिष्टानां सतां सुब्योगिनां प्रातिपदिकानां वैयक्तिकसंज्ञात्वेन वा सामान्यसंज्ञात्वेन वा भावपदत्वेन वा सर्वनामत्वेन वा विशेषणपदत्वेन वा क्रियाविशेषणत्वेन वा कथंचिदन्यथात्वेन वा यथाश्रुति वृत्तिवैशिष्ट्यं यावदपेक्षं टिप्पणेषु निर्दिश्यते ।

( ॠ ) विलक्षणानि सन्ति तिङ्-रूपाणि वा सुब्-रूपाणि वा द्विर्निर्दिश्यन्ते, यौगिकेनाऽनुक्रमेण च प्रतिपरामर्शिकासनाथितेन सता यथाप्रातिस्विकेनाऽनुक्रमेण च ।

( ऌ ) यौगिकत्वेन चाऽयौगिकत्वेन चोभयथाऽपि निर्देशभाञ्जि सन्त्यव्ययानि सौपतैङाभ्यां वर्गान्तराभ्यां सुवेचानि भवन्ति ।

( ए ) अव्ययीया पृथक्-कृतिस्त्वेषा यथाप्राक्प्रसिद्धिप्रेक्षणसौकर्यमात्रप्रयोजना भवति। व्याकृतिसीमान्तदृशा हि तत्तदव्ययं तत्तत्प्रातिपदिकीयतत्तद्विभक्तीयं रूपं क्रियाविशेषणत्वेन वोपसर्गत्वेन वा समुच्चयपदत्वेन वा तत्तद्वृत्तिवैशिष्ट्ययुतं सद् भूयो भूयोऽभिन्नतयैव श्रूयमाणत्वात् कालेनाऽसौपमित्यस्याः प्रतीतेर्विषयोऽभूत्। एवं च तावदास्थायेहाऽनेकानि प्राक्प्रसिद्धितोऽव्ययाख्यानि सन्त्यपि पदानि सुबन्ताऽन्तरसन्यायतया प्रातिपदिकशिरस्कीकृत्य निर्दिष्टानि भवन्ति। अन्यानि चापि बहून्येवमनिर्दिष्टान्यपि सन्ति टिप्पणेषु तथात्वेन व्याख्यातानि भवन्ति।

( ऐ ) कर्मप्रवचनीयानामन्यत उपसर्गगतीनां चाऽन्यतो विवेक इह सम्यक् प्रदर्शितो भवति।

( ओ ) प्राक्प्रसिद्धित उपसर्गेतिसामान्यसंज्ञावतामव्ययविशेषाणामिह यथाश्रुतिलक्षणतः क्रियाविशेषणाऽऽत्मकान्यव्ययानि, औपसर्गिकाण्यव्ययानि, उपसर्गात्मकान्यव्ययानि चेति त्रेधा विषयविभागः कृतो भवति, तय. पृपृ. ३८०[१], ३८५[४]।

( औ ) प्रतिसमासं यथाश्रुत्यर्थालोचनमिह तत्पुरुषादिभेदनिर्देशः कृतो भवति यथायोगमवग्रहश्च। अनया विधया खलु तत्तत्समासवच्छुतभागीया वृत्तिरिव विरचिता भवति।

( अं ) यद्यपि सवर्णानां सतां भिन्नवर्गीयाणां शब्दानां संकेतविशेषप्रयोजितो वर्गविवेक एव पर्याप्त इति कृत्वा सामान्येन तदीयः सांख्यो विवेकोऽन्यथासिद्धत्वादुपेक्षितो भवति, तथापि यत्र यत्र स्वरतो वाऽर्थतो वा वैशद्याऽर्थं सांख्यो विवेकोऽपेक्षितो भवति, तत्र तत्र सोऽपि कृतो भवति।

## ( झ ) स्वरः

यद्यप्युपरिष्टात् सौवरं प्रकरणं पृथग् विरचयिष्यमाणं भवति, तथाऽपि तद्विषयीयं यत् किंचित् सामान्यलक्षणं भवति, तत्तावदिदं सूच्यते—

१. एकैकः सौवरो निर्देशष्टिप्पण उपपादितो भवति।

२. यथाश्रुतिशाखाभेदमुपलभ्यमानः स्वरभेदष्टिप्पणे सूचितश्च व्यवस्थापितश्च भवति, तय, पृ. ४४०[k]।

३. यथाऽपेक्षाविशेषं स्वर-शोधः कृतश्च यथायथं सूचितश्च भवति, तय. पृपृ. ९[j], ४५[m], १७१[b], २६२[j]।

४. अनङ्कितस्वरग्रन्थीयः स्वरः क्वचिदेवेहाऽङ्कितो भवति, तय. पृपृ. ७६[c], ७८[c]।

५. यद्यप्युदात्तश्च जात्यः स्वरितश्च यथाश्रुति सर्वत्राऽङ्कितौ भवतस्तथाप्युदात्त एव मौलिकः स्वर इत्यास्थाय जात्यस्य स्वरितस्य तन्मूलकतया प्रतिपादनेन तदीयः क्षैप्रस्वरितेनाऽभेदाऽन्वय इष्टो भवति, तय. पृपृ. ६२५[a], ६४३[e]।

६. यद्यप्येकपदाऽवच्छेदेन द्विस्वरत्वमपि यथाश्रुतीहाङ्कितं भवति, तथाऽप्यस्मिन् विषय एवमास्थितं भवति, यथा मौलिकस्थित्यनुदृष्ट्या सर्वत्राऽपि द्विस्वरवदेकपदताया विषय एकैकस्वरवतोर्द्वयोर्द्वयोः पदयोर्यथारूपयोश्च यथास्वरयोरेव च सतोः प्रारम्भिकसमासस्वरूपभूतं पारस्परिकसंनियोगमात्रं भवतीति च तस्मिंश्च संनियोगे सति नैरुक्तिकवर्णलोप-विकाराभ्यां च तयोः पदयोर्द्वयोः सतोरप्येकतेवाऽखण्डरूपा संपन्ना भवतीति च (तु. यथोत्तरखण्डम् एतवै, वाव, बृहस्पति- इह च पृपृ. २११[g], २१८[b], २१९[r], ३७८[l], ३८०[h]।

७. अत्रत्य उदात्तस्य चोदात्तभूमिस्वरितस्य च यथायोगमङ्कनप्रकारो नूतन इव प्रतीयमानोऽपि सन् पुराणाऽऽधारसुप्रतिष्ठो भवति। अस्य प्रकारस्य प्रकामं सारल्याच्च साक्षादिव प्रतीतिकरत्वाच्चेत ऊर्ध्वं करिष्यमाणेषु वैदिकग्रन्थीयेषु संस्करणेष्वपि तत्स्वराङ्कनसाम्यकरी सती महती खलूपादेयता स्यात्।

## (ञ) व्युत्पत्ति-योगः

१. यास्क-पाणिनिमूर्धन्यानां प्राचां निरुक्तव्याकरणप्रधान-शब्दमीमांसायाः प्रवर्त्तकानामाचार्याणां मतेन प्रत्येकमाख्यातं च नाम च योगजं भवति। तत्र तावदाद्यः प्रकृत्यात्मको भागो धातुरित्युच्यतेऽन्यश्च तिङ्सुबन्यतर-विभक्त्याऽऽत्मकश्चाऽन्यतः कृत्तद्धिताऽन्यतरनामकरणाऽऽत्मकश्चाऽन्यतः प्रत्यय इति। केवलौ सन्तौ धातुश्च प्रत्ययश्च न प्रयुज्येते। तदीय-योगसिद्धानि सन्ति शब्दरूपाण्येव तु वाग्व्यवहारं लभन्ते। प्रत्येकं चेदृक्-स्वरूपं शब्दरूपं तत्तत्प्रत्य-यीयेन काल-संख्या-कारकाऽऽदिभेदकोपाध्यात्मकेनाऽर्थेन युक्तं सन्तं क्रियामात्रस्वरूपं धात्वर्थमाह। तथाहि। '**अत्ता**', '**अदनम्**', '**अन्नम्**' इत्येतेषु त्रिष्वपि शब्दरूपेषु समानधात्वंशीयभक्षणाऽऽत्मकाऽर्थवाचकत्वसामान्ये सत्यपि यत्तदीयं यथाकर्म कर्तृपरत्वं च भावपरत्वं च कर्मपरत्वं च परिणतं भवति, तत्तद्गत-तृच्-ल्युट्-क्त-प्रत्ययीययथायोगोपाधिसंभवं भवति। एवं तावद् धातूनां तत्तत्प्रातिस्विकाऽर्थवत्त्वं भवति प्रत्ययानां तु प्रातिस्विकाऽर्थवत्त्वाऽभावे सति धातवीय-तत्तत्प्रातिस्विकार्थोपाधायकमात्रत्वमिति विवेकः स्पष्टो भवति।

२. यद्यप्यस्याः प्रकृति-प्रत्ययविभागीयायाः प्रक्रियाया निरुक्त-व्याकरणोभयवेदाङ्गीयं प्रामाण्यं प्रसिद्धं भवति, तथापि व्याकरणस्यैवाऽनया प्राधान्येन स-विषयता संपद्यत आनुषङ्गिकमात्रत्वेनैव तु निरुक्तस्य। तस्य हि तावत् प्राधान्येन तत्तत्प्रकृतिकत्वेन तत्तच्छब्दार्थपरीक्षणनियतत्वेन प्रवृत्तिर्भवति। एवमपि तदतिपरोक्षवृत्तीनां च परोक्षवृत्तीनां च सतां शब्दानां वर्णविकाराऽऽगम-लोप-विपर्ययाऽनुसंधानतः प्रत्यक्षवृत्तित्वस्य प्रत्यापादनेन तदीयप्रकृति-प्रत्ययविभागीयं सौकर्यविशेषदातन्वद् व्याकरणस्य कार्त्स्न्यमेव प्रयोजयति।

३. अस्ति तावद् निरुक्त-व्याकरणीययोः प्रक्रिययोरन्योऽन्यैको विशेषः। तथाहि। ये पदे पदे वर्णाऽऽगम-लोप-विकार-विपर्यया भवन्ति, ते वैयाकरण्यां प्रक्रियायां तत्तत्कार्यसूचकतत्तदनुबन्धवत्तत्तत्प्रत्ययसंनियोगेनाऽनुशिष्टा भवन्ति। त एव तु नैरुक्त्यां प्रक्रियायां तत्तत्प्रकृतिप्रत्ययप्रतिनियतसंनियोगनिरपेक्षं वाग्व्यवहारमात्रसिद्धेन सता तत्तद्विशेषधर्मकेण प्रातिस्वाभाव्येनोद्दिश्यन्ते।

४. अथ शाब्दिकीं निष्पत्तिमधिकृत्य या प्रक्रियाऽस्मिन् कोषे चरितार्था भवति, तस्या अयं संक्षेपो भवति—

(अ) या नामोक्तपूर्वा पाणिनीयेति प्रसिद्धा सती प्रकृतिप्रत्यययोगनिर्भरा वैयाकरणी प्रक्रिया भवति, तन्मात्राऽनुसारीहत्यं निर्देशसर्वस्वं भवति।

(आ) विस्पष्टव्युत्पत्तिकत्वाद् यौगिकवंशपरंपरीयत्वेन निर्दिष्टानां सतां शब्दानां विषये धातवीयांऽशस्य निगदसिद्धत्वात् प्रत्ययीयांश एव टिप्पणीयस्य विचारस्य प्राधान्येन विषयतां भजते।

(इ) ये शब्दास्तावद् दुरूहव्युत्पत्तिकत्वाद् यौगिकवंशपरंपरातो बाह्यत्वेन निर्दिष्टा भवन्ति, तेषां व्युत्पत्तेर्विषये यत् किंचित् पुरातनं वा नूतनं वा कल्पनारूपं समभूत्, तत् सकलमपि यावच्छक्येन स्वीयेनोहापोहेन साकं टिप्पणेषु दीयते।

(ई) बहुष्वपि शब्देषु लक्ष्यमाणानां वर्णविकारादीनां विषये व्याकरणाऽनुसारं च निरुक्ताऽनुसारं चोभयथाऽप्युपपत्तिः प्रदर्शिता भवति। एवं खलु द्वयोरपि तयोः प्रक्रिययोराधारभूतयोर्यथास्व-संज्ञापरिभाषयोरितरेतरीयतयाऽनुवाद इव कृतो भवति।

५. यद्यपि पाणिनीयायाः प्रक्रियायाः प्रातिस्विकगुणप्रकर्षाच्च सुप्रतिष्ठितचतुर्दिक्प्रामाण्याच्च तद्वित्तिक-विधानकत्वेनैवाऽयं कोषः प्रवर्त्तितो भवति; तथाऽपीहोपसप्तशतेषु टिप्पणेष्वार्यभाषीयां मौलिकीं स्थितिमुद्दिश्य स्वोप-ज्ञतयोपकल्पितायाः नितरां स्वतन्त्रायाऽव सत्या अपरस्या नवीनाया वैयुत्पत्तिक्याः प्रक्रियाया अप्युपयोगः कृतो भवति। तद्विषयीयास्तावदिमे कतिपये वादाः संग्रहेण सूच्यन्ते—

( अ ) मूलभूताऽऽर्यभाषा सार्थक-सस्वरैकाच्क-ध्वनीनामाधारेण प्रथमां प्रवृत्तिं लेभे ।

( आ ) त आधारभूता ध्वनयः स्वगताऽनेकखण्डा इव सन्त आदितो महाप्राणव्यञ्जनाऽऽत्मका अन्तस्थाऽनुनासिकंभावुक-विलोलस्वराऽऽत्मकाश्च बभूवुः ।

( इ ) संख्यातस्तावत्ते ध्वनयः पञ्चाऽनतिरिक्ततया संभाव्यमानाः सन्तो *घॄ, *झॄ, *धॄ, *भॄ, *श्रॄ इत्येवं निर्दिश्येरन्[१] ।

( ई ) उच्चारणविषये प्रतिवक्तृभेदप्रातिस्वाभाव्यादेव त एत आधारभूता ध्वनयो व्यञ्जनखण्डतश्च स्वरखण्डतश्च प्रत्येकं बहुविधस्योच्चारणस्य विषयतां व्रजन्तः कालेन पश्चात्परिनिष्ठितप्रतिविविक्तस्वरूप-तत्तत्स्वरव्यञ्जनाऽऽत्मतया परिणता बभूवुः[२] ।

( उ ) त एते बहुविधमुच्चार्यमाणाः सन्त आधारभूता ध्वनयः प्रत्ययप्रकारकध्वन्यन्तरसंयोगनिरपेक्षाऽव्ययप्रकारकनयैवाऽऽदिमं प्रयोगं लभिरे ।

( ऊ ) आधारभूता ध्वनयो मूलतो नामतयैवोपकल्प्यमानाः सन्तस्तस्य तस्येतरेतरार्थसापेक्षतया संबद्धस्य सतोऽर्थस्य बोधनार्थमादिमवाक्यभूततत्तत्स्वीयपरंपरारूपतां चाऽन्यतस्तत्तद्वृत्तिविशिष्टयतश्च समासतश्च व्यक्तिसामान्य-भाव-त्रितयपरकसंज्ञाऽन्यतमतया च विशेषण-सर्वनामाऽन्यतरतया च कर्मप्रवचनीयतया च संसर्गि[३]ऽन्तर्गि[४]न्यतरतया चाऽऽख्याततया च क्रियाविशेषणतया

---

[१] दीर्घताऽतन्त्रा भवति । अस्या ॠ > अर्, इर्, उर् इत्यस्य त्रैविध्येनाविर्भवतः परिणामस्य पाणिनीयायां प्रक्रियायामेवमेव संभवात् तत्संवादनैकदृष्टिकत्वेनोपकल्पितमात्रत्वात् ।

[२] अस्योच्चारणीयस्य परिणामस्य प्रवृत्तिप्रकारसामान्यमुपरिष्टान्निदर्शयिष्यमाणं भवति (तु. आचि. ४)। इहापि तावदाधारध्वनीयाऽऽद्यव्यञ्जनांशनिवृत्त्याऽवशिष्टाच्च *ॠ इत्येवं निर्दिष्टव्याच्च सतो मौलिकात् स्वरात् स्वरान्तरीयो निवृत्तिपर्यवसानः परिणामक्रमोऽयं निदर्श्यते—

१. *ॠ > { अर् > आ > अ > ...
इर् > ई > इ > ...
उर् > ऊ > उ > ... }

२. अयॢ > { आयॢ > आइ > ऐ > ए > ऍ > इ > ...
अय् > अइ > ए > ऍ > इ > ... }

३. अवॢ > { आव् > आउ > औ > ओ > ऑ > उ > ...
अव् > अउ > ओ > ऑ > उ > ... }

[ विशेषः—ऍ, ऑ इत्येतयोः सांध्यत्वविलयाऽनुपाती द्विमात्रत्वस्यैकमात्रत्वेन परिणामो द्रष्टव्यः । ]

[३] संसृज्यते वाक्यीयो वा वाक्यप्रदेशीयो वाऽर्थोऽनेनेति कृत्वोपसर्ग-कर्मप्रवचनीयोभयभिन्नानां सतां समुच्चयापादकानां निपातानामेषा संज्ञा द्रष्टव्या ( =conjunction ) ।

[४] अन्तर्गच्छन्तीति कृत्वा वाक्यीयपदैरन्वयाऽभावेऽपि वाक्यीयाऽर्थसामान्यस्य तदन्तःप्रवेशेनेव प्रातिस्विकेनाऽऽश्चर्यादि-मानसभावपरेणाऽर्थेनोपाधायुकानां निपातानामेषा संज्ञा द्रष्टव्या (=interjection) ।

चोपसर्गतया चाऽऽर्थपरिणामवैविध्यं चाऽन्यतो भेजिरे[१] ।

( ॠ ) तस्य तस्य संबद्धस्य सतोऽर्थस्य वाचकभूताभ्यस्ताभ्यस्ताभ्य आधारध्वनीयपरंपराभ्यो भूयो-नियतप्रयोगाभ्यः सतीभ्य आदौ यथावस्थिनाऽवयवीयस्वरपार्थक्यं चाऽपरिनिष्ठितसमासधर्मं च सत्[२] कालनैकस्वरतामापन्नं सकलं द्वन्द्वादिकं सामासिकं वृत्तं प्रादुर्बभूव। द्वन्द्व-तत्पुरुषावन्तोदात्तौ प्रादि-बहुव्रीही चाऽऽद्युदात्तौ बभूवतुरित्येतया मौलिकसामान्यविवेकदृष्ट्या येऽप्यन्तोदात्ताः समासा बहुव्रीहित्वेन च मध्योदात्ताः समासास्तत्पुरुषत्वेन च पाणिनीयेऽनुशिष्टा भवन्ति[३], तेऽवग्रहस्थितिपरिवर्तनेन यथायोगं तत्पुरुषत्वेन च बहुव्रीहित्वेन चोद्देश्याः स्युः ।

( ऌ ) अनेकाच्काः सन्तः कृतश्च तद्धिताश्च तत्परकप्रसिद्धिकप्रत्ययाऽऽख्यानामभावाद् मौलिकस्थित्य-नुरोधेनाऽऽधारध्वनीयाः समासविशेषा एव भवन्ति ।

( ॡ ) स्त्रीप्रत्ययान्ततया प्रसिद्धानि शब्दरूपाण्यपि तत्परकप्रत्ययाऽभावसामान्याद् मूलतः समास-सवृत्त-कान्येव भवन्ति ( तु. पृ. ४६७[h] ) ।

( ऍ ) सुप्तिङ्ङन्यतरप्रत्ययान्ततया प्रसिद्धानि चाऽपि शब्दरूपाणि तत्तत्प्रत्ययाऽभावसामान्यात् समास-सवृत्तकान्येव भवन्ति[४] ।

( ए ) बहवः पाणिनीया धातवोऽप्यनेकाऽवयवत्वात् समास-सधर्माणो भवन्ति ( तु. पृ. ५६८[o] ) ।

( ऐ ) ये चाऽनेकार्था इत्येवं प्रसिद्धिभाजः शब्दा भवन्ति, ते स्वीयतत्तदर्थपरस्परवैशिष्ट्यात्मकत्वाऽभावे सति मूलतस्तत्तदर्थवाचकत्वेन भिन्ना एव सन्तः कालेन वर्णविकाराऽऽदितः परिणतायाः सवर्णताया वशादेकत्वमिवाऽऽपन्ना भवन्ति ( तु. पृ. ४९८[e], ५६८[o], ६२५[g] ) ।

( ऑ ) ये चाऽप्यभिन्नार्था इत्येवं प्रसिद्धिभाजः शब्दा भवन्ति, तेषामपि बहवो मूलतोऽन्योन्यमभिन्ना एव सन्तः कालेन विवर्णतया परिणता भूत्वा परस्परं भेदतो व्यवहारमापन्ना भवन्ति (तु. पुनर्सँ-, भूयस्-)।

---

१ प्रथममसमस्तानां च कालेन समस्तानां च सतामाधारध्वनीनामयं तत्तद्वृत्तिवैशिष्ट्यक्रमस्तावदनया तालिकया भूय इव स्पष्टः स्यात्—




२ यतु. वाव इति *भर्-भर्- इत्येतदादिस्वरूपतयोपपाद्यमानम् ।

३ तु. पा ६, २, २ उउ; १६२ उउ ।

४ 'तवै' इत्यन्तानि द्विस्वराणि पदानि चान्यतोऽलुक्समासाश्चान्यतोऽत्र ज्ञापकतां यान्ति (तु. एतवै, बृहस्पति- ) ।

( ओ ) उदात्त एव मौलिकः स्वरः सन् कालेन सामासिके वृत्त आविर्भूते सत्यनुदात्तं चान्यत उदात्ताऽनुदात्ताऽन्यतरभूमिं स्वरितं चान्यतः प्रयोजयामास ।

( औ ) एवं तावत् समस्ताऽसमस्ताऽऽधारध्वनिमात्राऽऽधारेण प्रथमतो नामिके वाग्व्यवहारे परिनिष्ठिते सत्येव सकल आख्यातिको वाग्व्यवहारस्तन्मूलकतयाऽऽविर्बभूवेति च तत्तन्नाम्ना पश्चादेव तन्त्रमात्रतः प्रसिद्धिं गताः सत्यः सुप्तिङ्कृत्तद्धितवृत्तयश्चाऽपि स्वरूपतः प्रातिस्विकार्थहीनतत्तत्प्रत्ययाऽऽख्य-शब्दरूपाऽन्तत्वाऽभावे सत्याधारध्वनीयसमासाऽऽत्मकतां न व्यभिचेरुरिति चाऽत्र संग्रहो भवति ।

## (ट) प्रक्रिया-संवादनम्

मौलिकाऽऽर्यमाषीयतत्त्वाऽनुसंधानतो वैयुत्पत्तिकस्य प्रकृतिप्रत्ययीयस्य विभागस्याऽनभ्युपेयत्वे (तु. पृपृ. ५२४[e], ५२८[h]) सिध्यत्यपि कथमेतत्कोषोपनिबन्धो यथापाणिनि प्राचीनयौगिकसंज्ञा-परिभाषानुसारित्वेनैव प्रवृत्तिमान् भवतीत्युपदर्शितपूर्वम् । यया रीत्या त्वेवं सति नूतना मौलिकस्थितीया नाम प्रक्रिया पाणिनीयया प्रक्रियया संवाद्यमाना सती टिप्पणविषयतां भजते, सा खल्विदानीमत्र संक्षेपेणोच्यते—

१. अर्, इर्, उर् इत्येतेषां मौलिकाऽच्कानां त्रयाणामादेशानाम् ऋकार एव साधारणभूतः स्थानी स्यादिति कृत्वाऽऽधारध्वनयस्तदन्ततया निर्दिष्टा भवन्ति[१] ।

२. यदा कश्चिदाधारध्वनिराख्यातिकवृत्तिविशिष्टतया विवक्षितो भवति, तदाऽसौ पाणिनीयधातुसामान्येन धातवीयसंकेतपुरस्कारतो निर्दिष्टो भवति (तु. भू. ४, २, क, १), तय. पृ. ६५९[a] ।

३. यदा कश्चिदाधारध्वनिर्नामिकवृत्तिविशिष्टतया विवक्षितो भवति, तदाऽसौ क्विबन्तीकृत्यैव निर्दिष्टः सन् सुब्योगीयप्रातिपदिकाऽन्तरसामान्येनाऽऽवसानिकेन विच्छेदकाऽऽख्येन संकेतेन सनाथ्यते (तु. भू. ४, ३, क, १), तय. पृ. ६६१[b] ।

४. परःसहस्राः पाणिनीया धातवः साऽवयवा भवन्तीति सूचितचरं वादमनुसृत्य ते धातवो यथा-ऽपेक्षमवयवप्रदर्शनपूर्वं टिप्पणेषूपयुज्यन्ते, तय. पृ. ५६८[o] ।

५. एकः शब्दो वृत्तिवैशिष्ट्यभिन्नस्वरूपाऽनेकार्थवाचको न भवतीत्युक्तपूर्ववादेन पाणिनीयायाः प्रक्रियायाः संवादनार्थं धातूनां बहुप्रस्थानत्वमुपकल्प्य तज्जानां कृतामेकवृन्तगताऽनेकफलन्यायतोऽनेकार्थवाचकत्वमुपपाद्यते, तय. पृ. ४९८[e], ५२१[h], ५६८[o] ।

६. पाणिनीयायां प्रक्रियायां ये स्वतन्त्रप्रयोगाऽनर्हाश्च प्रातिस्विकाऽर्थरहिताश्च सन्तः प्रत्यया भवन्ति, ते मौलिकस्थित्यपेक्षया स्वतन्त्रप्रयोगार्हप्रातिस्विकाऽर्थवदाधारध्वनिपरिणतशब्दीयवर्णविशेषाः पृथग्-निर्देश्याऽवयवधर्माणो भवन्तीत्युपवर्णितपूर्वं वादमनुसृत्य यत्र तत्र पाणिनीयानां प्रत्ययानां वास्तविकाऽऽधारभूतास्ते ते मौलिकाः शब्दा अपि निर्दिश्यन्ते, तय. पृपृ. १९३[a], ४०६[i], ४५५[a], ४८२[b], ५०७[i], ५०९[i], ५१३[d], ५८८[e], ५९२[a,o], ५९४[h], ५९७[n] ।

७. सर्वनामान्यव्ययानि च प्रातिपदिकानि सन्ति नामाऽऽत्मकप्रातिपदिकाऽन्तरसामान्येन तत्र तत्र यौगिकवंशपरंपरितेन सनाथ्यन्ते, तय. तु. अनु, अस्मद्– ।

## (ठ) अधिपाणिनीयमनुसंधानम्

यथाऽयं कोषः पाणिनीयमनुशासनं साक्षादिवाऽधिकृत्य सर्वाङ्गीणं च तुलनात्मकं चानुसंधानं प्रयोजयेत्, तथेदानीं संग्रहेणोच्यते—

[१] पाणिनीयायाः प्रक्रियाया बहिरस्य दीर्घत्वस्यान्यथासिद्धत्वमित्यभिसंधिर्भवति ।

१. नामाख्यातोपसर्गनिपातात्मकतया चत्वारि पदजातानीति यास्कः (१, १) आह । उपसर्गान् निपातेष्वन्तर्भाव्य ( पा १, ४, ५८ ) च निपातान् स्वरादिगणसामान्येनाऽव्ययीभाव्य ( पा १, १, ३७ ) चाऽव्ययानि लुप्तसुप्कनाममात्रेण (पा २, ४, ८२) प्रातिपदिकान्तरेभ्यो भिन्नानि सन्त्यपि प्रातिपदिकान्येवेति कृत्वा च पाणिनिस्तु धातवः प्रातिपदिकानि प्रत्ययाश्चेत्येतत् तत्तत्पदस्वरूपापादकं सद् लाक्षणिकमात्रस्वरूपकपदार्थत्रितय-मित्याह । एवं तावत् प्रत्ययानां साक्षान्निर्देशानर्हत्वाद् धातवश्च प्रातिपदिकानि चेत्येतद् वर्गद्वयमेव निर्देश्यत्वमापद्यते । एवं स्थितेऽपि त्वस्मिन् कोषे लुप्तसुप्कान्यव्ययानि संगृहीतार्थवैस्पष्ट्यार्थं सुप्योगीयेभ्यः प्रातिपदिकान्तरेभ्यो विशेष्य पृथगेव निर्दिश्यन्ते ।

२. अत्रत्यानां निर्देशानां पाणिनीयाऽनुशासनीयसमन्वयस्य तावदयं प्रकारो भवति—

(अ) यदा कश्चिद् निर्देशः साक्षादिवाऽष्टाध्यायी-गणोणादि-फिट्सूत्र-वार्तिकेष्टि-सव्याप्तिकस्य सतः पाणिनीयाऽनुशासनस्य विषयो भवति, तदाऽसावनुशासनविशेषो नियमेनं सूच्यते, तय. पृ. ३[a,b] ।

(आ) यदा कस्यचिद् निर्देशीयस्य दुरूहस्य शब्दस्वरूपैकदेशस्य विषये पाणिनीयमनुशासनं न भवति, तदा तदनुसारं तस्योपपादनार्थं तदीयस्य विधानकस्य परिष्कारविशेषनिर्भर उपयोगोऽस्मदीयस्य प्रयत्नविशेषस्य विषयो भवति, तय, पृपृ. ७[e], ५०[o], ५१[b], ९१[c], १०५[j], १०६[n] ।

(इ) येषां निर्देशानां विषये पाणिनीयाऽनुशासनस्य नितान्तमभावः स्यात्, तानधिकृत्य तत्र तत्र धात-वीय-परस्मैपदात्मनेपदविकरणेडागमान्यतमीये वा प्रत्ययीये वाऽनुबन्धीये वा तैङे वा सौपे वा कार्ते वा ताद्धित वा सामासिके वा सौवरे वा सांहितिके वोच्चारणीये वा पाणिनीये प्रकरणे वार्तिकरीत्योप-संख्यानं ( संक्षे. उसं. ) क्रियते, तय. पृपृ. ५१[f], २७०[j], २८७[m], ५६०[a] ।

(ई) यदा कश्चिद् निर्देशो नैरुक्तिक्या तत्तद्वर्णलोपाऽऽगम-विकार-विपर्ययाऽऽदिस्वरूपया प्रक्रिययोपपादितो भवति, तदा पाणिनीयया प्रक्रिययाऽपि तदनुवादः क्रियते, तय पृपृ. १[u], ५६०[a] ।

(उ) यदा कस्यचिद् निर्देशस्य पाणिनीयेनाऽनुशासनेन विस्पष्टो विरोधो भवति, तदा तद्विषया स्पष्टैव सूचना क्रियते, तय. पृपृ. १३[n], ५१[j], १०५[m], २६५[p], ५३५[a] ।

### (ङ) पूर्वाऽभ्यर्हितीयं निदर्शनम्

टिप्पणगतेषु तेषु तेषु नानाविषयेषु नानास्वरूपेषु चोहापोहेषु प्रवर्तमानेषु तत्तत्पक्षबलाबलपर्यालोचनसौकर्यार्थं सर्वत्र तु. इतिशिरस्कतया पक्षतः, वैतु. इतिशिरस्कतया विपक्षतश्च पूर्वेषामभ्यर्हितानां मतानि यथावद् निदर्श्यन्ते, तय. पृपृ. १९८[h], २००[i,k], २०५[o], २०७[b,d], २६८[m], ३७७[f,b] ।

## २. तिङन्त-प्रकरणम्

### (क) धातवः

१. सर्वे धातवः प्रातिस्विकतां गतेन √ इत्येतेन संकेतेन पुरस्क्रियन्ते, तय. √अंश्, √अंह् ।

२. मा गाद् व्यर्थं धातवीयवस्त्वंश-वर्णक्रमो वैयाकुली-ग्रासतामिति सर्वे धातवो निरनुबन्धा एव निर्दिश्यन्ते, तय. √अञ्ज्, √कृ (=यक. अञ्जू, डुकृञ्) ।

३. पाणिनीय इदितः सन्तो धातव इह कृतनुमागमत्वेन निर्दिश्यन्ते, तय. √अंह् < √अहि ।

४. पाणिनीय इदित्तयाऽनिदित्तया चोभयथा निर्दिष्टिं भजमाना धातवः पार्थक्येन संख्यायन्ते । इह तु तदनुविधायि धातवीयं नुंभावाऽभावत्वं युगपदेव निर्दिश्यते, तय. अभि √दभ्, दम्भ् ।

५. पाणिनीये केचिद् धातवस्तदादेशा वाऽदन्तत्वेनाऽनुशिष्टा भवन्ति । त इह धात्वन्तरसामान्येन हलन्ततयैव निर्दिश्यन्ते, तय. √कथ्, √गण्, √धाव्, √यच्छ् ।

६. सश्रुतयः सन्तो भिन्नार्था धातवः (तु. संक्षे. बधा.) तत्स्पष्टविवेचनाऽपेक्षितस्वशक्तिसमुचितमात्रा-सद्भावाऽभावविचारतः क्वचिदेव पृथक् संख्यायन्ते, प्रायेण तु तेन तेनाऽभिप्रेतेनाऽर्थेनैव सनाथ्यन्ते, तय. तु. टिटि. √अँर्, √अर्च् > अर्कु-, √अश् (बधा.), √अश् (भोजने), √अस् (भुवि), √अस् ( क्षेपणे ) ; वैतु. √सन् [*सरणे] (पृ. ६१५[a]) ।

७. उपसृष्टा धातवो धात्वन्तरसाकक्ष्यमारोप्यमाणा यथास्ववर्णमात्रं स्वातन्त्र्येण निर्दिश्यन्ते, तय. अति √पद्, अनु √पद्, अभि √पद् । एवं स्थितेऽपि कस्को धातुः केन केनोपसर्गेणोपसृज्यत इत्यस्य समुदितपरिचयार्थमनुपसृष्ट-धातुनिर्देशाऽन्ते यथाश्रुति तदीया उपसर्गा अपि कोष्ठेऽन्तर्बध्यन्ते, तय. √अज्…[अनु°,…] । अनयैव किल द्वैधप्रक्रिययोपसृष्टमात्रतया वर्तमानानां धातूनामपि यथातद्वर्णमात्रं परामृश्यत्वेन निर्देशः संभवति, तय. √अङ्ख् । ये चाऽप्यन्ये विशेषा इह वैशेष्येणाऽवधेयास्त इमे सूच्यन्ते—

(क) यत्रोपसर्गधात्वंशयोः संधिर्न भवति, तत्र तन्मध्यगो धातवीयः संकेत एव तद्व्यवच्छेदायाऽलम्, तय. अति√पत् ।

(ख) यत्रोपसर्गधात्वंशयोः संधिर्भवति, तत्र सांहितिकाद् वर्णादनन्तरं बध्यमाने वर्तुलकोष्ठेऽन्तर्मध्यगेन सता धातवीयेन संकेतेन व्यवच्छिद्यमानौ विसंहितौ वर्णौ निर्दिश्येते, तय. अवा(व √अ)स् [ क्षेपणे ], अवे(व √इ), अभ्य(भि √अ)ञ्ज् ।

(ग) यत्र धातुरनेकधोपसृष्टो भवत्युपसर्गीयः संधिश्च न भवति, तत्र सकृद्वा भूयो वा यथापेक्षं मध्यगेन विच्छेदकाऽऽख्येन संकेतेनोपसर्गीयो व्यवच्छेदः प्रयोज्यते, तय. अति-प्र √कित्, अनु-प्र √युज्, अनु-सं-प्र √या ।

(घ) यत्र धातुरनेकधोपसृष्टो भवत्युपसर्गीयः संधिश्च भवति, तत्र सांहितिकाद् वर्णादनन्तरं बध्यमाने वर्तुलकोष्ठे विसंहितयोर्वर्णयोर्मध्ये विच्छेदकाऽऽख्यः संकेतो ध्रियते, तय. अत्यु(ति-उ)द् √ग्रह्, अन्वा(नु-आ) √भू, अनु-पर्या(रि-आ) √वृत् ।

(ङ) यत्र धातुरनेकधोपसृष्टो भवत्युपसर्गीयश्चोपसर्गधातवीयश्च संधी भवतः, तत्र प्रथमं संहितस्वरूपो निर्देशो भवति, तदन्ते च वर्तुलकोष्ठे यथापेक्षमुक्तपूर्वयोः संकेतयोरुपयोगेन समुचितोऽन्योन्यं व्यवच्छेदः प्रदर्शितो भवति, तय. अभ्युदे(अभि-उद्-आ √इ) ।

(च) यत्राऽनेकधोपसृष्टिर्भवति, तत्रोपसर्गक्रमनिर्देशस्याऽर्थक्रमनित्यस्य सतः क्वचिच् श्रुतिक्रमेण विसंवादो-ऽपि प्रतीयेत, तय. उपा(पं-आ) √गम् > आ…उपगन्तन ।

८. यत्र किंचिद् अनैपातिकं क्रियाविशेषणं (=सुबन्तविशेषात्मकं) गतीयते, तत्र तद्युक्तो धातुरप्युपसृष्ट-धातुर्निर्विशेषतया निर्दिश्यते, तय. अन्तर्-आ √धा, अन्तरि (र् √इ), अस्तमि (म् √इ) ।

९. नामधातवो यथास्वनामिकप्रकृतिमनु यथावर्णमात्रं निर्दिश्यन्ते । तद्विषय एते विशेषाः सूचनीया भवन्ति—

(क) येऽदन्तप्रकृतिकाः सन्तः क्विपि निष्पन्ना भवन्ति, ते स्वराङ्कनं विनैव निर्दिश्यन्ते, तय. √अव् > ओ॒म- > √*ओम् ।

(ख) ये णिचि निष्पन्ना भवन्ति, ते चौरादिक-हेतुमदन्यतर-णिजन्तधात्वन्तरवत् स्वराङ्कनमभजमानाः सन्त इकारान्ततया निर्दिश्यन्ते, तय. अ॒न्त- > √*अन्ति, २अन्ध॒- > √*१अन्धि ।

(ग) उक्तपूर्वद्वैविध्यविभिन्ननिष्पत्तीनि नामधात्वन्तराणि प्रायेण पाणिनीयप्रक्रिययाऽनभिमततत्क्लेशनाऽतिरेकव्यतिरेकतो[१]ऽनुवादयितुमशक्यानीति कृत्वाऽङ्गरूपता[२]मापाद्य सस्वराणि निर्दिश्यन्ते, तय. अ॒ंहस्- > √अंहोय॒, अ॒घ- > √अघाय॒, अ॒न्न- > √अ॒न्निय ।

१०. पाणिनीये येषां धातूनामन्योऽन्यमादेशादेशिभावो विधीयते, तदीय इहत्ये निर्देश एते विशेषा भवन्ति—

(क) यदैवंविधयोः कयोश्चिद् धात्वोरापातिक्या[३] भाषाशास्त्रीयया दृष्ट्या पार्थक्यमेव प्रतीयते, तदा तयोरसंबद्धधात्वन्तरद्वयसामान्येन पृथङ् निर्देशो भवति, तय. √अस् (भुवि), √भू च, √दा, √यच्छ् च, √ब्रू, √आह् च, √सृ, √धाव् च, √दृश्, √पश् च, √इ, √गा च ।

(ख) यदैवंविधयोः कयोश्चिद् धात्वोरापातिक्याऽपि भाषाशास्त्रीयया दृष्ट्या साजात्यसंनिकर्षः प्रतीयते, तदा तयोर्मध्ये यस्य भूयसी रूपसंपत्तिः स्यात्तदनुगततया चाऽवान्तरपार्थक्येन चाऽल्पीयोरूपसंपत्तेर्धातोर्निर्देशो भवति । एवं स्थितेऽपि परामर्शसौकर्यौपयिकतया तस्य यथातद्वर्णमात्रं पृथगपि धातुमात्रीयो निर्देशो भवति, तय. √इच्छ् > √इष्, √ऋच्छ् > √ऋ, √गच्छ् > √गम्, √यच्छ् > √यम् ।

११. यदा कस्यचिद् धातोस्तदीयाया रूपसंपत्तेरादिवर्णतो बहुविधत्वाद् विशदवैयुत्पत्तिकप्रतीत्यर्थं तदानुगुण्येनाऽऽदिवर्णभेदतो बहुधा निर्देशः कृतो भवति, तदा प्रतिनिर्देशविशेषं निर्देशान्तरीयः परामर्शो वर्तुलकोष्ठेऽन्तर्बध्यते, तय. √अर्च् (= √ऋच्), √अर्ह् (= √*ऋंह्) ।

१२. नवोपकल्पिता धातवः प्रायेणा[४]ऽधितारकिता भवन्ति । अथ यैरपेक्षाविशेषैस्तदीयोपकल्पना प्रयोजिता भवति, त इमे स्मर्य्यन्ते—

(क) यदा तन्मूलानि कृत्तिङ्रूपाण्युपलभ्यन्ते, तय. अ॒ंहस्- > √*अंहोय॒, अंहु॒र- > √*अंहूरि, √*अघ्, √*अङ्कूय॒, √*अप्, √*ऋंह् ।

(ख) यदा तदीयेन यथावर्णमात्रेण व्यवस्थापनेन परामर्शे सौकर्यविशेषः संजायते, तय. √*अर्, √*अर्धू, √*अर्ष् ।

(ग) यदा तद्द्वारा विशेषतो मौलिकीमार्य्यभाषामपेक्ष्य योग-संपत्तिर्भवति, तय. √*ऋ (पृ. ४७५[a]), √*मृ (पृ. ४८८[f]), √*धृ, √*क्षृ (पृ. ५७९[d]) ।

---

[१] अनभिमतस्तस्याः (=पाणिनीयायाः प्रक्रियायाः) क्लेशनाऽतिरेकस्तद्व्यतिरेकतस्तामतितरामिवाऽक्लेशयित्वेत्यर्थः ।

[२] तिङि परतः सति नामधातवीयं यदङ्गं तद्रूपतामिति भावः ।

[३] मौस्थि. अपेक्षया तत्संबन्धसंभवविच्छेदो मा भूदित्यर्थमेतद् विशेषणं दीयते ।

[४] क्वचिदनवधानात् तारकेयं नापि प्रत्ता भवतीत्येतत्सूचकमिदं विशेषणं द्रष्टव्यम् ।

१३. पाणिनीये विकरणभेदेन पृथक् संख्यायमाना धातव उपरिवक्ष्यमाणेन प्रकारेण तदीयेषु रूपेषु गणभेदतः पार्थक्येन संघटितेषु सत्स्विहैकत्रैव निर्दिश्यन्ते, तय. √इ, √कृ ।

## (ख) तैङन्यङ्गानि

१. तिङि परतोऽङ्गीभविष्यति धातौ लक्ष्यमाणमवान्तरप्रत्यय-तत्प्रकारकोपजनाऽन्यतरप्रयोजितं द्विर्वचनं वाऽन्यत् किंचित् कार्यं वाऽवान्तराऽङ्गस्य प्रयोजकमिव सत् तेन साकं निर्दिश्यते, तय. अति √ष्ठा(<स्था)>तिष्ठ (=°ष्ठ्), अभि √हन्>जिघांस(=°स्), अभि-सं √पद्>पादि ।

२. यदैवमभिनिर्वर्तुकान्यवान्तराङ्गाणि भूयांसीव भवन्ति, तदा तेषां यथास्वं रूपखण्डानामादौ निर्देशो भवति, तय. अति √तॄ>अति √तर्, अति √ततॄ, अति √तुर्, अति √तारि ।

## (ग) तैङानि रूपाणि

१. यथाश्रुतसंगृहीतानां सतां तैङानां रूपाणां मध्ये प्रथमं सार्वधातुकलकारीयाणि शुद्धवृत्तीयानि[1] रूपाणि लट्-लेट्-लोट्-लङ्-विधिलिङानुपूर्व्या निर्दिश्यन्ते, तय. अनु √ब्रू, √अस(भुवि) ।

२ यदैतानि रूपाणि गणतो भिद्यन्ते, तदा तानि प्रतिगणभेदं खण्डपार्थक्येन निर्दिश्यन्ते, तय. अति √तॄ. अनु √भृ ।

३. तत्पश्चादवशिष्टलकारीयाणि शुद्धवृत्तीयाणि रूपाणि लिङ्-लृडाशीर्लिङ्-लुङ्-लृङामनुक्रमेण निर्दिश्यन्ते, तय. अनु √वृत्, अनु √ष्ठा (<√स्था), √अस्(भुवि), √अस् (क्षेपणे) ।

४. आर्धधातुकायमानस्य लेटो रूपाणि सार्वधातुकलेड्रूपेभ्योऽवच्छिद्य लुङ्रूपैः साऽङ्गानि सन्ति तैः सहैव निर्दिश्यन्ते, तय. अति √तॄ>?अतितरः, अति···तारिषत् ।

५. अनयैव दिशा लोड्रूपाणि विधिलिङ्रूपाणि चाङ्गभेदवन्ति सन्त्यन्तरतमलकारान्तरीयरूपाण्यनु विविच्य विविच्य निर्दिश्यन्ते, तय. अप √भू>अप···भवतु, अपभूतु, अपि···भूतु, अपि···जगम्युः ।

६. वेदे लुङ्दुर्भिक्षमिव भवति । तृच एवौत्तरकालिकी तदर्थताऽविरभूदित्यभिसंधायोपलभ्यमानेव सत्यैकैतदीया श्रुतिः कृत्तयैव निरदेशि, तु. अन्वा √गम्>अन्वा-गन्तु- ।

७. उभयपदीयानां रूपाणां मध्य आत्मनेपदीयानां पूर्वभावः परस्मैपदीयानां चोत्तरभावो भवति, तय. अभि √मृश्, अभि √रक्ष् ।

८. रूपाणां पुरुषतः प्रथममध्यमोत्तमक्रमेण वचनतश्चैकद्विबहुक्रमेण व्यवस्थापनं भवति, तय. √अव्>रक्ष्, √अस् (भुवि), √अस् (क्षेपणे) ।

९. सस्वर-निःस्वररूपाणां मध्ये सस्वराणां पूर्वभावो निःस्वराणां चोत्तरभावो भवति, तय. √अव्>अवति, अवति, √अस् (भुवि) >अस्ति, अस्ति ।

१०. शुद्धवृत्तीयानि रूपाण्यनु तद्वदेव व्यवस्थापितानि सन्ति प्राक्रियिकाणि यग्-णिच्-सन्-यङन्तजातीयानि यानि रूपाणि निर्दिश्यन्ते, तय. √अञ्ज्, अति √तॄ, √अद्, अनु √शक् ।

११. यत्र तत्रोपलभ्यमानस् तिङ्रूपान्तीयः सांहितिको दीर्घभावः साकं निर्दिश्यते (तु. भू. ४, १, च, २), तय. अप √हन्>अप...हत>ता, अपि √भू>अपिभूम>मा, √अव्>अव>वा ।

---

[1] णिजाद्यभिव्यञ्जितहेतुत्वाद्यर्थविशेषानुपहितं सदप्राक्रियिकं यद् वृत्तं भवति तदेवेह शुद्धमिति विशिष्योच्यते ।

१२. तिङ्-रूपाणि परिसमाप्य तेन तेन प्रकृतेन धातुना योगमाप्नुवानानामुपसर्गाणां संग्रहो वर्गकोष्ठेऽन्तर्बध्यते, तय. √अद्···[अपि°, आ°, वि°]।

१३. विलक्षणानि रूपाणि यथास्ववर्णमात्रमप्यनुक्रम्यन्ते च ततो यथास्वधातु प्रतिपरामृश्यन्ते च, तय. अप्सन्त < √*अप्, आश्नन् < √अश् (भोजने)।

१४. अथोपसृष्टधातवीयरूपनिर्देशीयाः केचिद् विशेषा उल्लिख्येरन्—

(क) व्यवहिताऽव्यवहितोभयथाप्रयुक्तानामुपसर्गाणां विषये प्रतिस्थलं वाक्यान्वयीयायाः सौवर्याश् छान्दस्याः सांहितिक्याश् च स्थित्या भूयोभूय आलोच्यत्वाद् नितान्तं दुष्करोऽपि सन्नेष निर्णयो दुर्वारो भवति यथोपसर्गत्वेन निर्दिश्यमानं पदं वस्तुतोऽतिक्रियाविशेषणभावं सदेव संसिद्धोपसर्गभावं भवतीति (तु. भू. ४, १, त्र, ५, अ उउ)।

(ख) अव्यवहितोपसृष्टानां धातूनां रूपाणि यथाश्रुतमेव निर्दिश्यन्ते, तय. अति √कृ > अतिकरोति।

(ग) व्यवहितोपसृष्टानां धातूनां रूपाणि तु कतिभिश्चिद् माध्यमिकैर्बिन्दुभिः सह निर्दिश्यन्ते, तय. अति √तॄ > अति···तरामसि।

(घ) यदोपसर्गमात्रस्य पुनःश्रुतेः श्रावितचरस्य तिङ्-रूपस्याऽध्याहारः साऽवसरो भवति, तदोपसर्गे भूयः पृथग् निर्दिष्टे सत्यध्याहर्तव्यं तिङ्-रूपं विभिन्नं मुद्रितं सद् वर्तुलकोष्ठेऽन्तर्बध्यते, तय. अप √नुद् > अप[१](नुदस्व)[१]।

(ङ) प्रतीकगताश्चोपसर्गमात्रश्रुतयस्तत्तन्मूलत आहारितैस्तद्युक्तपूर्वैस्तिङ्-रूपैर्विमुद्रितैश्च कोष्ठबद्धैश्च सद्भिः सनाथीकृत्य निर्दिश्यन्ते, तय. अभी (भि √ई) > अभि (ईमहे)।

(च) यदोपसर्गमात्रश्रुतिः कल्पयितव्याऽऽक्षेप्ययोग्यतिङ्-रूपा भवति, तदा तदव्यवधानेन दक्षिणतो विच्छेदिकासनाथितं सद् धातवीयसंकेतमात्रं प्रदाय तदीये टिप्पणे तिङंशो निर्दिश्यते, तय. अति √-। परं प्रायेण यदा साक्षाद् निर्दिष्टस्यैव सतः कस्यचिद् धातोः किंचिद् रूपमुक्तपूर्वविधया प्राकरणिकीं योग्यतामपेक्ष्याऽध्याहार्य्यं स्यात्, तदा तद् रूपमपि कोष्ठेऽन्तर्बद्धं सत् तद्धातुरूपान्तरसंपत्त्या सह निर्दिष्टमेव भवति, तय. अप √गम् > अप (गमयन्तु)।

(छ) रूपनिर्देशाऽवसर उपसर्गगतो वोपसर्ग-धातुगतो वा संधिः कोष्ठकान्तर्बध्यमानयथास्वविच्छिन्नरूपः सन् यथाश्रुतं निर्दिश्यते, तय. अभ्यु (भि-उ)पा(प-अ) व √हृ > अभ्युपावहरामि।

## ३. सुवन्त-प्रकरणम्

### (क) वैशेषिकाः संकेताः

१. सर्वेषां सुबर्हाणां प्रातिपदिकानामन्ते तत्प्रातिस्विकसंकेततया दीयमानो विच्छेदकसंकेतस्तेषामन्यतो धातुभ्योऽन्यतश्चाऽव्ययेभ्यः पृथक्करणः सन् प्रयोगे तदीयस्य सुप्प्रत्यययोगस्याऽवश्यंभावित्वं सूचयेत्, तय. अंश-, अंशु-, अग्नि-, अग्नायी-, आग्नेय-, अग्नि-दग्ध-।

२ यदा किञ्चित् सुबर्हतयाऽप्रसिद्धचरं प्रातिपदिकं तथात्वेन निर्दिश्यते, तदा तदन्त्यो विच्छेदकस्तारकया सनाथ्यते, तय. २श्वस्-*।

---

[१] अत्र मूर्धन्या संख्याऽऽवृत्तित्रिकं सूचयति।

३. अलुक्-समासीयं पूर्वपदं पृथगवान्तरप्रातिपदिकीकृत्य स्वरेण च विच्छेदकेन च विना निर्दिश्यते, तय. अग्र- > अग्रे ।

४. व्यवहितपदश्रुति सामासिकं प्रातिपदिकं $\phi$ इत्येतेन संकेतेन पुरस्क्रियते (तु. भू. ४, २, ग, १४, ग), तय. अप-घ्नत्- -घ्नन् ऋ ८,४३,२६ $\phi$, $\phi$अप-दुहत् ।

## (ख) कृद्-व्यवस्थापनम्

१. धातोश्च तज्जस्य कृत्-प्रातिपदिकस्य च मध्ये सति तद्धात्वे तद्धातवीयतिङ्-रूपाणि विहाय नान्यत् किमपि व्यवधायकं भवति, तय. अंह्योयू-, अङ्कूयत्-, अभि-श्वसत्-, अपि-हीन- ।

२. मुख्यधात्वनुगताऽवान्तरीकृतधातुजं प्रातिपदिकं मुख्याऽवान्तरोभयप्रकारकधातवीयरूपसर्वस्वं परिसमाप्य तदुपरि निर्दिश्यते, तय. अनु √गम् > गच्छ् > अनु-गच्छन्ती-, अति √तॄ > अति √तर् > अति-तर- ।

३. बहुत्वे सति धातुविशेषजानि कृत्-प्रातिपदिकानि यथास्ववर्णमात्रं निर्दिश्यन्ते, तय. √अव् > अव्-, अव-, ऊति-, ऊम- ।

४. गणभावेन निर्दिष्टानां सतां प्रातिपदिकानामवान्तरीकृताः प्रभेदा मुख्यैः प्रभेदैः साकं वा यथास्ववर्णमात्रं च यथाप्रातिस्विकरूपखण्डशीर्षण्यतया च वा निर्दिश्यन्ते[१], तय. अदस्- > अमी-, अमु-..., अस्मद्- > अस्म-, अस्मद्-, अहम्, मात्र...; अहन्- > अह-, अहन्-, अहर्-, अहस्- ।

५. यथावर्णमात्रमनुक्रमस्य कृन्मात्रसामान्यात् सुबर्हाणां प्रातिपदिकानां सतां कृतां पार्श्वत एवाऽसुबर्हाणामव्ययानां सतां कृतामपि निर्देशो भवति, तय. अनु-दृश्य, अभि-दुह्य, अभि-द्रुह्य ।

## (ग) तद्धित-व्यवस्थापनम्

१. ताद्धितानि प्रातिपदिकानि यथास्वं नामिकप्रकृतीनामुपरिष्टादव्यवधानेन यथावर्णमात्रं निर्दिश्यन्ते, तय. अग्नि- > अग्नि-मत्-, आग्नेय-; २अ-दिति- > अदिति-त्व-, आदितेय-, आदित्य- ।

२. येषां तद्धितानां स्वनामिकप्रकृतिभिराद्यक्षरसामान्यं भवति, ते तत्पूर्वपदैः समासैः सस्थितयः सन्तस् तदीयस्तम्भाऽपेक्षयैकया मात्रया व्यवहिते स्तम्भान्तरे निर्दिश्यन्ते, तय. १अग्नीषोम- > अग्नीषोमीय-; अग्र- > १अग्रिय-, २अग्रिय-, अग्रय- ।

३. येषां तद्धितानां स्वकृतप्रकृतिभिराद्यक्षरेण वैषम्यं भवति, ते तत्प्रकृतिकेभ्यः समासेभ्यः प्रागेव तदीयस्तम्भाऽपेक्षया मात्राद्वयेन व्यवहिते स्तम्भान्तरे निर्दिश्यन्ते, तय. अतिथि- > आतिथ्य- ।

४. यदा तु विषमाऽऽद्यक्षरस्याऽपि सतस्तद्धितस्य नामिकी प्रकृतिः सामासिकीं पूर्वपदतां नोपेयात्, तदा तन्निर्देश एकया मात्रया व्यवहिते स्तम्भ एव क्रियते, तय. अग्रयण- > आग्रयण- ।

५. ताद्धितानां तद्धितानां विषयेऽयं सामान्यो नियमो भवति, यथा यस्य या प्रकृतिस्तस्य तदपेक्षयैकया मात्रया व्यवहिते स्तम्भे निर्देशः स्यादिति, तय. अ-दिति- > आदित्य- > आदित्य-वत्- ।

## (घ) समास-व्यवस्थापनम्

१. माध्यमिकविच्छेदकान्तरसमन्वितानि सन्ति सामासिकानि प्रातिपदिकान्यन्तमात्रविच्छेदकितसुबर्हप्रातिपदिकान्तरमात्रात् पृथक्कृतानि स्युः, तय. अघ-रुद्-, अघ-शंस-, अघ-हार- ।

---

[१] उपरितनात् खण्डात् प्रभृति णत्व-तदभावाभ्यां च षत्व-तदभावाभ्यां च लक्षितानि प्रातिपदिकान्यप्यनयैव दिशा मुख्याऽवान्तरीकृत्य निर्देक्ष्यन्ते, तय. धनुर्, ष्, स्,:-, पूषण्, न्- ( वैतु. इह अर्यमन्- ) ।

२. समासेऽसमस्तप्रातिपदिकान्तरेण समस्य समासान्तराऽवयवतामुपेयुषि माध्यमिकविच्छेदकस्तदीय-पूर्वोत्तरान्यतरपदताया अनुरोधात् तदन्त्यो वा तदाद्यो वा यथायोगं संजायते, तय. अघशंस-हन्-, *अधि-कृष्णाजिन- ।

३. समासद्वयेन समासान्तरे जन्यमाने तत्समासान्तरमात्राऽपेक्षया मध्ये विच्छेदको दीयते, तय. अघशंस-दुःशंस-, अजात-पुत्रपक्षा- ।

४. स्वपूर्वपदीयेष्वाद्यक्षरेण वैषम्यभाक्षु तद्धितेषु यथायथं निर्दिष्टेषु सत्सु समासा यथावर्णमात्रं निर्दिश्यन्ते, तय. अतिथि- > अतिथि-ग्व, अतिथि-पति- ।

५. प्राथमिकः समासः स्वपूर्वपदापेक्षयैकया मात्रया व्यवहिते स्तम्भे निर्दिश्यते, तय. १असुर- > असुर-क्षयण- ।

६. समासजः समासः स्वसमस्तपूर्वपदापेक्षयैकया मात्रया व्यवहिते स्तम्भे निर्दिश्यते, तय. अग्निष्टोम-प्रायण- ।

७. यदा समस्यमानयोः पूर्वोत्तरपदयोरन्त्याऽद्यवर्णयोरतयोरन्यतरस्मिन् वा सांहितिको विकारो भवति, तदाऽसौ तन्मध्यप्रवेशिते वर्तुलकोष्ठे यथायथं निर्दिश्यते, तय. अग्न्यु(ग्नि-उ)पस्थान-, अक्षितो(त-ऊ)ति-, अती(ति-इ)त्वरी-, अनु(स>)षत्य- ।

८. यदा पूर्वपदाऽन्त्यो दीर्घः स्वरः पौर्वकालिकह्रस्वमूलो भवति (तु. भू. ४, १, च, २ उउ.), तदाऽसौ ह्रस्वो यथापरिचितपरिभाषं सुगमय्य निर्दिश्यते[1], तय. अ(क्ष>)क्षा-नह्-, अ(जि>) जी-गर्त-, अ(ति>)ती-काश-, अ(नु>) नू-वृत्- ।

## (ङ) स्त्रीलिङ्गक-व्यवस्थापनम्

१. पाणिनीयायां प्रक्रियायां स्त्रीलिङ्गकमात्रतया सिषाधयिष्यमाणानि सन्ति दीर्घान्तानि प्रातिपदिकानि तथैव निर्दिश्यन्ते, तय. अर्हणा- ।

२. यानि प्रातिपदिकानि पाणिनीये संभवल्लिङ्गान्तरतया शिष्यमाणानि सन्त्यप्युपलब्धस्त्रीलिङ्गकमात्रश्रुतीनि भवन्ति, तानि वर्तुलकोष्ठित-कोणपुङ्गान्यतरसरूपसंकेतसहकृताऽस्त्रीपरकपूर्वरूपोपकल्पनानि कृत्वा निर्दिश्यन्ते, तय. अश्युमा(न>) ना-, अति-चर(त्>)न्ती- ।

३. स्वराऽभेदेन लिङ्गपर्यायतोऽकाराऽऽकारान्यतराऽन्ततयोपलब्धश्रुतीनि प्रातिपदिकानि प्रार्धविराम-विविक्तोभयप्रकारसाधारणाऽन्त्यविच्छेदकतया समुह्य निर्दिश्यन्ते, तय. अघ,घा-, २अज,जा-, अज्ञान,ना- ।

४. इवर्णोवर्णान्यतराऽन्तानि प्रातिपदिकान्यपि नान्तरीयोक्तपूर्वयाऽवर्णान्तपरया दिशैव निर्दिश्यन्ते, तय. अराति,*ती-, अभि-दिप्सु,प्सू-, अवस्यु,स्यू- ।

५. उक्तपूर्वव्यतिरिक्तानि सर्वाण्यपराणि स्त्रीलिङ्गकानि प्रातिपदिकानि यथास्वाऽनुगताऽस्त्रीपरकपूर्वरूपीय-स्तम्भापेक्षयैकया मात्रया व्यवहिते स्तम्भान्तरे तत्तद्रूपसुवारसंभेदनिवृत्त्यर्थं पृथग् निर्दिश्यन्ते । एतानि तावत् प्रविभज्य किंचित् सूच्येरन्—

(अ) यान्याकारान्तानि सन्त्यर्थतश्च योगतश्च विशिष्टानि स्युः, तय. अघा-, २अषाढा- ।

---

[1] मूआ. परिभाषया त्वेतद् दीर्घत्वं यथायोगम् अर्, इर्, उर् इत्येतदन्यतममूलकं भवति (तु. भू. ४, १, अ, ५, अ उउ.

(आ) यानि दीर्घेकारान्तानि सन्त्यकार-हलन्यतरान्ताऽस्त्रीपरकपूर्वरूपाणि स्युः, तय. १अ-देव-> अदेवी-, असत्- > असती-, आर्किन्- > आर्किणी- ।

(इ) यानि दीर्घेकारान्तानि सन्ति भिन्नस्वर-ह्रस्वेकारान्त-मौलिकपूर्वरूपाणि स्युः, तय. अक्षि->अक्षी-, अर्षणि- > अर्षणी- ।

(ई) यानि दीर्घेकारान्तान्यभिन्नस्वर-ह्रस्वेकारान्त-मौलिकपूर्वरूपाणि सन्त्यन्यथा कथञ्चित् सुवेचानि स्युः, तय. अरुणि- > अरुणी- ।

(उ) यानि दीर्घेकारान्तानि सन्त्यृकारान्ताऽस्त्रीपरकपूर्वरूपाणि स्युः, तय. अवितृ->अवित्री-, अनु-ष्ठातृ- > अनुष्ठात्री- ।

## (च) कालिकलकारार्थक-सुवर्हकृद्-निर्देशिका

क्त-क्तवसु-कानच्-शतृ-शानच्-स्यतृ-स्यमानाऽन्यतमाऽन्ताः सुवर्हाः कृतः सांप्रतिकेषु कोषेष्वाख्यातिक-प्रकरणे लकाररूपाऽनुपदं निर्दिश्यमानाः सन्त इह तावत् सुवर्हकृदन्तरसामान्येन यथावर्णमात्रं निर्दिश्यन्ते, तय. अप√रुध् > अप-रुद्ध-, अप-रुध्यमान- ।

## (छ) क्रियाविशेषणंभावुक-सुवर्हप्रातिपदिक-निर्देशिका

येषां सुवर्हाणां रूपविशेषाः क्रियाविशेषणंभावुका भवन्ति, तेषां सुवर्हान्तरनिर्विशेषं निर्देशो भवति, प्रस्तुतवैशिष्ट्यं च तदीयं यथावट् टिप्पण्यते, तय. २अनु-काम- > -मम्, अ-विद्वेष- > -षम् ।

## (ज) अयौगिक-सुवर्हप्रातिपदिक-निर्देशिका

यानि निमित्तान्यादाय कानिचित् सुवर्हाणि प्रातिपदिकानि कृद्बाह्यीकृत्य स्वतन्त्रशब्दतया यथावर्णमात्रं निर्दिश्यन्ते, तानीमानि सूच्येरन्—

१. यदा कृज्जातीयस्य सुवर्हस्य प्रातिपदिकस्य व्युत्पत्तिरज्ञाता वा दुरूहा वा संदिग्धा वा मूलाऽऽर्यभाषीया सत्यप्रसिद्धा वा स्यात्, तय. अनस्-, २अन्य- ।

२. यदा कृत्तद्धितसमासाऽन्यतमजातीयं सुवर्हं प्रातिपदिकं वर्णविकारतो यौगिकव्यवस्थितिकतया दुरीक्षमिव संजायेत, तदेवंविधे स्वतन्त्रनिर्देशे क्रियमाणे सति समुचिता प्रतिपरामर्शिकाऽपि क्रियते, तय. ऊति-, ऊम-, सन-, आग्नेय-, आतिथ्य-, अग्ना-विष्णु- ।

३. यदा समासत्वेनोपकल्प्यमाने सुवर्हे प्रातिपदिकेऽवयवतः संशयो भवति, तय. अनीक-, अभीक-, अनर्विश्- ।

४. अथ गणतो निर्देशभाजां सुवर्हाणां प्रातिपदिकानां येऽवान्तराः प्रभेदा भवन्ति, ते प्रत्येकं प्रतिपरामर्शिकया सनाथ्यैवं स्वतन्त्रतयाऽपि निर्दिश्यन्ते, तय. अमी-, अमु-, अह-, अहर्-, अहस्- ।

५. पूर्वपदतया समासान्तरमननुप्रविष्टः सन् नञ्-समासश्च प्रथमस्तम्भीयतया स्वतन्त्रं निर्दिश्यते, तय. अ-पति-, अ-पतिघ्नी-, अ-जात- ( वैतु. अजात-शत्रु- ) ।

## (झ) विसंख्यात-सुवर्हप्रातिपदिक-निर्देशिका

१. स्वर-भेदेन श्रूयमाणानि सवर्णानि सुवर्हाणि प्रातिपदिकानि विसंख्याय निर्दिश्यन्ते, तय. १अपस्-, २अपस्-, १अ-मेनि-, २अ-मेनि-, १अरुणी-, २अरुणी- ।

२. अथ स्वरभेदव्यतिरिक्तकारणान्तरप्रयोजितार्थभेदप्रदर्शनौपयिकतयाऽपि सुबर्हप्रातिपदिकविसंख्यानमाद्रियते, तय. १अप्-, २अप्-; १अरति-, ?२अरति-; १अरत्नि-, ?२अरत्नि-; २असुर-, ३अ-सुर- ।

## (ञ) सौपरूप-निर्देशिका

१. सुब्योगे प्रातिपदिकस्याऽन्त्यमेकाज्मात्रं तत्पूर्ववर्तिनः प्रातिपदिकावशेषस्य संग्राहकेण सता विच्छेदकेन पुरस्कृतं सन्निर्दिश्यते, तय. अंश- > -शः, -शम्, -शस्य ।

२. एकाज्मात्रकाणां प्रातिपदिकानां सुब्योगीये निर्देशे तावद् विच्छेदकेन संग्राह्यस्य पूर्ववर्तिनः प्रातिपदिकांऽशस्यैवाऽभावात् तत्प्रयोजनाभावाद् तत्प्रयोगाभावो भवति, तय. सत्- > सत्, सन्तः, सन्तौ ।

३. प्रातिपदिकाऽपेक्षया स्वरतो विशेषे प्रदर्शयितव्ये सत्येव सुब्योगीये निर्देशे स्वराङ्कनमाद्रियते, तय. सत्- > सतः, सताम्, सद्भ्यः ।

४. सौपानि रूपाणि संघटितपरामर्शिकासौकर्याऽनुरोधेन यथावर्णमात्रं न तु यथाव्यक्ति वा यथाविभक्ति वा निर्दिश्यन्ते, तय. अंशु- > -शवः, -शवे, -शुः; अग्र,ग्रा- > -ग्रम्, -ग्रा, -ग्राः, -ग्रान् ।

५. [1]गाणप्रातिपदिकाऽवान्तरप्रातिपदिकीयानि सौपानि रूपाणि यथोक्तपूर्वसामान्यव्यवस्थं पार्थक्येन निर्दिश्यन्ते, तय. अदस्- > अमी- > -मी, -मीभ्यः, -मीषाम् ।

६. साऽऽम्रेडितानि सुब्-रूपाणि माध्यमिकविच्छेदकवन्ति सन्ति यथोक्तपूर्वसामान्यव्यवस्थं पार्थक्येन निर्दिश्यन्ते, तय. अंशु- > - शुःऽ-शुः; अंहस्- > -हसःऽ-हसः, अग्नि- > -ग्निम्ऽ-ग्निम् ।

## (ट) उत्तरपदत्व-निर्देशिका

एकैककस्य सुब्-रूपीयस्य खण्डस्याऽन्ते वर्गकोष्ठेऽन्तस् तत्तत्प्रकृतप्रातिपदिकोत्तरपदाः समासाः पूर्वपदतो विमुद्रं निर्दिश्यन्ते, तय. अंशु- ··· [ °शु- अन्°, उप°, तृप्त° ] ।

## ४. अव्यय-प्रकरणम्

१. अव्ययमात्रं वैशेषिकसंकेतविरहितं सद् यथास्ववैशेषिकसंकेताभ्यां धातोश्च सुब्योगीयात् प्रातिपदिकाच्च सुवेचं भवति, तय. अथ, अनु, √अद् > अत्त्वा, अत्तवे; अनु √दिश् > अनु-दिश्य, अधरात् ।

२. त्त्वान्त-तुमुन्नन्तप्रकारकाणि कृज्जातीयान्यव्ययानि सांप्रतिकेषु कोषेष्वाख्यात-सविषयीक्रियमाणान्यपि सन्तीह सजातैः सुब्योगीयैः कृदन्तरैः सस्तम्भीकृत्य तत्साधारण्येन यथास्ववर्णमात्रं निर्दिश्यन्ते, तय. √अद् > अत्तवे, अत्तुम्, अत्त्वा ।

३. अनूपचितकायानि सन्ति कृज्जातीयान्यव्ययानि यथास्वप्रकृतिभूताऽव्ययान्यनु मात्रयैकया व्यवहिते स्तम्भान्तरे निर्दिश्यन्ते, √ अद् > अत्त्वा > अत्त्वाय ।

---

[1] गणभावेन निर्दिष्टे तद्धितो द्रष्टव्यः ।

४. यान्यव्ययानि स्वप्रकृतिभूतेभ्यः सुब्योगीयेभ्यः प्रातिपदिकेभ्यः स्वरूपतो नाऽतिविप्रकृष्टानि स्युः, तानि तदुपरि तदवान्तरप्रातिपदिकतया पृथङ् निर्दिश्यन्ते, तय. अधर- > अधरात् ।

५. समासाऽवयवतां प्रपन्नानामव्ययानां विषय एते विशेषा अवधेया भवन्ति—

(क) तत्तदव्ययपूर्वपदतया विशिष्टानां धातूनां च प्रातिपदिकानां च तत्तदव्ययाऽनधीनतया यथास्ववर्णमात्रं निर्देशा भवन्ति, तय. अनु √पत् (गतौ), अनु-पथ-, अभि √ रुह्, अभि-रूप- ।

(ख) मूलतः समासाऽवयवभूतानि सन्ति प्रतीकगतत्वेन पृथगिव श्रूयमाणान्यव्ययानि यथोक्तपूर्वसामान्यव्यवस्थं वर्तुलकोष्ठेऽन्तःप्रदर्शितैः सद्भिर् मौलिकैरुत्तरपदैः सनाथ्य निर्दिश्यन्ते (तु. भू. ४, २, ग, १४, ङ), तय. अभी(भि √ई) > अभि(ईमहे) ।

(ग) यदा समस्तस्य कृज्जातीयस्याऽव्ययस्योपसर्गांशो मूले व्यवहित इव श्रूयते, तदा तस्य निर्देशः ϕइत्येतेन संकेतेन पुरस्क्रियते (तु. भू. ४, २, ग १४, ग), तय. अभि-समे(मृ-आ √इ) > ϕअभि-समेत्यं ।

(घ) मूलत उत्तरपदविधया समासाऽवयवतां भजदपि सद् निहतंभावुकमव्ययं यथास्ववर्णमात्रं स्वातन्त्र्येण निर्दिश्यते[1], तय. इव, उ, च, चित् ।

(ङ) यदा तूक्तपूर्वं निहतंभावुकमव्ययमव्ययान्तरस्याऽन्ते श्रूयते, तदा तद् यथासामान्यव्यवस्थं समासाङ्गभूतमेव निर्दिश्यते, अथ>अथो ।

(च) एवं सत्यपि यदा तु निहतंभावुकमव्ययमुपसर्गभावुकस्याऽव्ययान्तरस्याऽन्ते श्रूयते, तदा तत् ततो व्यवच्छिद्य पृथगेव निर्दिश्यते येनोपसर्गोपसृष्टसंबन्धोऽव्यवहित इव प्रतीयेत, तय. अपे(प √इ) > अप(एतु) < अपो( एतु ), अप √स्यक्ष् > अप ··· स्यक्ष < अपो ··· स्यक्ष, अपे( प √ई )ज् > अप ··· अपेजते < अपो ··· अपेजते ।

६. अव्ययानां विसंख्यानेऽयं वक्ष्यमाणो निमित्तोद्देशोऽवधेयः—

यदा तानि सस्वर-निःस्वरोभयथा श्रूयन्ते, तय. कम्, कम् , यथा, यथा ।

७. समस्तानामव्ययानां यथासामान्यप्राप्ति द्वेधा निर्देशो भवति । यथास्ववर्णमात्रं च पूर्वपदीयप्रतिपरामर्शिकासहकृतं यथोत्तरपदनिर्देशं च, तय. सम(मृ √अ)र्धि > समर्धयित्वा इति च अर्धयित्वा सम्° इति च ।

## ५. स्वर-प्रकरणम्

### (क) आधारग्रन्थीयं स्वराङ्कनम्

यथोपलम्भमेतद्ग्रन्थप्रकृतविभागीयाऽऽधारग्रन्थानां मध्ये सप्तसु तावत् साकल्येन स्वरोऽङ्कितो भवति । त एते ऋग्वेदो माध्यन्दिन-यजुर्वेदः काण्व-यजुर्वेदस्तैत्तिरीय-यजुर्वेदो मैत्रायणीय-यजुर्वेदः कौथुम-सामवेदः शौनकीया-

[1] एतान्यव्ययानि सर्वाणि तैत्तिरीये पदपाठे, पदपाठान्तरेषु च इव-व्यतिरिक्तानि, पृथक्-पदतया पठ्यन्ते।

ऽथर्ववेदश्च सन्ति । अपरेषां मध्ये तु खिलसूक्तेष्वंशतः काठक-यजुर्वेदे च क्वचित् क्वचित् स्वराङ्कनमुपलभ्यते । कपिष्ठल-कठ-यजुर्वेदस्य जैमिनीय-सामवेदस्य चाऽद्यावधि निःस्वरमेव संस्करणमभूत् ।

## (ख) रेखीयो ग्रन्थः प्रकारः

१. ऋग्वेदे तैत्तिरीय-यजुर्वेदे चोदात्तो नाम मुख्यः स्वरः स्वतोऽनङ्कितः सन्नन्यतोऽधोरेखितप्रागनुदात्ततोऽन्यतश्चोर्ध्वदण्डित-स्वरितितोत्तराऽनुदात्ततो विज्ञप्तो भवति, तय. अग्नये । स्वरितोत्तरवर्त्यनुदात्तमात्रमप्याऽधोरेखितोदात्त-स्वरितान्यतरोदयानुदात्तमनङ्कितं भवति, तय. अग्निमीळे पुरोहितम् (ऋ १, १, १) इत्यत्र पु° इत्येतद्वैपरीत्येन °ळे इति । अस्य खलु स्वरितोत्तरस्याऽनङ्कितस्य सतोऽनुदात्तस्योदात्ततयाऽऽभासो मा भूदित्यर्थं स्वरितस्य च तदुपरितनस्योदात्तस्य च मध्ये संकेतविशेषौ स्थाप्येते । तथाहि । यदा स्वरितो ह्रस्वो भवति, तदा १ इति, यदा चाऽसौ दीर्घस्तदा तस्मिन् स्वयमप्यधोरेखिते सति ३ इति, तय. अप्स्व १ न्तः ( ऋ १, २३, १९ ), क्वे ३ दानीम् (ऋ १, ३५, ७) । उदात्त-स्वरितान्यतरोदयोऽनुदात्तोऽधोरेखितो भवतीति सूचितमिवाऽधस्तात्, तय. अग्निम् कन्या । मन्त्राऽर्धादौ वा वाक्यादौ वा वर्तमानमनुदात्तमात्रमङ्कितं भवति, तय. अनुकामम् ( ऋ १, १७, ३) ।

२. अयमङ्कनप्रकारः शौनकीयाऽथर्ववेदे माध्यन्दिन-यजुर्वेदे काण्व-यजुर्वेदे यथामूलकोशं कपिष्ठलकठ-यजुर्वेदे चाऽपि लब्धप्रचारोऽभूत् । एवमपि तावद् उदात्ताऽनुदात्तयोर्विषये सामान्ये सत्यपि स्वरितस्य विषये सन्त्येव बाह्वृचतैत्तिरीयेतरग्रन्थीयाः केचिद् विशेषाः, तथाहि—

(अ) शौनकीयेऽथर्ववेदे स्वरितादुपरि ऽ इति संकेतो भवति, तय. वीर्यऽम्, सर्वा ह्यऽस्मिन् ( ११, ८, ३२), ज्येष्ठवरो ऽऽभवत् (११,८,१) । उदात्तादुपरितनः स्वरितस्तु बाह्वृचवत् साधारणेनोर्ध्वदण्डेनैव संकेत्यते, तय. तं ध्यूर्णुवन्तु सूतवे (१,११,२) । उदात्ते परतो ह्रस्वात् स्वरितादूर्ध्वदण्डितात् सत उपरि १ इति संकेतो भवति, तय. अप्स्व १ न्तः (१, ४, ४) । तस्यैव दीर्घस्य सतस्तु संकेतो बाह्वृचनिर्विशेषो भवति, तय. विकेश्यो ३ विघ्नताम् (१, २८, ४) ।

(आ) माध्यन्दिन-यजुर्वेदे ᒪ इत्येतेनाधो-दीर्घहस्तकेन स्वरितः साधारण्येन संकेत्यते, तय. दिवीव (६, ५), वीर्यमसि (१९,९), आस्येन (२, ११) । उदात्ते परतस्त्वसावधस्त्रिशूलकेन संकेत्यते, तय. वीर्यं मयि (१९,९), अप्स्वन्तः (९,६) योऽस्मान् (१, २६) । यदा तावत् स्वरितोदात्तयोर्मध्ये विरामो व्यवधत्ते, तदाऽधोदीर्घहस्तकस्यैवोत्सर्गो भवति, तय. वरूथ्यः । वर्धुः (३,२५) । यजुरादौ वाऽर्धर्चादौ वा वर्तमानश्चोदात्तादुपरितनभूतश्च स्वरितस्तु साधारणेनोर्ध्वदण्डेनैव संकेत्यते, तय. त्र्यम्बकं यजामहे (३,३०), अर्त्रं देवं त्र्यम्बकम् (३,५८), उर्व्या व्यचौत् (१२,१) ।

(इ) काण्व--यजुर्वेद उदात्ते परतः स्वरितमात्रमधोरेख्यत इत्येव विशेषः[1], तय. अप्स्वन्तः (१०, २,३), योऽस्मान् (१, ९, ४) प्रसवेऽश्विनोः (१,३,६) ।

(ई) कपिष्ठलकठ-यजुर्वेदेऽन्यथा सर्वथा काण्व-यजुर्वेदेन स-प्रक्रिय एव वर्तमान उदात्तोदयोऽधोरेख्यमाणो ह्रस्वस्वरितो दीर्घतामप्यापाद्यत इत्यस्त्येवाऽणीयान् विशेषः, तय. उर्वान्तरिक्षम् (१,२), अप्स्वान्तः (४८,४) ।

---

[1] अस्मदीये मूलकोषे माध्यन्दिनप्रकारीयः संभेदोऽपि लक्ष्यते । एतच्छाखीयत्वेनाऽनुदात्तभूमिरवारतीयस्याऽधोवर्तुलकस्योपलम्भोऽपि परैः सूचितो भवति (द्र. ZDMG ४९, १५१) ।

## (ग) संख्याङ्कीयः सिद्धः प्रकारः

सामवेदे मूर्धन्यसंख्याऽऽत्मको विभिन्नः किल सिद्धः प्रकारः प्रवर्तते । एतदीया मुख्या विशेषा इमे सन्ति[1]—

१. सामान्येनोदात्तस्वरितानुदात्ता यथाक्रमं मूर्धन्यस्थितिभिः १, २, ३ इत्येताभिः संख्याभिः ससंकेता भवन्ति तय. अ॒ग्नि॑ वैः (१, २१)।

२. परंपरिताऽनेकोदात्तमध्ये प्रथम एव लब्धसंकेतो भवति, तय. आ तु (१, १६७), स्पार्हं तद् आ (१, २०७), नं हि (१, २४१)।

३. आवसानिक उदात्तः १ इत्यस्य स्थाने २ इत्यनेन संकेत्यते, तय. वयम् (१, १४)।

४. आवसानिकपरंपरिताऽनेकोदात्तमध्ये प्रथम एव नान्तरीयोक्तपूर्वया दिशैव च संकेत्यते, तय. महाँ हि षः (२, ६६), उतं द्याम् (२, १५६), नान्यं त्वत् (२, ३३४)।

५. अनुदात्तव्यवहितयोरुदात्तयोर्मध्ये प्रथमः २ इत्यनेन संकेत्यते, तय. अग्नं आ याहि (२,१०)।

६. यदा परंपरिताऽनेकोदात्ताऽनुग उदात्तोदयोऽनुदात्तो भवति, तदा परंपरितप्रथम उदात्तः २उ इत्येवं संकेत्यते, परश्च १ इत्येवम्, तय. शंयोरभि (१, ३३) वना त्वं यन्मातृः (१, ५३)।

७. परंपरितानेकोदात्ताऽनुगः स्वरितः २ इत्यस्य स्थाने २र इत्येवं संकेत्यते, तय. नि होता (१, १), निर्गा अहन्नत् (१, ५८५)।

८. यदा उदात्तभूमिः स्वरित आवसानिको वाऽनुदात्तोदयो वा भवति, तदाऽसौ २र इत्येवं संकेत्यते, तय. उक्थ्यम् (२, १११६), मनुष्येभिः (१, ७१), नीव (२, १००६), देव्येतु (१, ५६)।

९. उदात्तोदय उदात्तभूमिः स्वरितः २ इत्येवं संकेत्यते प्लुतिं चाऽऽपाद्यते, तय. पाह्यू३ तं द्वितीयया (१, ३६), अभ्यो३ दिशः सूरः (१, १२८)।

१०. उदात्त-स्वरिताऽन्यतरोदयपरंपरिताऽनेकाऽनुदात्तमध्ये चरम एव संकेत्यते, तय. समुद्रम्, इन्द्राम्यो३ दिशः (१, १२८)।

११. स्वरितस्याऽनुगतया वर्तमानमनुदात्तमात्रं न संकेत्यते, तय. चित्रं राधो अमर्त्य (१, ४०)।

१२. आवसानिकाऽनुदात्तोदयान्यतरस्वरितोदयोऽनुदात्तः ३क इत्येवं संकेत्यते (इह तु. अधस्तनम् ८मीयमुदाहरणम्)।

## (घ) प्रथमः प्राक्तनो रेखीयः सिद्धः प्रकारः

अथ यो मुख्यस्योदात्त-स्वरस्य साक्षादिव संकेततः सिद्धंभावुकः प्राक्तनो रेखीयः प्रकारो मैत्रायणीय-यजुर्वेदे, काठक-यजुर्वेदे, पैप्पलादाऽथर्ववेदे चोपलभ्यते, स एवात्र संगृह्यते—

१. मैत्रायणीय-यजुर्वेदे काठक-यजुर्वेदे चोदात्त ऊर्ध्वदण्डयते, तय: अग्निः ।

२. उदात्तभूमेः स्वरितस्य कृते चोभयत्राऽधोभुग्नकः ‿ इति सामान्यः संकेतो भवति, तय. दिवीव (मै १, २, १४), व्यसृपः (काठ ७, १२), शुण्ठोऽधि० (मै २, ६, १३), क्व ।

---

[1]. उदाहरणीयस्थलसंकेताः कौथुमसामवेदीया भवन्ति ।

३. मैत्रायणीय-यजुर्वेदे सन्नतरो[1]ऽधोरेख्यते (तय. अ॒ग्नि-), काठक-यजुर्वेदे चासावधोदण्डेन संकेत्यते[2], तय. अ॒ग्नि- ।

४. उदात्तोदयस्य स्वरितस्य विषयेऽपि चैतयोः शाखयोर्मध्ये भवत्येव कियानपि वि-संवादः । तथाहि । मैत्रायणीयाः ३ इत्यङ्कं ततः पुरस्तात् प्रयुञ्जते, कठाश्च तं स्वरितमेव काण्वसाधारण्येनाऽधोरेखयन्ति[3], तय. प्र॒सु३वे॒-ऽश्विनोः (मै १, २, १५), वैतु. प्रसवेुऽश्विनोः (काठ २, ९) ।

५. स्वरितीयह्रस्व-दीर्घ-भेदप्रयोजितस्तु नेहोभयत्र कोऽप्यवान्तरविशेषो भवति ।

६. मैत्रायणीया अनुदात्तभूमेः स्वरितस्य कृते सामान्येन तिरोरेखां प्रयुञ्जते, तय. धियः ।

७. सन्नतरोदयत्वे त्वस्याऽनुदात्तभूमेः स्वरितस्य कृते त ऊर्ध्वत्रिपुण्ड्रकं प्रयुञ्जते[4], तय. 'प्र॒थ॒मः,' 'प्र॒सु३वे॒-ऽश्विनोः (मै १, २, १५) ।

८. कठा अनुदात्तभूमेः स्वरितस्य कृते सामान्येनाऽधोबिन्दुना निर्वाहं पश्यन्ति[5], तय. धियः ।

९. पैप्पलादाऽथर्ववेदेऽप्युदात्तीय ऊर्ध्वदण्डः प्रयुज्यते सन्नतरश्च काठक-यजुर्वेदवदधोदण्डेन संकेत्यते च, तय. दा॒ता ।

१०. यत्तत्राऽनुदात्तभूमिः स्वरितोऽधोबिन्दुना सनाथ्यते तदपि काठकेन सामान्यमावहति, तय. कामः ।

११. माध्यन्दिन-यजुर्वेद-सामान्येन च मैत्रायणीय-काठकयजुर्वेद-भेदेन च तत्रोदात्तभूमिः स्वरितः साधारण्येनाऽधोदीर्घहस्तकेन द्योत्यते, तय. न्यक्, शरव्या या (१४, २, ७), तन्वा शतमया (१४, २, ८) ।

१२. स्वरितादुपरितनस्योदात्तस्य यथावदूर्ध्वदण्डप्रहात् तस्य स्वरितस्य कृते विशिष्टतरं संकेतान्तरं नाऽपेक्ष्यते ।

१३. स्वरितादुपरितनस्याऽनुदात्तस्य त्वनुदात्तभूमिस्वरितवदुपचार इष्यते यावताऽसावधोबिन्दुना सनाथ्यते, तय. आस्याय (१६, १०४, ६) ।

### (ङ) द्वितीयः प्राक्तनो रेखीयः सिद्धः प्रकारः

काण्व-माध्यन्दिनीययोः शतपथ-ब्राह्मणयोः केषुचिद् ग्रन्थान्तरेषु (तु. C. काशब्रा. भू. पृ. ९) चाऽपरः खलु रेखीयः सिद्धः प्रकारो लब्धप्रतिष्ठो भवति । इमे तावदेतदीया विशेषा भवन्ति—

१. अत्रोदात्तोऽधोरेख्यतेऽनुदात्तश्चाऽनुदात्तभूमिः स्वरितश्च नाऽङ्क्यते, तय. अग्निना ।

२. उदात्तोदय उदात्तो नाऽङ्क्यते, तय. केतपूः केतम् (५, १, १, १६)[7] ।

---

[1] सन्नतरो नामोदात्तस्वरितान्यतरोदयोऽनुदात्तः प्रसिद्धो द्रष्टव्यः ।

[2] Sch. त्वियमधोरेखा न प्राऽयोजि । अत एवेहाऽप्युदाहरणान्तरेष्वेतदप्रयोगो द्रष्टव्यः ।

[3] Sch. त्वस्या अधोरेखायाः स्थाने ऊर्ध्वबुध्नितं काकपदकं (Λ) प्रयुङ्क्ते ।

[4] मैत्रायणीयानां पदपाठ उक्तपूर्वो बाह्वृचः प्रकारो लब्धप्रतिष्ठोऽभूदित्यपरो विशेषोऽप्यत्र वैचित्र्यैक-वृद्धिकरो भवति ।

[5] Sch. अनुदात्तभूमिं स्वरितं नैव संकेतयति । सात. तु मूलोक्तस्थितिद्वयनिर्वाहाय यक. अधो-हस्तकं (L) चाऽधस्त्रिशूलकं (ω) च प्रयुङ्क्ते ।

[6] तु. C. काश. भू. पृ. ९ यत्र भाविकस्वरस्य स्वरूपत आलोचनायां प्रवृत्तायां पुरातन उदात्तः कालेना-ऽनुदात्ततां गत इत्यभिप्रायः परकीयो वादः प्रयुक्तो भवति ।

[7] एतत्खण्डोदाहरणीयस्थलसंकेताः माश. द. ।

३. परंपरितानां सतां बहूनामुदात्तानां मध्ये चरम एवाङ्क्यते, तय. अग्निर्हि वै धूर्य (१, १, २, ९)।

४. उदात्तभूमि-स्वरितस्य संकेतार्थं तदुदयमक्षरमधोरेख्यते[१], तय. वीर्यम्।

५. एवं तावदुदात्तभूमि-स्वरितोदयेऽक्षर उदात्ते सति तदीयाऽधोरेखा तस्य चोपरितनस्य स्वरितस्य च समानं ग्राहिका भवति। एवं च स्थिते तदुदयमुदात्तान्तरं चेद् भवति, तर्हि तन्नाङ्क्यते, तय. यज्ञो वै स्वः (१, १, २, २१), मानुषं नेद् व्यृद्धम् ( १, ७, २, ९ ), वैतु. इति सैषा ( १, ४, १, २६ ) यत्र तिकारोऽनुदात्तः सन्नात्मोदयोदात्तिकारीयाऽधोरेखाया अन्यथासाधने प्रयोजको न भवति।

६. उदात्त-स्वरिताऽन्यतरोदयस्य स्वरितस्य तूक्तपूर्वः संकेतो न व्याहन्यते, तय. यज्ञो वै स्वरुहः ( १, १, २, २१ ), दैवा वै स्वरुगन्म ( १, ९, ३, १४ ), इति सैषैतम् ( १, ४, १, २६ )।

७. कण्डिका-ब्राह्मणान्यतराऽवसानीय उदात्तः कण्डिका-ब्राह्मणान्यतराऽऽद्य उदात्ते परतस्त्रिभिरधोबिन्दुभिः संकेत्यते[२], तय. देवत्रा ॥ सुः ( ५, १, ४,७उ )।

८. उदात्तो वाऽनुदात्तो वाप्यावसानिकः सन् स्वरिते परत एवमधोविन्दुत्रिकेण संकेत्यते, तय. इति ॥ तेऽविदुः ( ३, ४, ३, ७उ ) प्रतिप्रस्थाता ॥ सोऽध्व° ( ४, २, १, १३ उ )।

९. यदाऽऽवसानिकस्याऽपि सतोऽक्षरस्य परेणाऽक्षरेण संहिते पाठे सति स्वरितः संभवति, तदा तदुदयस्योपान्त्यस्याऽक्षरस्यैवमधोविन्दुत्रयेण संकेतो भवति, तय. एव। एतत् ( ३, ४, २, १३ )।

१०. अङ्कितस्य सत उदात्तस्याऽनुनासिकतां प्राप्तावनुनासिकचिह्नमप्यधोरेख्यते, शतुँ-शतँ ह ( ३, ४, ३, १८ ); वैतु. यज्ञँ सुमभरन् ( ३, १, ४, ४ )।

## (च) एतत्कोषीयो रेखीयः सिद्धः प्रकारः

१. एवं तावद् यत्र कुत्रचित् किंचित् सामान्यमपि विभ्राणेषु प्रायेण त्वन्योन्यं नितरामिव विशिष्यमाणेष्वेव पुरातनेषु बहुषु स्वराङ्कनप्रकारेषु विद्यमानेष्वपि कथमिव सर्वशाखीयसौवरस्थितिर् नाम केनाऽपि शाखासर्वस्वसाधारणतां भजमानेन सता प्रकारविशेषेण युगपदेव हस्तामलकीक्रियेतेत्येवमभिप्राया खलु प्रक्रियमाणस्य सतोऽस्य समस्तवैदिक-वाङ्मयस्य प्रातिनिध्यमिव कुर्वाणस्य चैतिहासिकदृष्ट्या तदीयतुलनात्मकाऽध्ययनमधिकृत्यौपयिकतां बिभ्राणस्य च कोषस्य बलवत्यपेक्षाऽभूत्।

२. अस्याश्चाऽपेक्षायाः पूर्त्यर्थं यः सम्यग् विचारितः सन् पुराणानां प्रकाराणां सारायमाण इव प्रकार-विशेषोऽत्र लब्धप्रवेशो भवति, स सर्वेषां प्रेक्षकाणां प्रकाममभिमतः सन् सुकरत्वाच्च सुग्रहत्वाच्चाऽपि सर्वत्र भविष्यति प्रकाशमेष्यत्सु वैदिकग्रन्थीयसंस्करणेषु चरितार्थ्येत।

३. अस्मिंस्तावत् प्रकारेऽनुदात्तमात्रमनङ्कितं भवति। अनुदात्तो ह्युदात्ताऽभावस्य संज्ञा भवति। अस्य नीचैस्त्वं नामाऽऽपेक्षिको धर्मो भवति। उदात्त एव किल मौलिक आर्यभाषीयः स्वरो भवति। तदपेक्षयाऽनुदात्तो नीचैरुच्चार्यते। यदाऽयमुदात्तोदयो भवति, तदा भूयोऽपि नीचैर्गत इव लक्ष्यमाणः सन् सन्नतर इत्युच्यते। यदा चायमुदात्ताऽनुगो भवति, तदाऽस्मिन् सोपानक्रमिकस्य सतः स्वराऽवरोहस्य लक्ष्यमाणत्वादांशत उदात्तधर्मतायाः समावेश इव भवति, तेन चाऽयं समाहाररूपः सन् स्वरित इत्युच्यते। छायारूपस्त्वयं भवति। न ह्यस्या-

[१] web. अत्राऽधोरेखाद्वयं प्रयुक्तं द्र.।

[२] web. तावदेषा स्थितिर्द्वाभ्यामधोबिन्दुत्रिकाभ्यां संकेत्यते।

ऽनुदात्तभूमेः सतः काऽपि प्रागुदात्तस्वतन्त्रा सती प्रातिस्विकी स्थितिर्भवति । तथा ह्युदात्तान्तरोदयत्वे सत्ययमनुदात्त एव सन् सन्नतरतामुपगतोऽनुदात्त एव पुनर्भवति । एवं तावच् शुद्धो वा सन्नतर-स्वरिताऽन्यतरत्वोपाधिको वाऽनुदात्तः पूर्वोत्तरान्यतरपार्श्ववर्तिनः सन्नतर-च्छायास्वरिताऽन्यतरऽव्यवहितस्य वा नान्तरीयतया स्थितस्य वोदात्तस्यैव स्थितिलक्षकमात्रतामनुप्राप्तः संस्तदीयाऽङ्कनत एव स्वतःसिद्धविज्ञप्तिकयथायोगविभिन्नोक्तपूर्वावान्तरस्वरूप इति कृत्वैव नैतदीयाऽन्यथासिद्धाङ्कनगौरवमिहाऽऽद्रियते ।

४. यदधस्तादुदात्तो मौलिकस्वर इति कृत्वाऽङ्कनार्हत्वेन प्रत्यपादि, तत्र खलूदात्तभूमेः सतोऽभिनिहित-प्रश्लिष्ट-क्षैप्र-जात्याऽन्यतमत्वेन प्रातिस्विकस्थितिमतो वास्तविकस्य स्वरितस्याप्यङ्कनार्हत्वस्य समावेशोऽभिप्रेतो भवति[१] । एवं तावदुदात्तश्चोदात्तभूमिः स्वरितश्च द्वावेव स्वराविह पार्थक्येनाऽङ्कनमर्हत इति कृत्वा पुरातनानामुक्तपूर्वाणां संकेतानामेव मध्याद् ऋग्वेदे, तैत्तिरीय-यजुर्वेदे, तैत्तिरीय-ब्राह्मणे, तैत्तिरीयाऽरण्यके, तैत्तिरीयोपनिषदि, काण्व-यजुर्वेदे, कपिष्ठल-कठ-यजुर्वेदे चैकान्तिकतया, माध्यन्दिन-यजुर्वेदे, शौनकीयाऽथर्ववेदे च यथास्वोक्तपूर्वप्रक्रियं पर्याप्ततया, स्वरितसंकेतत्वेन प्रयुक्तपूर्वत्वादूर्ध्वदण्डः ( =अ॑ ) एव चोदात्तभूमिस्वरितस्य, शातपथप्रसिद्धिरधोरेखा ( = अ॒ ) चोदात्तस्य संकेतौ निर्धारितौ भवतः[२] ।

५. ये चैतद्ग्रन्थीय-स्वराङ्कनीया व्यावहारिका विशेषा भवन्ति, त इमे संगृह्योल्लिख्यन्ते—

(क) अगतिका वा सगतिका वा मूलधातवश्च, क्विब्-णिजन्यतरान्ता नामधातवश्च तदीयविभिन्नस्वराणां सतां रूपाणामसंभिन्नं संकेतनं सुकरं स्यादिति स्वरतो नाङ्क्यन्ते, तय. √अक्ष् (वेधने), √अक्ष् (व्याप्तौ), अति√मुच्, अरङ्कृतो√कृ, √अव्> √ओम्, अन्त-> √अन्ति ।

(ख) नामधात्वन्तराणि तु स्वरतः संकेत्यन्ते (तु. भू. ४, २, क, ७, अ), तय. अघ-> √अघाय् ।

(ग) तिङन्तानि रूपाणि स्वरतः संकेत्यन्ते, तय. √अक्ष् (वेधने)> अक्ष्णुते ।

(घ) संनिहितपदान्तरनिमित्तप्रयोजितनिघातानि तिङ्-रूपाणि स्वरतो न संकेत्यन्ते[३], तय. √अक्ष् (वेधने) > अक्ष्णुयात् ।

(ङ) अनङ्कितस्वर-संस्करणेभ्यो ग्रन्थेभ्यः संगृहीतानि सन्ति तिङ्-रूपाणि तदीयशब्दान्तरसामान्येनाऽनङ्कितान्येव ध्रियन्ते, तय. √अज् > अजामसि, अजन् ।

(च) यदाऽङ्किताऽनङ्कित-स्वरेभ्य उभयेभ्यो ग्रन्थेभ्यस्तिङ्-रूपाणि संगृह्यन्ते, तदाऽनङ्कितस्वर-ग्रन्थीयानि तिङ्-रूपाणि यथाऽङ्कितस्वरग्रन्थीयस्वरवच्छ्रुति[४] निर्दिश्यन्ते, तय. अनु √ध्व(ध्वं)स् > अनुदध्वसे ।

(छ) अङ्कितस्वर-ग्रन्थीयं सुब्योगीयं वाऽव्ययं वा कृन्मात्रं स्वरवद् निर्दिश्यते, तय. √अत् > अतत्-अतिथि-, √अद् > अत्तवे, अत्तुम् ।

(ज) अनङ्कितस्वर-ग्रन्थीयः कृद् निःस्वरं निर्दिश्यते, तय. अग्नि-मेदिन्-, अग्नि-यानी- ।

---

[१] मूलतो जात्य-क्षैप्रयोरभेदो द्रष्टव्यः (तु. पृपृ. ५१०[j], ६२५[a], ६२६[m]) ।

[२] तस्मिंस्तस्मिन् पुराणे वा नूतने वा सौवरे संकेते प्रतिनियतायाः स्वरविशेषसंकेतनविषयायाः स्वाभाविक्याः शक्तेरभावाद् यथासमयं शक्तिविशेष उपाधीयत एव ।

[३] अस्य ग्रन्थस्य यथाश्रुतानुक्रमणस्वरूपताया एतदीयलक्षणशास्त्रस्वरूपताऽतिरिक्तत्वादित्यभिप्रायः ।

[४] अपि तानि स्वरतो वस्तुतस्तथा स्युर्न वा स्युरित्यस्य तत्तन्मूलीयवाक्यस्वतन्त्रविचाराधीनत्वादस्मिन् विषयेऽत्रत्यो निर्देशोऽप्रमाणं भवति ।

(झ) अङ्किताऽनङ्कितस्वरेभ्य उभयेभ्यो ग्रन्थेभ्यः संगृह्यमाणः कृद् यथास्वरवद्ग्रन्थीयश्रुति निर्दिश्यते[1], तय. अंशु- ।

(ञ) व्युत्पत्त्यौपयिकतयोपकल्पितानां कृतां स्वरनिर्देश औपकल्पनिको भवति, तय. *अन्तः-पर्शु- ।

(ट) यदा व्युत्पादनप्रयोजितः सन् स्वर उपकल्पनाया विषयो भवति, तदा स्वरवदक्षरं स-तारकं निर्दिश्यते, तय. !अच्छुँरा- ।

(ठ) यदौपकल्पनिकस्य सतः कृतो विषये सौवरी स्थितिर्दुर्विनिगमना भवति, तदाऽसौ निःस्वरं निर्दिश्यते, तय. √अट् > अट्णार- > आट्णार- ।

(ड) निघातमात्रवन्ति सर्वनामानि निःस्वरं निर्दिश्यन्ते, तय. अस्मद्- > न., *ईं-, *सी-, एन-, सम-, त्व- ।

(ढ) निहताऽनिहतोभय-प्रयोगवन्ति सर्वनामान्युभयथा पृथग् निर्दिश्यन्ते, तय. इदम्- > अस्मात्, अस्मात्- ।

(ण) अलुक्-समासे पूर्वपदायमानानि चाऽवान्तरप्रातिपदिकीक्रियमाणानि च सन्ति सुब्-रूपाणि निःस्वरं निर्दिश्यन्ते, तय. अग्र- > अग्रे ।

(त) द्वैस्वर्येण श्रूयमाणाः समासास्तथैव निर्दिश्यन्ते, तय. बृहस्पति-, वनस्पति-, अग्नी-वरुण- ।

(थ) यथा प्रातिस्विकप्रातिपदिकस्वरवन्ति सुब्-रूपाणि निःस्वरं निर्दिश्यन्ते, तय. अंहस्- > -हसः (=अंहसः) ।

(द) हल्पूर्वोदात्तयण्भाव-प्रयोजितः[2] सुब्-उदात्तो न निर्दिश्यते, तय. ऊति- > -त्या (=ऊत्या) ।

(ध) यदा सुपि परत उदात्तयोर् इवर्णोवर्णयोः स्थानेऽन्यतः अय् इति वा इय् इति वाऽन्यतश्च अव् इति वा उव् इति वा भवतः, तदा सुब्-रूपं निःस्वरं निर्दिश्यते, तय. अग्नि- > -ग्नयः (=अग्नयः), धी- > धियः (=धियः), अंशु- > -शवः (=अंशवः), अग्रू- > -ग्रुवः (=अग्रुवः) ।

(न) उदात्तयण्भाव-प्रयोजितः सुप्-स्वरितो यथावद् निर्दिश्यते, तय. १अरुणी- > -र्ण्यः, अश्वतरी- > -र्यः ।

(प) यदा प्रातिपदिकनिघात-प्रयोजकः सुप्-स्वरः प्रवर्तते, तदाऽसौ यथावद् निर्दिश्यते, तय. अघायुत- > -यते, १अप्- > अपः, २अप्- > अद्भिः ।

(फ) उदात्तनिवृत्तिप्रयुक्तः सुप्-स्वरो यथावद् निर्दिश्यते[3], तय. असन्- > -स्नः, अस्थन्- > स्थ्नः ।

(ब) आद्युदात्त-निघातोभयविधमामन्त्रितं पदं स्वीयसंकेतविशेषभूत-वर्तुलकीयाया अधोरेखाया भावाऽभावाभ्यां यथायोगं विविच्य निर्दिश्यते, तय. १अक्ष- > -०क्ष, २अक्ष- > -०क्षाः, आदित्य- > -०त्य ।

(भ) निःस्वरं निर्दिश्यमानानि प्रातिपदिकान्यनुबध्नन्ति सुब्-रूपाणि कैमुतिकेनैव निःस्वरं निर्दिश्यन्ते, तय. अ-कृतपूर्व- > -र्वम्, अस्मद्- > नौ, नः ।

---

[1] अप्यस्वरवद्ग्रन्थीयोऽनेकाच् कृद् वस्तुतो यथानिर्दिष्टस्वरो भिन्नस्वरो वेत्यत्राऽयं निर्देशोऽनैकान्तिको भवति।

[2] वैतु. पृ. ६६१$^{a}$ (तु. उपरिष्टात् फ च) ।

[3] तु. पृ. ६६१$^{a}$ यदन्वधस्ताद् (द) इत्यत्र प्रत्तमुदाहरणमप्यस्यैव नियमस्य विषयो भवति ।

(म) साम्रेडितानां सुब्-रूपाणां नियताऽऽम्रेडितांशनिघातानां सतां निर्देश उक्तपूर्वसुबूरूपीयनिर्देश-सामान्यमेव बिभर्ति, तय. अंशु- > -शुः-शुः (=अंशुः-अंशुः) ।

(य) अव्यय-मात्रं यथास्वरश्रुति निर्दिश्यते, तय. अनु, अभि, एतवै ।

(र) सस्वरनिःस्वरोभयविधश्रुतिकमव्ययं यथायथं पार्थक्येन निर्दिश्यते, तय. कम्, कम्, यथा, यथा ।

(ल) निहतमात्रस्वरूपमव्ययं तथैव निर्दिश्यते, तय. इव (तु. भू. ४, ४, च, ४), उ, घ ।

(व) सस्वरनिःस्वरोभयविधश्रुतिकं समासाङ्गभावुकमव्ययं यथायथं विविच्य निर्दिश्यते, तय. अति-√पू > अतिपवते, अतिपुवते, अप √गु(> गू)ह् > अप-गूळ्ह-, अप-गूहमान- ।

## ६. स्थल-प्रकरणम्

१. प्रतितिङन्तसुबन्ताऽव्ययनिर्देशाऽनुपदं यथाश्रुति समग्राणि स्थलानि निर्दिश्यन्ते । तत्र तत्तद्-ग्रन्थोद्देशतस्तावदयं निर्देशक्रमो भवति—

(क) ऋग्वेदे—१. ऋ., २. खि. ।
(ख) यजुर्वेदे—१. मा., २. का.,
३. तै., ४. मै.,
५. काठ., ६. क. ।
(ग) सामवेदे—१. कौ., २. जै. ।
(घ) अथर्ववेदे—१. शौ., २. पै. ।

२. प्रत्युपस्थिते स्थलनिर्देशे प्रथमं तावद् यथाऽपेक्षं ग्रन्थनाम्नः संक्षेपो दीयते । तदनु नान्तरीयतया ग्रन्थीयप्रधानाऽवान्तरविभागप्रदर्शिकाः संख्या दीयन्ते । आसां च मध्ये या प्रथमा भवति सा प्रधानविभागीया भवति, अवान्तरविभागीयास्त्वितरा यास्ततश्चाऽन्योन्यं च प्रार्धविरामेण व्यवच्छिद्यन्ते । संख्यानामन्ते च विरामो दीयते, तय. अकन्तः पै १, ४३, २.

३. यदा स्थलविशेषनिर्देशमनु स्थलान्तरीयो निर्देशः क्रियते, तदा ययोः कयोरपि द्वयोः स्थलाङ्कनमात्र-योर्मध्येऽर्धविरामो दीयते, तय. अंहस्- > -हः ऋ १, ४२, १; २, २३, ४; अंशु- > -शून् शौ ५,२०,१०; पै··· .

४. ग्रन्थविशेषीयाऽनेकस्थलानामङ्कन उपस्थिते सति प्रथमायामेव तदीयमात्रायां सर्वास्तत्तद्विभागीयाः संख्या दीयन्ते । उत्तरासु तु तदीयमात्रासु समानाः सतीः प्रधान-मध्यमविभागीयाः संख्या नावर्त्य याश्चरमविभागीयाः सत्यो विभिन्नाः संख्याः स्युस्ता एव निर्दिश्यन्ते, तय. अक्ष्णया तै ५, २, ७, ५$^{१}$; १०, ४; ५; ३, ५, ३$^{१}$; < ५, २, ७, ५$^{१}$; ५, २, १०, ४; ५, २, १०,५; ५, ३, ५, ३$^{२}$;

५. अनेकेषां परंपरितानां स्थलानां निर्देश उपस्थिते सति प्रथमचरमयोः सतोः स्थलयोरेव निर्देशः क्रियते, तन्मध्ये विच्छेदकश्च दीयते, तय. अग्नि- > -ग्निम् काठ १६, ८-११; १९, ३$^{१}$-५$^{२}$.

६. यदि कचिद् मध्यमानां संख्यानामपि विषय उक्तपूर्वप्रकारकं पारंपर्यं निर्देश्यं भवति, तर्हि तासां मध्याद् अप्येवं प्रथमचरमयोः सत्योरेव निर्देशः क्रियते, तन्मध्ये च विच्छेदको दीयते, तय. अंहस्- > -हसः शौ ४, २३-२९, १-७.

७. यथा रूपविशेषीयाणां स्थलनिर्देशानामन्योऽन्यमर्धविरामेण व्यवच्छेदो भवति, तथैव विभिन्नरूपीयाणां स्थलसंख्याङ्कव्यूहानामन्योऽन्यमर्धविरामेण व्यवच्छेदः क्रियते, चरमरूपीयचरमस्थलीयसंख्याङ्कादूर्ध्वं च विरामो दीयते, तय. अंशु- > -शवः···; -शवे···; -शोः···; ३, १२, ४.

८. रूपविशेषाणां सस्थलानां सतां प्रथमं परंपरितो निर्देशो भवति, तदनु च तत्साधारणस्थलीयाः संख्या दीयन्ते, तय. अति[४](चर), (अति) चर पै ३, ३३, ६; अत्याशित- > -तस्य, -तेन मै ३, ६, २.

९. यदा रूपविशेषस्य स्थलविशेषीया विशेषसंख्याकाऽऽवृत्तिः सूचनीया भवति, तदा तदङ्कः स्थलाङ्कशीर्षण्यतया निर्दिश्यते, तय. अंहूरण- > -णम् काठ १०, ९[२]; अग्नि- > -ग्ने काठ १८,३[३]; ४[८]; १६[१४].

१०. तत्तद्ग्रन्थीयया ऽन्योन्यं प्रायेण भूयोविशिष्टानि सन्ति तत्तत्प्रधान-मध्यम-चरमविभागीयानि प्राक्प्रसिद्धानि मण्डलाऽध्यायप्रभृतीनि नामान्युक्तपूर्वप्रकारेणेह संख्याङ्कनमात्रेण निर्वाहसंभवादन्यथासिद्धानीति कृत्वा नोपयुज्यन्ते[१]। अयं तावत्तदीयः स्वरूपतश्च संख्यातश्च परिचयः संग्रहेणोच्यते—

(क) ऋग्वेदेऽष्टकाऽध्याय-वर्ग-मन्त्रात्मकश्च मण्डलाऽनुवाक-सूक्त-मन्त्रात्मकश्च चतुष्टयौ सन्तौ द्वौ विभागप्रकारौ भवतः। एतयोर्द्वितीय एव प्रसिद्धतरत्वादिहोपयुज्यते, प्रतिमण्डलं सूक्तानां परंपरितात् संख्यानादनुवाकीयनिर्देशस्याऽन्यथासिद्धत्वात् प्रतिस्थलं संख्यात्रितयस्यैवाङ्कनं च क्रियते।

(ख) ऋग्वेद-खिलानि सूक्त-मन्त्र-प्रविभक्ताऽध्यायपञ्चकात्मकानि भवन्ति। एत एव त्रयो विभागाश्चाऽत्र संख्याप्यन्ते। संहिताऽरण्यं च परिशिष्टं चोभे अपि द्विधा प्रविभक्ते सती यथाक्रमं षष्ठ-सप्तमाऽध्यायतयाऽङ्क्येते। द्वितीय-तृतीय-चतुर्थेष्वध्यायेषु सन्ति कतिचित् सूक्तानि यानि पृथङ् मन्त्रप्रविभक्त-खण्डद्वयात्मकानि भवन्ति। तदीयस्थलाङ्कन उपस्थिते सति सूक्ताङ्कीयशीर्षण्यभूतेन २ इत्यङ्केन द्वितीयखण्डीयतया विवेकेन परामर्शो भवति, तय. √अस्(भुवि) > असि खि ४, ७[२], १[२]। एवं पञ्चमाध्यायीयप्रथमसूक्तस्थ-खण्डपञ्चकस्य विविक्तः परामर्शः सूक्त-मन्त्राङ्कमध्यीयतया धृतेन सताऽङ्कविशेषेण क्रियते[२], तय. अदिति- > -तेः खि ५, ७, १, २.

(ग) माध्यन्दिन-यजुर्वेदो मन्त्रप्रविभक्तचत्वारिंशदध्यायात्मकः सन् संख्याद्वयेन परामृष्टविभागद्वितयो भवति।

(घ) काण्व-यजुर्वेदस्य दशकाऽध्यायाऽनुवाक-मन्त्रात्मकश्चतुर्व्यूढो विभागश्चत्वारिंशतोऽप्यध्यायानां माध्यन्दिन-यजुर्वेदवत् परंपरितसंख्यापनेन त्रिव्यूढः सन् संख्यात्रयेण परामृष्टो भवति[३]।

(ङ) तैत्तिरीय-यजुर्वेदीयो विभागः काण्ड-प्रपाठकाऽनुवाक-खण्डात्मकतया चतुर्व्यूढः सन् चतुर्धा संख्याप्याङ्क्यते[४]।

(च) मैत्रायणीय-यजुर्वेदः काण्ड-प्रपाठक-खण्ड-प्रविभक्ताऽध्यायचतुष्टयात्मकः सन् संख्यात्रयेण परामृष्टत्रिव्यूढविभागो भवति।

---

[१] तत्तद्ग्रन्थीय-तत्तद्विभागीय-पुष्पिकीयाणां निर्देशानां स्थलाङ्कन उपस्थिते सति यथायोगं केवलाद् ग्रन्थनाम्नो वा विभागविशेष-सहकृतग्रन्थनाम्नो वोपरि पुष्पि. इति संक्षेपो दीयते, तय. तु. इडिमिका-, क्षोरिमिका-।

[२] एतद्ग्रन्थीय-प्रकृतखण्डादग्रतस्तावदस्य सूक्तमन्त्राङ्क-मध्यीयाङ्कस्य सूक्ताङ्कीय-शीर्षण्यतयैव स्थितिः संपादयिष्यमाणा द्रष्टव्याः।

[३] एतद्ग्रन्थीयसामग्रीसंकलनात् पश्चात् प्रकाशं नीयमाने सात. प्रत्यध्यायं मन्त्राणां परंपरितपाठेनाऽनुवाकीयो विभागोऽप्यन्यथासिद्ध इव क्रियते।

[४] मैसू. त्रुटितपाठत्वात् तदीयः खण्डपरंपरितेन त्रिव्यूढोऽपि सन् विभाग इह नाऽनुस्रियते।

(छ) काठक-चारक-यजुर्वेदः खण्डप्रविभक्त-स्थानकात्मकतया व्यूढः सन् संख्याद्वयेन परामृष्टो भवति। आश्वमेधिकपरिशिष्टीयास्त्रयोदश प्रधानविभागा अपि स्थानकीकृत्य च चत्वारिंशता स्थानकैः परंपरयित्वा च परामृश्यन्ते। एवं तावत् संकलितानि सन्ति स्थानकानि त्रिपञ्चाशत्संख्याकानि संपद्यन्ते[१]।

(ज) कपिष्ठल-कठ-यजुर्वेदेऽष्टकाऽध्याय-खण्डात्मकतया त्रिव्यूढो विभागोऽध्यायपरंपरितेनाऽन्यथासिद्धीभूताऽष्टकविवेकः सन् संख्याद्वयेनैवेह परामृष्टो भवति[२]। चत्वारिंशोऽध्यायोऽखण्डप्रविभक्तः सन्नेकखण्डात्मकतया सर्वत्र १ इत्येतेन खण्डाङ्केन सहैव निर्दिश्यते।

(झ) कौथुमसामवेदे प्रथमं तावद् द्वौ विभागौ भवतः। पूर्वार्चिकं चोत्तरार्चिकं च। आरण्य-काण्डं वाऽऽरण्य-संहिता वेति च महानाम्न्यार्चिकमिति च पूर्वार्चिकाऽनुगता परिशिष्टद्वयी भवति। पूर्वोत्तरार्चिकयोः प्रपाठकाऽर्ध-दशति-मन्त्रात्मकश्चतुर्व्यूढो विभागो भवति। पूर्वार्चिकीया षट्-प्रपाठकी प्रतिप्रपाठकयुगलं काण्डव्यवहारेण त्रिकाण्ड्यपि भवति। प्रपाठकानां परंपरितेनाऽन्यथासिद्धस्त्वयं काण्ड-विभागो भवति। यत्तूत्तरार्चिके दशतेः स्थाने सूक्तं व्यवह्रियते तत्तदवान्तरविभागविशेषीयसंज्ञामात्रीयविशेषत्वान्न विशिष्यते। अस्ति तावदुभयमुख्यविभागसाधारणोऽध्याय-खण्ड-मन्त्रात्मकत्रिव्यूढोऽपरोऽपि विभाग-प्रकारः। अस्मिंश्च प्रकार आरण्य-काण्डस्यापि षष्ठाऽध्यायात्मकतया व्यवहारो भवति। अपि चोत्तरार्चिके क्वचित् खण्ड-मन्त्रयोर्मध्यगामितया सूक्तविभागोऽप्युपलभ्यते। इह तावदुक्तपूर्वयोः प्रकारयोः कतरेणचनापि विभागे सति परामर्शिका नितान्तं दुष्करा भवतीति च BC. इत्यत आंशिकं संकेतं गृहीत्वा च पूर्वोत्तरार्चिके यथाक्रमम् १ इति २ इति च संख्याप्य परामृश्येते च, तदुभयीया मन्त्राश्च माध्यमिकविभागाऽन्यथासिद्ध्यर्थं पृथक्परंपराभ्यां संकल्यन्ते च। अनया दिशोभयार्चिकीयस्थलाङ्कनं द्वाभ्यां द्वाभ्यां संख्याभ्यां साध्यते। एवमारण्य-काण्डम् ३ इत्येवं महानाम्न्यार्चिकं च ४ इत्येवं परामृश्येते। आरण्य-काण्डे दशति-खण्डाऽन्यतरनामको मध्यमो मन्त्रगणात्मको विभागो भवतीति कृत्वा तदीयं स्थलाङ्कनं संख्यात्रिकेण संपाद्यते। मध्यमस्य कस्यचिद् विभागस्याभावाद् महानाम्न्यार्चिकीयं स्थलाङ्कनं तावद् द्वाभ्यां संख्याभ्यामेव क्रियते[४]।

(ञ) जैमिनीय-सामवेदे पूर्वार्चिकमिति प्रथमः, आरण्यं च महानाम्न्यश्चेत्युभयात्मको द्वितीयः, ऊहगानमिति तृतीयः, उह्यगानमिति चतुर्थः, इत्येवं चत्वारो मुख्या-विभागाः सन्तः प्रत्येकं खण्ड-मन्त्रात्मकतया द्विधा प्रविभक्ता भवन्ति। एतदीयं स्थलाङ्कनं च त्रिभिः संख्याभिरभिनिर्वर्त्यते। पूर्वार्चिकीयः खण्डगणात्मकपर्वरूपोऽवान्तरविभागश्चैवं तद्गतद्वितीयपर्वगतोऽपर्वप्रकारकोऽपरोऽवान्तरविभागश्च मुख्यविभागान्तरत्रिकवत् खण्डपरंपरितेनाऽन्यथासिद्धाविव क्रियेते[५]।

---

[१] मुख्यानां चत्वारिंशत्-स्थानकानां मूलत इठिमिका (< *त्रिथिमिका = *प्रथमिका), मध्यमिका, ओरिमिका (< *अवरिमिका = अवरमिका), याज्यानुवाक्याश्चेत्येवं ग्रन्थचतुष्कतोऽपि विभाग आसीदित्यत्र तत्तद्ग्रन्थसंकेतवत्यः स्थानकीयाः पुष्पिका द्रष्टव्याः।

[२] भावे क्तान्तं पदं द्रष्टव्यम्।

[३] काण्ड-प्रपाठक-खण्डात्मकोऽपि विभागोऽस्यां शाखायां कदाचिदादरं लेभ इत्यत्रैतदीयमूलकोशीयं साक्ष्यं भवति।

[४] इहत्यस्य च मुद्रितसंस्करणमात्रीयस्य च स्थलाङ्कनप्रकारसर्वस्वसंवादनार्थं तु. आचि. १।

[५] र. पुरातनविभागीयः प्रकारश्चेहाऽनुक्षियमाणः प्रकारश्चोभावपि प्रदर्शितचरौ भवतः।

७. यथा रूपविशेषीयाणां स्थलनिर्देशानामन्योऽन्यमर्धविरामेण व्यवच्छेदो भवति, तथैव विभिन्नरूपीयाणां स्थलसंख्याङ्कव्यूहानामन्योऽन्यमर्धविरामेण व्यवच्छेदः क्रियते, चरमरूपीयचरमस्थलीयसंख्याङ्कादूर्ध्वं च विरामो दीयते, तय. अंशु- > -शवः···; -शवे···; -शोः···; ३, १२, ४.

८. रूपविशेषाणां सस्थलानां सतां प्रथमं परंपरितो निर्देशो भवति, तदनु च तत्साधारणस्थलीयाः संख्या दीयन्ते, तय. अति[४](चर), (अति) चर पै ३, १३, ६; अत्याशित- > -तस्य, -तेन मै ३, ६, २.

९. यदा रूपविशेषस्य स्थलविशेषीया विशेषसंख्याकाऽऽवृत्तिः सूचनीया भवति, तदा तदङ्कः स्थलाङ्क-शीर्षण्यतया निर्दिश्यते, तय. अंहूरण- > -णम् काठ १०, ९[२]; अग्नि- > -ग्ने काठ १८,३[३]; ४[८]; १६[१४].

१०. तत्तद्ग्रन्थीयत्याऽन्योन्यं प्रायेण भूयोविशिष्टानि सन्ति तत्तत्प्रधान-मध्यम-चरमविभागीयानि प्राक्प्रसिद्धानि मण्डलाऽध्यायप्रभृतीनि नामान्युक्तपूर्वप्रकारेणेह संख्याङ्कनमात्रेण निर्वाहसंभवादन्यथासिद्धानीति कृत्वा नोपयुज्यन्ते[१]। अयं तावत्तदीयः स्वरूपतश्च संख्यातश्च परिचयः संग्रहेणोच्यते—

(क) ऋग्वेदेऽष्टकाऽध्याय-वर्ग-मन्त्रात्मकश्च मण्डलाऽनुवाक-सूक्त-मन्त्रात्मकश्च चतुष्ट्यौ सन्तौ द्वौ विभाग-प्रकारौ भवतः। एतयोर्द्वितीय एव प्रसिद्धतरत्वादिहोपयुज्यते, प्रतिमण्डलं सूक्तानां परंपरितात् संख्यानादनुवाकीयनिर्देशस्याऽन्यथासिद्धत्वात् प्रतिस्थलं संख्यात्रितयस्यैवाङ्कनं च क्रियते।

(ख) ऋग्वेद-खिलानि सूक्त-मन्त्र-प्रविभक्ताऽध्यायपञ्चकात्मकानि भवन्ति। एत एव त्रयो विभागाश्चाऽत्र संख्याप्यन्ते। संहिताऽरण्यं च परिशिष्टं चोभे अपि द्विधा प्रविभक्ते सती यथाक्रमं षष्ठ-सप्तमा-ऽध्यायतयाऽङ्क्येते। द्वितीय-तृतीय-चतुर्थेष्वध्यायेषु सन्ति कतिचित् सूक्तानि यानि पृथङ् मन्त्रप्रवि-भक्त-खण्डद्वयात्मकानि भवन्ति। तदीयस्थलाङ्कन उपस्थिते सति सूक्ताङ्कीयशीर्षण्यभूतेन २ इत्यङ्केन द्वितीयखण्डीयतया विवेकेन परामर्शो भवति, तय. √अस् (भुवि) > असि खि ४, ७[२], १[१]। एवं पञ्चमाध्यायीयसप्तमसूक्तस्थ-खण्डपञ्चकस्य विविक्तः परामर्शः सूक्त-मन्त्राङ्कमध्यीयतया धृतेन सताऽङ्क-विशेषेण क्रियते[२], तय. अदिति- > -तेः खि ५, ७, १, २.

(ग) माध्यन्दिन-यजुर्वेदो मन्त्रप्रविभक्तचत्वारिंशदध्यायात्मकः सन् संख्याद्वयेन परामृष्टविभागद्वितयो भवति।

(घ) काण्व-यजुर्वेदस्य दशकाऽध्यायाऽनुवाक-मन्त्रात्मकश्चतुर्व्यूढो विभागश्चत्वारिंशतोऽप्यध्यायानां माध्यन्दिन-यजुर्वेदवत् परंपरितसंख्यापनेन त्रिव्यूढः सन् संख्यात्रयेण परामृष्टो भवति[३]।

(ङ) तैत्तिरीय-यजुर्वेदीयो विभागः काण्ड-प्रपाठकाऽनुवाक-खण्डात्मकतया चतुर्व्यूढः सन् चतुर्धा संख्याप्याङ्क्यते[४]।

(च) मैत्रायणीय-यजुर्वेदः काण्ड-प्रपाठक-खण्ड-प्रविभक्ताऽध्यायचतुष्टयात्मकः सन् संख्यात्रयेण परामृष्ट त्रिव्यूढविभागो भवति।

---

[१] तत्तद्ग्रन्थीय-तत्तद्विभागीय-पुष्पिकीयाणां निर्देशानां स्थलाङ्कन उपस्थिते सति यथायोगं केवलाद् ग्रन्थनाम्नो वा विभागविशेष-सहकृतग्रन्थनाम्नो वोपरि पुष्पि. इति संक्षेपो दीयते, तय. तु. इडिमिका-, श्रोरिमिका-।

[२] एतद्ग्रन्थीय-प्रकृतखण्डादग्रतस्तावदस्य सूक्तमन्त्राङ्क-मध्यीयाङ्कस्य सूक्ताङ्कीय-शीर्षण्यतयैव स्थितिः संपादयिष्यमाणा द्रष्टव्याः।

[३] एतद्ग्रन्थीयसामग्रीसंकलनात् पश्चात् प्रकाशं नीयमाने सात. प्रत्यध्यायं मन्त्राणां परंपरितपाठेना-ऽनुवाकीयो विभागोऽप्यन्यथासिद्ध इव क्रियते।

[४] मैसू. त्रुटितपाठत्वात् तदीयः खण्डपरंपरितेन त्रिव्यूढोऽपि सन् विभाग इह नाऽनुस्रियते।

(छ) काठक-चारक-यजुर्वेदः खण्डप्रविभक्त-स्थानकात्मकतया व्यूढः सन् संख्याद्वयेन परामृष्टो भवति। आश्वमेधिकपरिशिष्टीयास्त्रयोदश प्रधानविभागा अपि स्थानकीकृत्य च चत्वारिंशता स्थानकैः परंपरयित्वा च परामृश्यन्ते। एवं तावत् संकलितानि सन्ति स्थानकानि त्रिपञ्चाशत्संख्याकानि संपद्यन्ते[१]।

(ज) कपिष्ठल-कठ-यजुर्वेदेऽष्टकाऽध्याय-खण्डात्मकतया त्रिव्यूढो विभागोऽध्यायपरंपरितेनाऽन्यथासिद्धीभूताऽष्टकविवेकः सन् संख्याद्वयेनैवेह परामृष्टो भवति[२]। चत्वारिंशोऽध्यायोऽखण्डप्रविभक्तः सन्नेकखण्डात्मकतया सर्वत्र १ इत्येतेन खण्डाङ्केन सहैव निर्दिश्यते।

(झ) कौथुमसामवेदे प्रथमं तावद् द्वौ विभागौ भवतः। पूर्वार्चिकं चोत्तरार्चिकं च। आरण्य-काण्डं वाऽऽरण्य-संहिता वेति च महानाम्न्यार्चिकमिति च पूर्वार्चिकाऽनुगता परिशिष्टद्वयी भवति। पूर्वोत्तरार्चिकयोः प्रपाठकाऽर्ध-दशति-मन्त्रात्मकश्चतुर्व्यूढो विभागो भवति। पूर्वार्चिकीया षट्-प्रपाठकी प्रतिप्रपाठकयुगलं काण्डव्यवहारेण त्रिकाण्ड्यपि भवति। प्रपाठकानां परंपरितेनाऽन्यथासिद्धस्त्वयं काण्ड-विभागो भवति। यत्तूत्तरार्चिके दशतेः स्थाने सूक्तं व्यवह्रियते तत्तदवान्तरविभागविशेषीयसंज्ञामात्रीयविशेषत्वान्न विशिष्यते। अस्ति तावदुभयमुख्यविभागसाधारणोऽध्याय-खण्ड-मन्त्रात्मकत्रिव्यूढोऽपरोऽपि विभाग-प्रकारः। अस्मिंश्च प्रकार आरण्य-काण्डस्यापि षष्ठाऽध्यायात्मकतया व्यवहारो भवति। अपि चोत्तरार्चिके क्वचित् खण्ड-मन्त्रयोर्मध्यगामितया सूक्तविभागोऽप्युपलभ्यते। इह तावदुक्तपूर्वयोः प्रकारयोः कतरेणचनापि विभागे सति परामर्शिका नितान्तं दुष्करा भवतीति च BC. इत्यत आंशिकं संकेतं गृहीत्वा च पूर्वोत्तरार्चिके यथाक्रमम् १ इति २ इति च संख्याप्य परामृश्येते च, तदुभयीया मन्त्राश्च माध्यमिकविभागाऽन्यथासिद्ध्यर्थं पृथक्परंपराभ्यां संकल्यन्ते च। अनया दिशोभयार्चिकीयस्थलाङ्कनं द्वाभ्यां द्वाभ्यां संख्याभ्यां साध्यते। एवमारण्य-काण्डम् ३ इत्येवं महानाम्न्यार्चिकं च ४ इत्येवं परामृश्येते। आरण्य-काण्डे दशति-खण्डाऽन्यतरनामको मध्यमो मन्त्रगणात्मको विभागो भवतीति कृत्वा तदीयं स्थलाङ्कनं संख्यात्रिकेण संपाद्यते। मध्यमस्य कस्यचिद् विभागस्याभावाद् महानाम्न्यार्चिकीयं स्थलाङ्कनं तावद् द्वाभ्यां संख्याभ्यामेव क्रियते[४]।

(ञ) जैमिनीय-सामवेदे पूर्वार्चिकमिति प्रथमः, आरण्यं च महानाम्न्यश्चेत्युभयात्मको द्वितीयः, ऊहगानमिति तृतीयः, उह्यगानमिति चतुर्थः, इत्येवं चत्वारो मुख्या-विभागाः सन्तः प्रत्येकं खण्ड-मन्त्रात्मकतया द्विधा प्रविभक्ता भवन्ति। एतदीयं स्थलाङ्कनं च त्रिभिः संख्याभिरभिनिर्वर्त्यते। पूर्वार्चिकीयः खण्डगणात्मकपर्वरूपोऽवान्तरविभागश्चैवं तद्गतद्वितीयपर्वगतोऽपर्वप्रकारकोऽपरोऽवान्तरविभागश्च मुख्यविभागान्तरत्रिकवत् खण्डपरंपरितेनाऽन्यथासिद्धाविव क्रियेते[५]।

---

[१] मुख्यानां चत्वारिंशत्-स्थानकानां मूलत इठिमिका (< *त्रिथिमिका = *प्रथमिका), मध्यमिका, ओरिमिका (< *अवरिनिका = अवरमिका), याज्यानुवाक्याश्चेत्येवं ग्रन्थचतुष्कतोऽपि विभाग आसीदित्यत्र तत्तद्ग्रन्थसंकेतवत्यः स्थानकीयाः पुष्पिका द्रष्टव्याः।

[२] भावे क्रान्तं पदं द्रष्टव्यम्।

[३] काण्ड-प्रपाठक-खण्डात्मकोऽपि विभागोऽस्यां शाखायां कदाचिदादरं लेभ इत्यत्रैतदीयमूलकोशीयं साक्ष्यं भवति।

[४] इहत्यस्य च मुद्रितसंस्करणमात्रीयस्य च स्थलाङ्कनप्रकारसर्वस्वसंवादनार्थं तु. आचि. १।

[५] र. पुरातनविभागीयः प्रकारश्चेहाऽनुस्रियमाणः प्रकारश्चोभावपि प्रदर्शितचरौ भवतः।

(ढ) शौनकीयाऽथर्ववेदे द्वौ विभागप्रकारौ प्रवर्तेते । काण्ड-सूक्त-मन्त्रात्मकस्त्रिव्यूढश्च प्रकारः काण्ड-प्रपाठकाऽनुवाक-मन्त्रात्मकश्चतुर्व्यूढश्च प्रकारः । एतयोर्मध्ये प्रथम एव तावदिहानुवर्त्यमानः सन् संख्यात्रिकेण द्योत्यते[१] ।

(ठ) पैप्पलादाऽथर्ववेदे च द्वौ विभागप्रकारौ प्रवर्तेते । काण्ड-सूक्त-मन्त्रात्मकस्त्रिव्यूढश्च काण्डाऽनुवाक-[२]खण्ड-मन्त्रात्मकश्चतुर्व्यूढश्च । एतयोर्मध्ये तावत् प्रथम एवेहानुवर्त्यमानः सन् संख्यात्रयेणाऽङ्क्यते । यत्र क्वचिच्च ( तु. ३,३७ ) सूक्तानि मन्त्रतोऽविभक्तानि भवन्ति, तत्र तान्येकमन्त्रात्मकानीति कृत्वा १ इत्येतन्मन्त्रस्थानीयाऽङ्कप्रदानेन संख्यात्रयेणैवाऽङ्क्यन्ते । एवमविविक्तमन्त्रविभागस्थलीयाङ्कन उपस्थिते सति विच्छेदकव्यवहितयोः सतोर्द्वयोर्मुद्रितसंस्करणीययोरङ्कयोर्मध्याद् द्वितीयो विच्छेदकदक्षिणपार्श्वीयोऽङ्क एवेह प्रदर्श्यते (तु. ९,१२,६-७) ।

## ७. संकेत-प्रकरणम्

इह तावत् निर्देशस्य समूल्यर्थं वैशद्यार्थं वा ये केचन संकेताः प्रायुक्षत, त इमे भवन्ति—

१. ✓ इति धातुकः[३] प्रातिस्विकचिह्नतया धातुमात्रेण पुरस्क्रियते, तय. ✓अंह् (गतौ) ।

२. ✓- इति स-विच्छेदको धातुकः प्रकरणत आक्षेप्याऽऽख्यातांशानामुपसर्गाणामुपरिष्टात् प्रयुज्यते, तय. अति ✓- ।

३. - इति विच्छेदकः प्रातिपदिकमात्रान्ते प्रत्तः संस्तदीयसुब्योगीयतामुपदर्शयति । शब्दमात्रीयाक्षरविशेषस्याऽधस्ताद् दीयमानश्चायं धर्मान्तरमिव बिभ्राणः संस्तत्रोदात्तस्य व्यवस्थितिं सूचयति ।

४. - इत्यर्धविच्छेदकः प्रातिपदिकादुपरि नान्तरीयतया निर्दिश्यमानात् संक्षिप्तात् सतो रूपविशेषात् पुरस्तात् प्रत्तः संस्तदीयार्थंशस्य पूरयितव्यतामुपक्षिपति, तय. अग्नि- > -ग्निः, वैतु. -ग्निम् । अयं समासेऽवग्रहत्वेनाऽपि प्रयुज्यते, तय. अग्रे-गा- ।

५. । इत्यूर्ध्वदण्डो वर्णमूर्ध्नि दीयमानः सन् शब्दविशेषीयैकस्वरस्य सतः स्वरितस्य व्यवस्थितिं प्रदिशति, तय. अ-कुध्र्यञ्च्- ।

६. = इति संतोलः स्वतः प्राग्वर्तमानस्य सतः स्वत उत्तरवर्तिना सता तुल्यत्वं सूचयति, तय. 'तया गत्या' ( = तेन प्रकारेण ), पृ. १३०[a] ।

७ + इति योजकः प्रकृतिप्रत्ययीयं वा समासावयवीयं वा योगं संकेतयति, तय. ✓जन्+डः (पृ. ४०[b]), अ+श्वथ– (पृ. ५८८[c]) ।

८. → इत्यभिपुङ्खः स्वतः प्राग्वर्तिनः सतः स्वोत्तरवर्त्यात्मकतया परिणामं संकेतयति, तय, अच्छे- (र→)रा- ।

९. > इत्यभिकोणः = →, तय. अभि>भी ।

१०. ← इति प्रतिपुङ्खः स्वत उत्तरवर्तिनः सतः स्वप्राग्वर्त्यात्मकतया परिणामं संकेतयति,. तय. अघो(<घस्)-अक्ष- पृ १६१ ।

---

[१] WR. शंपा. इत्येतयोः क्वाचित्कस्थलाङ्कनभेदवतोः सतोः संवादनार्थं तु. आचि. २ ।

[२] मूलकोषे खण्ड->*कण्ड->काण्ड इति काश्मीरवाचनिकप्रवृत्तिसुलभविकारमध्योऽपपाठो द्रष्टव्यः ।

[३] धातुं संकेतयतीत्यभिप्रायपरस्तद्धितो भवति । एवमुपर्यपि तत्तत्संकेतसंज्ञात्वेन प्रयुज्यमानाः शब्दविशेषा यथावद् बोद्धव्याः ।

११. < इति प्रतिकोणः = ←, तय. ३अपुस्- (< २अप्-)।

१२. <> इति कोणयुगं स्वतः पूर्वोत्तरवर्तिनोरन्योन्यप्रकृतिविकृत्यन्यतरभावं संकेतयति, तय. अनुडुह् <> धुँ- (पृ. १९५[a])।

१३. ऽ इति वक्रकं संहिताविषय उत्तरवर्तिनोऽकारस्य पूर्ववर्तिनि सांहितिक आकार एकार ओकारे वाऽन्तर्भावं संकेतयति, तय. वाऽन्यस्य (पृ. १५[1]); स्वरेऽविशेषः (पृ ५[b]); भूरिविमृश्योऽयम् (पृ. १५[1])।

१४. ऽऽ इति द्विवक्रकमुत्तरवर्तिन आकारस्य पूर्ववर्तिनि सांहितिक आकारेऽन्तर्भावं संकेतयति, तय. पञ्चम्यर्थस्याऽऽकाङ्क्षितत्वात् (पृ. ६[b])।

१५ , इति प्रार्ध-विरामो यत्र तत्र शाब्दिके वा स्थलीये वा निर्देशे यथापेक्षं लघिष्ठव्यवच्छेदकत्वेन प्रयुज्यते, तय. √अस् (भुवि) अस्ति; अँनस्(> ड्, ळ्) √वह् (प्रापणे); अध, अधा; अन्त,न्ता-; अनु, > नू, याज-।

१६. ; इत्यर्ध-विराम एकैकस्याः स्थलाङ्कनमात्राया व्यवच्छेदकतया प्रयुज्यते, तय. अंश- > -शः ऋ २, १, ४; २७, १.

१७ ··· इति विराम एकैकस्य पदसंग्राहकनिर्देशखण्डस्य च समासाभिमुखे संक्षेपान्तरे वा स्थलाङ्के वा परतोऽसत्येकैकस्य संक्षेपस्य चाऽवसाने व्यवच्छेदकतया प्रयुज्यते, तय. अनु √दिश्, ······१०५., अंश-···१७.। पा. (वैतु. पाभे.) इति च, अंश- > -शः ऋ २, १, ४ (वैतु. ऋ.) इति च।

१८. ' ' इति शीर्षण्यं प्रार्धविराम-प्रतियुगं स्वमध्यगतं प्रायेणेतिकारेणाऽनुगतं पाठं संकेतयति, तय. 'अक्षान् देवसाधनभूतान् कामयते' (पृ. १३[a])।

१९. ० इति वर्तुलकं शीर्षण्यतया प्रयोगतः पूर्वोत्तरस्थित्यनुक्रमेणाऽधस्तनीं चोपरितनीं च पूरयितव्यतां संकेतयति तय, अंशु- °शु- अनू° (= अनंशु-), इदमेव च वर्तुलकं यदाऽर्धविच्छेदकस्य च संक्षिप्तस्य सतः सुब्रूपस्य च मध्ये दीयते, तदा तस्य रूपस्याऽऽमन्त्रितभावः सूच्यते, तय. अंशु- > -०शो, अग्नि- > -०ग्ने।

२०. *इति तारका यस्योपरि धृता भवति, तस्यौपकल्पनिकत्वं संकेतयति। तत्र ये विशेषा भवन्ति, त इमे सन्ति—

(क) वामपार्श्वतः शीर्षण्या सतीयं शब्दविशेषस्य तदर्थविशेषस्य वोक्तपूर्वं स्वरूपमाचष्टे, तय. √*अप् (पृ. ३०७[e])।

(ख) सस्वरस्याऽक्षरविशेषस्योपरि धृता सतीयं तस्य स्वरस्योक्तपूर्वं स्वरूपमाचष्टे, तय. अप्सर-द्रुँ-, अँ-संयाज्य-।

(ग) आवसानिक-विच्छेदकस्योपरि धृता सतीयं तत्प्रतियोगिनः सुब्योगीयतायाः उक्तपूर्वं स्वरूपमाचष्टे, तय. अवस्-* (पृ. ५५३[b])।

(घ) अवग्रहस्योपरि धृता सतीयं तस्योक्तपूर्वं स्वरूपमाचष्टे, तय. अन्तरि-क्षँ-।

२१. ? इति प्रश्नकः शब्द[1]-रूप[2]-ग्रन्थनामसंक्षेपाऽन्यतमीयाद् निर्देशात् पुरस्ताच्च स्थलाङ्कनिर्देशमात्राया

---

[1] धातूनां च व्ययाऽव्ययोभयविधानां प्रातिपदिकानां चैषा सामान्यसंज्ञा द्रष्टव्या।

[2] तिङन्तं वा सुबन्तं वा तत्तत् पदमिह यथास्वप्रकृतिभूतशब्दापेक्षया तत्तद् रूपमित्युच्यते।

उपरिष्टाच्चोपचर्यमाणो यथास्थितस्य तत्तन्निर्देशस्य विषये सामान्यतो वा तत्तद्विशेषतो वा दुरूहता-सांशयिकता-ऽध्यवसेयकल्पतादिप्रकारकमर्थं संकेतयति। येष्वेतद्विषयभूतेषु तावदस्योपचारो भवति, तानीमानि संगृह्येरन्—

(क) पाठ-स्वरूपे, तय. अक्षी- > -क्ष्यौ पै ६, ६, १? ।

(ख) वर्ण-स्वरूपे, तय. ?अंह्यारि- ।

(ग) तात्पर्य-स्वरूपे, तय. ?अकन्त- ।

(घ) अवग्रह-स्थितौ, तय. ?अप्-सर्- ।

(ङ) उपकल्पना-स्वरूपे, तय. ? √ *अराय् ।

एवं टिप्पणेषु चायं व्यु. मूपा. इत्यादितस् तत्तद्विषयीयात् संक्षेपादुपरि ध्रियमाणस्तत्र तत्र निर्णयाभावं सूचयति।

२२. ϕ इति संकेतः कृतः पुरस्तादुपचर्यमाणस्तस्य व्यवहितोपसृष्टत्वं भवतीति च स्थलाङ्कीय-मात्राविशेषादुपरि ध्रियमाणश्च तत्रैव स्थले व्यवहितोपसृष्टत्वं भवतीति च संकेतयति, तय. ϕ अप-शोशुचत्-, अप-घ्नत्- > -घ्नन् ऋ ८, ४३, २६ϕ.

२३. ‡ इति संकेतः शब्द-रूप-ग्रन्थनामसंक्षेपान्यतमीयाद् निर्देशात् पुरस्तादुपचर्यमाणस्तदधिकृतायाः पाठस्थितेर् नित्यं टिप्पणितस्थलस्य सतो बाह्वृचादिग्रन्थान्तरीयश्रुतिविशेषस्याऽपेक्षया भिन्नाऽऽत्मकतां संकेतयति, तय. अ-जर- > ‡-रस्य। स्थलविशेषीयपाठस्थितेरेवंप्रकारतायां सूचयितव्यायां सत्यां तु संकेतोऽयं तत्तत्स्थलाङ्का-ऽवसानतः क्रियते, तय. अग्नि-मत्- > -मान् काठ २३, ११‡ ।

२४. † इति संकेतः शब्द-तद्रूपाऽन्यतरीयनिर्देशविशेषात् पुरस्तादुपचर्यमाणस्तद्गतः श्रुतिसामान्यस्य बाह्वृचमूलकतां सूचयति, तय. †अज्म-, अज्मन्- > †-ज्म। यदा तु निर्देशविशेषस्य श्रुतिविशेषीयतयैवैवंप्रकारकता सूचयितव्या भवति, तदा तच्छ्रुतिविशेषीयव्याप्तिमात्रानुपाततोऽयं संकेतः स्थलाङ्कीयमात्राविशेषात् पुरस्ताद्वोपरि-ष्टाद्वोपचर्यते, तय. अच्युत-च्युत्- > -च्युत् शौ २०, ३४, ९† । यदा चाऽपि निर्देशविशेषस्य श्रुतिविशेषीया-ऽऽवृत्तिबहुत्वविषयत्वे सति क्वाचित्कतयैवैवंप्रकारता सूचयितव्या भवति, तदा शीर्षण्यावृत्तिसूचकसंख्यावतः स्थलाङ्क-विशेषादनन्तरं यावदावृत्त्येवंप्रकारकता सूचयितव्या भवति, तावदावृत्तिसूचकशीर्षण्यसंख्यायुतोऽयं संकेत उपचर्यते, तय. अस्मद्- > नः मै ४, १२, १२¹; †¹ ।

२५. ¶ इति संकेतः शब्द-तद्रूपान्यतरीयनिर्देशविशेषात् पुरस्तादुपचर्यमाणस्तस्य कृष्णयजुर्वेद-विशेषीयब्राह्मणभागीयतां सूचयति । यदा च निर्देशविशेषस्य श्रुतिविशेषीयतयैवैवंप्रकारकता सूचयितव्या भवति, तदाऽयं संकेतस्तच्छ्रुतिव्याप्तिमात्रानुपाततः पुरस्ताद्वोपरिष्टाद्वा प्रयुज्यते, तय. ¶अवपद्यन्ते, ¶अरण्य- > -ण्यम् ¶मै १, ९, ७··· । यदा तु निर्देशविशेषस्य स्थलविशेषीयाऽऽवृत्तिबहुत्वे

सति क्वाचित्कतयैवैवंप्रकारकता सूचयितव्या भवति, तदाऽऽवृत्तिसंख्याशिरस्कात् सतः स्थलविशेषीयादङ्कादनन्तर-मेवंप्रकारकतापर्यायसंख्याशिरस्कतयाऽयं संकेतो ध्रियते, तय. अधि मै ४,४,५², ¶।

२६. $ इति संकेतः † इत्यस्य च ¶ इत्यस्य चोक्तपूर्वप्रकारेण प्रवर्तमाने विषयोत्सर्गे रूपस्थलविशेषा-ऽन्यतराऽपेक्षयाऽपवादभावं सूचयति, तय. †अ-तन्द्र- > -$¹न्द्रम्, ¶अनायतन्- > -नः $शौ···, अपराह्ण- > -¶ह्णे··· पै १०,६,७$.

२७. पृथक्कारेण वैशद्यमुद्दिश्येह प्रयुज्यमानानां त्रयाणां कोष्ठकानां तावदयं विषयविभागो भवति—

(क) ( ) इत्यर्धचन्द्रककोष्ठकेऽन्तर्निर्देशीया योगविषया वर्णविकारविषया वा सूचना क्रियते, तय. अ-का-(ण>)णा-, अपि√ष्ठा(<स्था), अभ्या(भि-आ)√वह् । उपसृष्टतिङन्तप्रकरणे प्रकरणगम्य आख्यातिकोंऽशोऽप्यर्धचन्द्रककोष्ठके निर्दिश्यते, तय. अति√चर्, अति(चर) ।

(ख) [ ] इति दण्डककोष्ठके प्रतिशब्दीयखण्डान्त औत्तरपदिको निर्देशः क्रियते, तय. अंशु- ··· [°शु-अन्°, उप°···]; √अव्··· [अनु°···] ।

(ग) ⌊ ⌋ इति नागदन्तककोष्ठके निर्देशविशेषीयस्तत्तच्छ्रुतिगत्वेनाऽन्तर्बाह्वृचीयः संवादो निर्दिश्यते, तय. १अइ्य- > -इ्यैः ऋ ⌊६,६०,१; ८, ७३, १४⌋ ।

(घ) यदा बाह्वृचनिर्देशविशेषस्य स्थाने संवादिषु बाह्वृचेषु वा ग्रन्थान्तरीयेषु वा श्रुत्यन्तरेषु तस्य निर्देशविशेषस्याऽश्रवणे सति तत्पर्यायान्तरं श्रूयते, तदा तन्निर्देशविशेषीये बाह्वृचे स्थले नागदन्तककोष्ठके निर्दिष्टे सत्यंशतस्तत्संवादिश्रुत्यन्तरस्थलाङ्कनं नागदन्तककोष्ठकाऽऽभ्यन्तरिके-ऽर्धचन्द्रककोष्ठके क्रियते, तय. अंशु- > -शुः ऋ ९, ⌊६२, ४ (८२,१)⌋, २असपत्न्,त्ना- > -त्नः ऋ १०, १७४, ⌊(१५९, ४) ४⌋; -त्ना ऋ १०, १५९, ⌊४ (१७४, ४)⌋ ।

(ङ) टिप्पणेषु संवादि-विसंवादिमतान्तराणां चान्येषां पदार्थानां च वैशद्यविशेषेण समर्पणार्थमेतेषां कोष्ठकानां व्यवच्छेदकमात्रतया प्रयोगो भवति । तथाहि । यदैक एव कोष्ठकोऽपेक्ष्यते, तदाऽर्ध-चन्द्रककोष्ठक उपयुज्यते । यदा तु द्राघीयसि विचारे प्रवर्तमाने सति कोष्ठकानामन्योन्यमाभ्यन्तर-भावेन समावेशः सावसरो भवति, तदा [ ( ⌊ ⌋ ) ] इत्याकारकस्तदीय उपयोगक्रमो द्रष्टव्यः ।

## ८. मुद्रा-प्रकरणम्

१. अस्य ग्रन्थस्य मूल-भागः प्रतिपृष्ठं स्तम्भत्रयेण विभक्तो भवति ।

२. प्रतिपृष्ठमादिमः शब्दो वामतोऽन्तिमश्च दक्षिणतः शीर्षण्यतया निर्दिश्येते । यदा त्वेतयोरुभयो-र्वाऽन्यतरस्य वा विभिन्नाऽनुक्रमाद्यक्षरत्वात् पृष्ठविशेषीयसामान्याऽनुक्रमविघातकत्वं भवति, तदैनयोरुभयोर्वाऽन्य-तरस्य वा स्थाने कोणिताऽन्तः सन् धात्वादिमूलभूतस्य शब्दस्य निर्देशो भवति, तय. अनु√धा>दध् ।

३. प्रतिपृष्ठविभागीयस्तम्भं शाब्दिका निर्देशास्तावत् प्रातिस्विकेषु तत्तन्मूलाऽपेक्षया यौगिकपारंपर्यतः प्रत्ययान्तरयोगमेकैकया मात्रया दक्षिणतो व्यवच्छिद्यमानेष्वन्योन्यसापेक्षोपरितनावस्थितिष्वापञ्चमात् सहजसंभवो-पयोगेषु वैयाकरणार्थनिर्भरेषु स्तम्भेषु क्रियन्ते, तय. √अत्, √*अप्, √अश् (व्याप्तौ) ।

---

¹ प्रकृते खण्डे बाह्वृचश्रुतिमात्रगतः संवादो भवति । इत ऊर्ध्वं खण्डान्तरेषु त्वाधारग्रन्थमात्रगतः संवादोऽपि प्रदर्शयिष्यते ।

४. सार्वधातुकाऽऽर्धधातुकविषयकतिङन्तानां च सार्वधातुकप्रकरणीयभिन्नविकरणकरूपाणां च समूढप्रातिपदिकीयाऽवान्तरप्रातिपदिकीयरूपाणां चाऽन्योन्यविवेकार्थं प्रत्येकं खण्डपार्थक्यं क्रियते, तय. अनु √गम्, √गच्छ्, अति √तृ, अस्मद्-, अहन्- ।

५. एवं तावत् सर्वे शब्दा इह वंशपरंपराभिरिव निर्दिश्यमाना उपक्रमोपसंहारविवेकतः सुलक्षा भवन्ति । कस्कः शब्दः कियतीं कियतीं वैदिकवाङ्मयीयां प्रयोगर्द्धिमाप्तवानित्यप्यनेन प्रकारेण समीक्षितुमुपलभ्यते । तथाहि । यावद् अती (ति √इ), अप √नुद् इत्येवंजातीयानामुपसृष्टानां धातूनामाश्चर्यमिव द्वितीयस्तम्भाऽतिक्रमो भवति, तावद् √अत्, √*अद् इत्येवंजातीयाः शुद्धा धातवः प्रायेण चतुर्थं स्तम्भमभिव्याप्य प्रवर्तमाना उपलभ्यन्ते ।

६. अस्य ग्रन्थस्य वृत्तिभागस्तावद् टिप्पणमयो भवति । टिप्पणानि चैतानि स्तम्भद्वयेनोपनिबद्धानि भवन्ति । प्रत्येकं टिप्पणं च वैलक्षण्यप्रयोजित-दृष्टिसौकर्यमुद्दिश्याऽऽङ्कलवर्णशिरस्कतयाऽऽरभ्यते ।

७. एकैकस्य निर्देशस्य तत्तदङ्गमङ्गान्तरविवेकेन विस्पष्टं लक्ष्येतेत्यभिप्रायेण विभिन्नमुद्रात्रयी प्रयुक्ता भवति । इत्थं तावदस्मिन् विषये व्यवस्था कृता भवति—

(क) गुर्व्या कृष्णया मुद्रया तावदेतानि निर्देश्यानि भवन्ति—

१. शुद्धा उपसृष्टाश्चाऽनुसृष्टाश्च धातवः ।

२. अयौगिकत्वेन निर्देशभाञ्जि व्ययानि चाऽव्ययानि च प्रातिपदिकानि, प्रतिपरामर्शीयनिर्देशभाञ्जि विलक्षणानि सुप्-तिङन्यतरीयरूपाणि, यथावर्णमात्राऽनुक्रान्तानां प्रतिपरामर्शीयनिर्देशभाजां प्रातिपदिकपरंपराणां मध्ये प्राथमिकानि च प्रातिपदिकानि च ।

३. प्रत्येक-स्थलाङ्कीयमात्रायाः प्रधानविभागीया संख्या ।

(ख) लघ्व्या कृष्णया मुद्रया तावदेतानि निर्देश्यानि भवन्ति—

१. तिङ्-रूपाणि ।

२. सुब्-रूपाणि ।

३. यौगिकनिर्देशभाञ्जि व्ययानि वाऽव्ययानि वा कृत्तद्धिताऽन्यतरात्मकानि प्रातिपदिकानि ।

४. व्ययाऽव्ययाऽन्यतरप्रकारकप्रातिपदिकीयाः समासाः ।

५. यथावर्णमात्रानुक्रान्तानां प्रतिपरामर्शनीयनिर्देशभाजां प्रातिपदिकपरंपराणां मध्ये द्वितीयप्रभृतीनि प्रातिपदिकानि, तय. अत्तवे इत्यत ऊर्ध्वम् अत्तुम् इत्यादीनि ।

६. टिप्पणेषु तावद्—१. उद्धृताः पाठाः, २. धातवस्तदीयानि तिङ्रूपाणि च, ३. यौगिकतया निर्दिष्टानि प्रातिपदिकानि च तदीयानि सुब्-रूपाणि च, ४. अव्ययात्मकानि प्रातिपदिकानि, ५. पाणिनीयाः प्रत्ययाः, ६. शोधः इति पदं चैतदभिप्रायकं पदान्तरं च, ७. उसं. इति संक्षेपश्चैतदभिप्रायकं संक्षेपान्तरं च ।

(ग) सितया मुद्रया तावदेतानि निर्देश्यानि भवन्ति—

१. उक्तपूर्वमुद्रान्तरनिर्देश्यांशव्यतिरिक्तः स्थलाङ्कनात्मको भागः ।

२. उक्तपूर्वमुद्रान्तरनिर्देश्यांशव्यतिरिक्तष् टिप्पणात्मको भागः ।

३. अन्तःशब्दनिर्देशीयो यौगिको वा सांहितिको वाऽवान्तरनिर्देशः, तय. अ-तृष्य(त >)न्ती- ।

४. प्राधान्यभाजो निर्देशस्य प्रतिपरामर्शिका, तय. अत्तवे इत्यतः पश्चाद् '√अद् द्र.' इति ।

५. यथोपेक्षितप्रतिशब्दीयखण्डान्ते कोष्ठकीकृत्याऽन्यथा वा क्रियमाणौत्तरपदिकी प्रतिपरामर्शिका, तय. अत्र-···[अति°···] ।

# संक्षेपाः (Abbreviations)

## (क) आधारग्रन्थीयाः ( of Basic Texts, their Editions, Translations and Commentaries )

ऋ. = ऋग्वेद-संहिता– संपा. मैक्स. एफ. मूलर (Müler, Max. F.), लंदन (London) ।
—— संपा. सायण-भाष्य-युत–, नारायणशर्मन्-सोनटके, + चिन्तामणि-गणेशसूनु-काशीकर, पूना, १९३३–१९४६ ई. ।
—— संपा. स्कन्दस्वामि-उद्गीथाचार्य-वेंकटमाधव-, मुद्गलवृत्ति [=सायणभाष्यसंक्षेप-], विश्वबन्धु-, होशिआरपुर, १९६५ ई. ।
—— संपा. सायण-भाष्यसमेत-, मैक्स. एफ. मूलर (Müler, Max. F.), लंदन, १८९०–९२ ई. ।
—— संपा. दयानन्दस्वामि-संस्कृतहिन्दीभाष्ययुत-, अजमेर ।
—— संपा. स्कन्दस्वामि-वेंकटमाधव-भाष्य समेत-, त्रिवेन्द्रम् , १८२९ ई. ।
—— संपा. मराठी-इंग्लिश-भाष्ययुत-, शंकरपाण्डुरंग-, पूना, १८७६–८३ ई. ।
—— जर्मन-अनुवाद-, विविधविवरण-समेत-, ए. लुडविग् ( Ludwig, A.), प्राग-लाइपजिस् ( Prag-Leipzig ), १८७६–८८ ई. ।
—— जर्मन-अनुवाद-, के. एफ. गैल्डनर ( Geldner, K. F. ), गाटिंजन-लाइपजिस् (Gottingen-Leipzig), १९२३ ई. ।
—— [ वैदिकसूक्तसंग्रह- ] इंग्लिश-अनुवाद-, एच्. ओल्डनवर्ग- ( Oldenberg, H. ), आक्सफोर्ड ( Oxford ) SBE , १८९७ ई. ।
—— जर्मन-अनुवाद-, एच्. ग्रासमान- (Grassman, H.) लाइपजिस् (Leipzig), १८७६–७ ई. ।
—— इंग्लिश-अनुवाद-, आर. टि. एफ. ग्रिफिथ ( Griffith, R. T. H.), १८८९ ई. ।
—— [ वैदिकसूक्तसंग्रह- ] जर्मन-अनुवाद-, एच्. हिलेब्रान्ट ( Hillebrandt, H. ), गाटिंजन-लाइपजिस् ( Gottingen-Leipzig ), १९१३ ई. ।
—— [ वैदिकसूक्तसंग्रह- ] इंग्लिश-अनुवाद-, एफ. एम्. मैक्समूलर ( Maxmüller, F. M. ), आक्सफोर्ड ( Oxford ), १८९१ ई. ।
—— [ Vedic Reader ], इंग्लिश-अनुवाद-, ए. ए. मैक्डानल- (Macdonell, A.A.), आक्सफोर्ड ( Oxford ), १९१७ ई. ।

क. = कपिष्ठल-(कठ. कृष्णयजुर्वेदीय-) संहिता- ।

का. = काण्व (वाजसनेय-शुक्लयजुर्वेदीय-) संहिता,
—— संपा. सायण-भाष्ययुता-, रत्नगोपालभट्ट- + माधवशास्त्रिन्-, बनारस, १९०८–१५ ई. ।

काठ. = काठक-संहिता-, संपा. एल. वी. श्रोडर (Schroeder, L. v.), लाइपजिस् ( Leipzig ), १९००; १९२२ ई. ।
—— संपा. श्रीपादशर्मन्-, औंध, १९४३ ई. ।

—— [ पदसूची- ], आर. साइमन ( Simon, R. ), लाइपजिस् ( Leipzig ), १९१२ ई. ।

कौ. = कौथुमीय-सामवेद-संहिता–,

—— संपा. जे. स्टीवनसन् (Stevenson, J.), सोसाइटी ओरियन्टल टेक्सट्ज़् (Society Oriental Texts ), १८९३ ई. ।

—— संपा. सायण-भाष्यसमेता-, सत्यव्रतसामश्रमिन्-, BI. कलिकाता, १८७१–७८ ई. ।

—— संपा. सायण-भाष्यसमेता-, जीवानन्द-विद्यासागर-, कलिकाता, १८७२ ई. ।

—— संपा. [ छन्द-आर्चिक- ] सायण-भाष्ययुता, इंग्लिश-अनुवादसहिता-, भवभूतिभट्टाचार्य-, कलिकाता, १९३६ ई. ।

—— संपा. जर्मन-अनुवादसहिता-, थि. बेनफे ( Benfey, Th. ), लाइपजिस् ( Leipzig ), १८४८ ई. ।

—— संपा. इंग्लिश-अनुवादसमेता-, जे. स्टीवन्सन् ( Stevenson, J. ), कलिकाता, १९०६ ई. ।

—— संपा. इंग्लिश-अनुवाद-, आर. टि. एफ. ग्रिफिथ ( Griffith, R. T. F. ), बनारस, १८९३ ई. ।

खि. = ऋग्वेदीय-खिलसूक्त-संग्रह– संपा. जे. शेफ्ट्लोवित्स (Scheftlowitz, J.), IF. ब्रेस्ला (Breslou), १९०६ ई. ।

—— संपा. [ ऋग्वेदीय-सायणभाष्य-परिशिष्ट- ], नारायणशर्मन्-सोनटके, चिन्तामणिशर्मन्-काशीकर-, पूना, १९४६ ई. ।

—— संपा. [ ऋग्वेदसंहिता-परिशिष्ट- ] श्रीपाददामोदर-, पूना, १९५७ ई. ।

जै. = जैमिनीया-सामवेद-संहिता– संपा. डब्ल्यू. कालन्द ( Caland, W. ), IF. ब्रेस्ला ( Breslou ), १९०७ ई. ।

—— संपा. रघुवीर-, सरस्वतीविहार-ग्रन्थमाला, लवपुरम् , १९९५ विसं.

तै. = तैत्तिरीया-[ कृष्णयजुर्वेदीया- ] संहिता–, संपा. ए. वेबर ( Weber, A. ), लाइपजिस् ( Leipzig ), IS., १८७२ ई. ।

—— संपा. सायण-भाष्ययुत-, आनन्दाश्रम-, पूना ।

—— संपा. भट्टभास्कर-भाष्यसमेत- + ए. महादेवशास्त्रिन्-, पी. के. रंगाचार्य-, मैसूर, १८९४–९८ ई. ।

—— संपा. श्रीपादशर्मन्-, औंध, १९४५ ई. ।

—— संपा. माधव-भाष्ययुत-, रोअर- इ. बी. कावेल- प्रभृ. ( Roer, Cowell, EB., etc.), BI., १८५४–९९ ई. ।

—— इंग्लिश-अनुवाद-, बी. कीथ (Keith, B.), कैम्ब्रिज मसेचुसट (Cambridge Mass.), HOS. १९१४ ई. ।

पै. = पैप्पलाद- (अथर्ववेदीय-) संहिता– संपा. [१–१५ काण्ड-] एल. सी. बैरेट (Barret, L.C.), GAOS., १९०६ ई. ।

—— [१६–२० काण्ड-] ...

—— संपा. रघुवीर-, सरस्वतीविहार-ग्रन्थमाला, लाहौर, १९३६–४१ ई. ।

मा. = माध्यन्दिनी-[वाजसनेय-शुक्लयजुर्वेद-] संहिता-, संपा. उवट- +महीधर-भाष्योपेता-, वासुदेवलक्ष्मणशास्त्रिन्-, बम्बई, १९१२ ई.।

—— ,, ,, रामसकलमिश्र-, बनारस, १९१२-१५ ई.।

—— संपा. दयानन्दस्वामि-संस्कृत-हिन्दीभाष्यसमेत-, अजमेर।

—— इंग्लिश-अनुवाद-, आर. टी. एफ. ग्रिफिथ ( Griffith, R. T. F. ), बनारस।

मै. = मैत्रायणी-संहिता- संपा. एल. वी. श्रोडर (Schroeder, L. V.), लाइपजिस् (Leipzig), १९२३ ई.।

—— संपा. श्रीपादशर्मन्-, औंध, १९४३ ई.।

शौ. = शौनकीय-अथर्ववेद-संहिता- संपा. सायण-भाष्यसमेत-, शंकरपाण्डुरंग-, बम्बई, १८९५-९८ ई.।

—— संपा. सायण-भाष्यसमेत-, विश्वबन्धु-, होशिआरपुर, १९६० ई.।

—— इंग्लिश-अनुवाद-, डब्ल्यु. डी. ह्विले ( Whitney, W. D.), कैम्ब्रिज (Cambridge), HOS., १९०५ ई.।

—— इंग्लिश-अनुवाद- आर. टि. एच. ग्रिफिथ (Griffith, R. T. H.), बनारस, १८९४ ई.।

—— [सूक्त-संग्रह-] इंग्लिश-अनुवाद-, एम्. ब्लूमफील्ड ( Bloomfield, M. ), SBE., आक्सफोर्ड (Oxford), १८९७ ई.।

—— संपा. हिन्दी-अनुवाद-, क्षेमकरणदास, इलाहाबाद, १९१२-२१ ई.।

—— संपा. संस्कृत-हिन्दी-अनुवादसमेत-, हरिशंकरदीक्षित, मेरठ, १९१६ ई.।

—— [१०० सूक्त-] जर्मन-अनुवाद-, जे. ग्रिल् (Grill, J.), टचूबिंजन (Tubinjen), १८७९ ई.।

—— पदसूची- (Index-verborum), डब्ल्यु. डी. ह्विले (Whitney, W. D.), न्यूहावन, (New-Haven), १८८० ई.।

—— संपा. रु. राथ (Roth. R.) + डब्ल्यु. डी. ह्विले (Whitney, W. D.), बार्लिन, १८५५ ई.।

———

ABI., ABORI. = Annals (*of the*) Bhandarkar (*Oriental Research*) Institute, (*Poona*),

AG. = Arnold., (*E. V. Historical Vedic*) Grammar., *art*.

AM., AVM. = Arnold. (*E.V.* : *Vedic*)Metre (*in its Historical Development*).

A. O. = Acta Orientalia (*ediderunt Societates Orientales Batava Danica Norvegica*).

AR., Auf. = Aufrecht, (*Th.* : *Die Hymnen des*) Ṛgveda, *art*.

AVS. = Avery (*John,*) : Verb (*Inflection in* Sanskrit).

B., BA.= Bloomfield, (*Maurice* : *Hymns of*) Atharvaveda, *trans., art*.

BB. = Bezzenberge'r Beiträge zur Kunde der indogermanichen Sprachen.

BC. = Bloomfield, (*Maurice* : *Vedic*), Concordance.

BDG.,Brug. = Brugmann, (*K.* +) Delbrück, (*B.*) : Grundriss (*der vergleichenden Grammatic der Indo-Germanichen Sprachen*), *art*.

BDI., BDCRI. = Bulletin (*of the*) Deccan (*College Research*) Institute (*Poona*).

Benfey, (*Th.*), *art*.

Berg. BL.= Bergaigne (*Abel.* : *Etudes sure le*) Lexique (*du Ṛgveda* ; *Journal Asiatique*, 1883-84 ),

BKA. [=पै.] = Barret, (*L. C.* : *The*) Kashmirian Atharvaveda (*with critical notes*), B.

Böht. = Böhtlingk, (*Otto*), *art.*

Bollensen, (*F.*), *art.*

Boyer, (*A.*, *M.*), *art.*

Bradke, (*P. V.*) , *art.*

Brown. (*G. W.*), *art.*

BRR. = Bloomfield, (*Mourice*) : Rigved Repetition.

BRV. = Bergaigne, ( *A.* : *La* ) Religion Vedique.

BS. = Benfey, (*Th.* : *Die Hymnen des*) Sāmaveda.

BSG. = Benfey, (*Th.*): Samaveda Glossary, *art.*

Burrow= ( *T.* : ) The Sanskrit Language *art.*

BSOS. = Bulletin ( *of the* ) School ( *of* ) Oriental Studies (*Landon*).

BV. = Bhāratīya Vidyā (*Bombay*).

BW. = Böhtlingk, ( *Otto* : *Sanskrit* ) Wörterbuch (*in kürzeren Fassung*), *art.*

C. = Caland, (*W.*), *art.*

CA. = Choudhry, (*Tārāpāda* : *On interpretation of doubtful words in*) Atharvaveda.

Charpentier, (*J.*), *art.*

DAS. = Delbrück, ( *B.* ) : Altindische Syntax.

Debrunner, (*A.*) *art.*

Delbruck, (*B.*), Vedische Chrestomathie.

Dumont, (*L.*), *art.*

Edgerton, (*F.*), *art.*

Eelsingh, (*P. H.*), *art.*

Eggling, (*J.*), *art.*

Foy. (*W.*), *art.*

Gaedicke, (*C.*), *art.*

Garbe, (*R.*), *art.*

GG, = Geldner, (*K. F.*), : *der Ṛgveda in Auswahl, ester Teil*) Glossar, *art.*

Ghatage, (*A. M.*), *art.*

GK. = Geldner, (*K. F.* +) Kaegi, (*A* : *Siebenzig Lieder des Ṛgveda und mit Beitragen von R. Roth*).

GR. = Grassman, (*H.*) : Ṛgveda (*übersetzt und mit kritischen und erläutereden Anmarkungen Versehen*).

Grassman, (*H.*), *ed. art.*

Gray, (*L. H.*), *art.*

Gri. = Griffith, ( *R. P. H. I.* : *trans.* ऋ. मा. कौ. शौ.).

Grill, (*J.* : *Hundert Lieder der Atharva Veda, übers. und mit text-kritischen etc.*).

GRV. = Geldner. ( *K. F.* : *der* ) Ṛgveda (*überselzt und erläutert*).

GW. = Grassman. ( *H.* ) : Wörterbuch (*zum Ṛgveda*).

H., Hill.= Hillebrandt, (*A.*), *art.*

Haskal, (*W.* : *On the accentution of the Vocative in RV. & Atharveveda, IAUS* 1873).

Henry, (*V.*), *art.*

Hirt, (*H.*), *art.*

HL., HLR. = Hillebrandt, (*A.*) : Lieder (*des Ṛgveda, übersetzt*).

HM. = Hillebrandt, ( *A.* : *Vedische* ) Mythology.

Hopkins, (*F. W.*), *art.*

IF. = Indogermaniche forschungen.

IHQ. = Indian Historical Quarterly.

JAOS. = Journal (*of the*) American Oriental Society.

Johansson, (*K. F.*), *art.*

K. = Keith, (*A. B.* : *ed. trans.*).

Kaegy, (*A.*), *art.*

Kirste, (J.), *art.*

Klug, (*F.*), *art.*

KZ. = Kuhn ( *A.* + *Aufrecht, Th.*) : Zeitochrift ( *für vergleichende Sprachforschung*).

L. = Lanman, (*C. R.* : *Noun Inflection in the Veda*; *JAOS.* X 325-601).

Liden, (*E.*) *art.*

LRV., LR., Lud. = Ludwig, (*A.* : *der*) Ṛgveda (*order die heilegen Hymnen der Brāhmaṇa zum erster Male Vollstandig ins Deutsche übersetzt + mit Commentar und Einleitung, Vol. I.-VI.*), *art.*

MGC. = Meillet, (*A.* + *Vendryes, J.*: *Traite de*) Grammaire ( *Comparee des Langues*) Classiques.

Mac., MG., MVG. = Macdonell, (*A. A.* : *Vedic*) Grammar, *art.*

MGS. = ,, ,, ,, ,, ( *for* ) Students.

Max. = Muller, (*F. M.*), *art.*

MW. = Monier Williams, (*Monier* : *A. Sanskriṭ English Dictionary*).

MWA = Manfred (*Mayrhofer* : Kurzgefasstes) Wörterbuch (*des*) Altindischen.

MSL. = Mémoires (*de la*) Société (*de*) Linguitique.

MST. = Muir, (*J.* : *Original*) Sanskrit Texts. On the origin and progress of religion and institutions of India (*etc.*), 4 Vol.

MV., MVR. = Müllers, ( *F. M.* ) : Vedic Hymns (*Ṛgveda, SBE xxx ii*).

NIA. = New Indian Antiquary (*Poona*).

NW. = Neisser, (*W.* : *zum*). Wörterbuch ( *des Ṛgveda* ), *art.*

Neisser, (*W.*) ,, ,, ,,

OK.,OKP. = Oertel, (*H.* : *zur*) Kapiṣṭhalakaṭha ( *Saṁhitā* ).

Old. = Oldenburg, (*H.*), *art.*

ORN. = Oldenburg, (*H.*) : Ṛgveda (*Textkritische und Exegetische*) Noten.

OO. = Orient und Occident.

OV. = Oldenburg, (*H.*) : Vedic (*Hymns, trans.*).

PA. = ( *The* ) Pariśiṣṭas ( *of* ) Atharvaveda (*Vols. I-III., Bolling, G. M.* + *Nagelein, J.*).

PAOS.= Proceedings ( *of the* ) American Oriental Society.

PG. = Pischel, (*R.* +) Geldner, (*K. F.* : *Vedische Studien*).

Pischel, (*R.*), *art.*

PW. = (*St.*) Petersburg (*Sanskrit*) Wörterbuch ( *von Böhtlingk, Otto* + *Roth Rudolph*).

३, ११,१;५, ४, २; ३,५, १, ४; ५,५,१,४[२]; मै १, ४,१४S; ६, ८; २, १,७[७]; ३,५; ३, ६, १; काठ १०,१[८]; ११, ८; १९, ९; २२, १३[२]; -ग्नाः मा २४, ८; का २६, २, ३; तै ५, ६, १८, १; मै ३, १३, ९; काठ ४९, ८; -ग्नेन तै २, ५ ४, २¶.

¶आग्नावैष्णवी[a]- -वीम् मै ३,६,८; -व्या तै ५, ७, ३, २; ६,६,७,३,मै ४,७,२[२].

अग्नि-केतु[b]- -तुः तै ४,३, ११,५; काठ ३९,१०.

अग्नि-गूढ[c]- -ढानाम् खि ५,२, २[d].

¶अग्नि-चित्[e]- -चित् तै ५ २, ५,५;४,५,२; ७, ४; ५; ९, २[२]; ५,१०,५; ६, ३, १[२]; ७,६, १; मै ३,३,९[२];४, ३; ५; काठ २०, ३; २१, ७;९[२]; १२; २२, २; ६; क ३१,५; ३४,१; -चितः तै ५, ६.२,१;३, ४; मै ३, १, ९; ४, ३; काठ १९, १०; २२, ७; क ३०,८;३५,१; -चितम् तै ५,४,७,४; ९, ४; काठ २०, ५; २१, ९; १२ ; क ३१, ७; -चिता मै ३,३,१;४,८; -चिते मै ३,४, ३; काठ २२, ६; क ३३,१.

अग्नि-चोर->अग्निचोर-निपात[f]- -तेषु खि ४,२,९.

अग्नि-जु[g]- -जम् मै ३,७, ५¶[h].

अग्नि-जा[i]- -जाः ¶काठ ११,८[h]; २४,६; क ३७, ७¶; शौ १०, ४,२३; पै १६,१७,५.

१अग्नि-जिह्व[j]- -†ह्वाः ऋ १, ⌊४४, १४ (५, ५१, ८) ७, ६६,१०; १०,६५,७⌋; ८९, ७; ३ ५४, १०; ६.२१, ११; ५०, २;५१,१३[k]; मा २५,२०; ३३, ५३[k]; का २७,११,७; ३२, ४, १०[k]; तै २. ४, १४, ५[k]; मै ४. १२, १[k]; काठ ३५, १; -ह्वेभ्यः[l] तै ३. ५,८,१; ९, २; काठ २९,५; क ४५,६.

२अग्नि-जिह्वा[m]- -ह्वाः शौ ११, ११,१९; पै १६,१५०,७.

अग्नि*-जूत[o]- -ताः[n] खि ५,५,७.

अग्नि ज्योतिस्(>ष्)[o]- -तिषम् का ३.२,१.

अग्नि-तप्[p]- -तपः ऋ ५, ६१,४.

†अग्नि-तपस्[q]- -पोभिः ऋ १०, ६८,६; शौ २०,१६,६.

†अग्नि-तप्त[r]- -प्तेभिः ऋ ७, १०४,५; शौ ८,४, ५; पै १६, ९,४.

अग्नि-तेजस्[b]- -जाः शौ १०, ५, २५; पै १६,१३१,१.

¶अग्नि-तेजस्[s]- -जसम् काठ ८,

a) स्त्रियां ङीपः उदात्तनिवृत्तिस्वरेणोदात्तत्वम् (पा ४, १,१५;६.१,१६१)।

b) विप.। बस. पूप. प्रकृतिस्वरः (पा६,२,१)।

c) तस. उप. कर्मणि क्तान्ते पूप. प्रकृतिस्वरः (पा ६,२,४८)।

d) सपा. खि ३,२१,२; ५,२,२ अग्निदग्धानाम् इति, कौ २,१२२१ अग्निनुन्नानाम् इति, शौ६,६७,२ अग्निमूढानाम् इति, खिसा २४,१; ३६,६ अग्निमूल्हानाम् इति, पै १९ ६,१४; ४१,८ अग्निरुद्धानाम् इति पाभे.।

e) उस. उप.√चि + क्विप् प्र. धा. स्वरश्च प्रकृत्या (पा ३,२,९१; ६,१,१६२; २,१३९)।

f) षस. पूप. द्वस.। अग्निचोर्निपातेषु इति मुपा. स्वरः ?

g) उस. उप.√जन्+डः प्र. (पा३,२,९७)। तत्स्वरः।

h) सपा. अग्निजुम् <> अग्निजाः इति पाभे.।

i) विप.। उस. उप. विडन्ते कृत्-प्रकृतिस्वरः।

j) विप. (⌊मरुत्- प्रभृ.⌋ देव-)। अग्निना हूयते इति कृत्वा कर्मणि कृत् उप. प्रकृतिस्वरश्च। तारस्थ्यात्ताच्छब्द्यश्रुतिरिति कृत्वा तस. सामान्यः सामासिकस्वर इति भा.; वैतु. अन्ये बस. इति।

k) अग्नि-जिह्- (अग्नि-लोक- + (√वा ⌊*निवासे⌋>) वा- (=वासिन्-)> सस.अग्निजिह्व->(प्र३) इति मतम्।

l) =सपा. बौश्रौ ७,४ : १४। मै १, ३, ३५ अग्निहुद्भ्यः इति पाभे.।

m) षस.। सामान्यः समासस्वरः (पा ६,१, २२३)।

n) सपा. शांश्रौ ८, २१,१ अग्निदूताः इति पाभे.। अग्निहूताः इति मूको.।

o) बस. पूप. प्रकृतिस्वरः (पा ६ २,१)।

p) विप. (मरुत्-)। उस. उप.√तप् + कर्तरि क्विबन्ते कृत्-प्रकृतिस्वरः (पा ६,२,१३९)।

q) विप. (अर्क- ⌊=रश्मि-⌋)। बस. उप. भाप.। आद्युदात्तत्वम् उसं. (पा ६,२,११९ ⌊तु. उरु-चक्षस्- प्रभृ.⌋)।

r) विप. (अश्महन्मन्-)। सस. अन्तोदात्तः उसं. (पा ६,२,१४७)।

s) षस. समासान्तः टच् प्र.। चित्स्वरः।

१२; क ७,७.

अग्नि-त्रा- अन्°.

१अग्नि-दग्ध[a]- -ग्धानाम्[b] खि ३,२१,२;५,२,२.

२†अग्नि-दग्ध[c]- -ग्धाः[d] ऋ १०, १५, १४; शौ १८, २, ३५. [°ग्ध- अन्°].

¶अग्नि-दाह्य[e]- -ह्यम् काठ २३, ९. [°ह्य- अन्°].

अग्नि-दूत[f]- -तः ऋ १०, १४, १३; शौ २, १२, ७; १८, २, १†; पै २,५,८.

अग्नि,ग्नी(<ग्नि-इ्)ध्[g]- -ग्नित् ऋ २, १, [२; १०, ९१, १०]; ¶काठ ९, ८[३]$ ; ९$ ; ११[२] ; १२; १५[२]; २८,८[२] ; -ग्निधम् ऋ १०,४१,३; काठ २६,९[२]¶; क ४१,७[२]¶; -ग्निधे काठ ३५, १८ ; क ४८, १६; -¶ग्नीत् मा ७, १५$; तै ६,५,८,५[२];६; ७,१,५, ७; मै १,६,४; ९,१[४]; ४[२]; ५;८; ४,५,४[२];७,४[३];८,३; क ८, ११[३] ; १२ ; ४४, ८[२]; -ग्नीत् तै ६, ३, १, २ ; ५, ८,५; मै ४, ९, २; -ग्नीत् खि ५,७, ५, ४; तै २, ६, ५, ६; मै ३, ८, १०; क ३९, २; -ग्नीऽइत् काठ २५, ५; -ग्नीधः मै ४, ४, ८¶; -¶ग्नीधम् मै १, ४,१२;३,९, ८[२]; -¶ग्नीध्रे तै १,८, १८,१; २,६,९,१; ६, ६, १, ५;७, १, ५,६;७;७,२; मै १,४,१२; ६, ४;९,८;४,८,२;३; क[h]४४,८[h];

आग्नीध्र[i]- -¶ध्रः मै ४, ५, ९; काठ २६, १; २; क ४०, ४;५; -¶ध्रम् मा १९, १८$; का २१,२,७$; तै ३, १,६, १; २, ४,२; ४,७,८,१;५, ४, ६, ४; ६,३,१, १; ६ ; ४, २, ६; ७, १,६, ६;७; २, १, ३; मै १, ९,८; ३, ४, ४; ८, १; ८; ९[२]; १०[२]; ४, ५,९; ६, ५; ८, २; ३; काठ ९, १५ ; २१, ८; १२;२४, १०; २५,१० ; २६, १; २८, ४ ; क ३८, ३ ; ४०, ३;४; ४४,४; -¶ध्रस्य मै ३, ८,९; -ध्रात् ऋ २, ३६, ४[j]; खि ५, ७, ५, ४; मा २, १०; ११; का २,२,७; ८; तै ४, ४, ९,१;६,३,१,१[२]¶; ¶मै ३, ३, ८;८,१०[२]; ९, ४; ¶काठ २१, ८,२६,१[४]; २८, ४[२]; ¶क ४०, ४[४]; ४४, ४[२]; †शौ २०,२, २; ६७,५; -ध्रे मा ८, ५६; ३८, १८; का ९, ७,४; ३८, ५, १; तै ३,१, ३, २; ४,४,९,१; ५, ४,६,४¶; ¶६, ३, २,१; ३[२]; ६;४,२,१;६; ६, १, १[२]; ¶मै ३, ४,४; ९, १; ४, ५, १; ८, २;३; ९; ¶काठ २१,८[२]; २६, २[५]; २८,४[२]; ३४, १४ ; १५[२]; १७; ¶क ४०, ५[५] ; ४४, ४[२]; -ध्रेण मै ३, ९, १; काठ २६, २; क ४०,५.

आग्नीध्रीय[k]- -यः तै ६,३,

a) तृप. पूप. प्रकृतिस्वरः (पा ६,२,४८)।

b) पाभे. अग्निगूढानाम् टि. द्र.।

c) विप. (पितृ-) । सस. अन्तोदात्तः (पा ६,२, १४७)।

d) सपा. मा १९, ६० का २१, ४, १० अग्निष्वात्ताः इति पाभे.।

e) विप. (सोम-)। तृस. उप. √दह् + कर्मणि ण्यत् प्र.।

f) विप.(यज्ञ-, शत्रु-)। बस. पूप. प्रकृतिस्वरः ।

g) =ऋत्विग्-विशेष-। तै. पपा. अवग्रहो नान्यत्र । उस. उप. √इन्ध् + कर्तरि क्विप् प्र. कृदुत्तरपद-प्रकृतिस्वरश्च (पा ६,२,१३९)। अपि च अग्निध्- इत्ययं छन्दोऽनुरोध्युच्चारणसौकर्य्य-प्रयोजितः शकन्ध्वादि-पररूपात्मको भेदः द्र.। अयमेव च भेदो बाह्वृच एव मूलतोऽधीत इत्यपि संभाव्यते । यत्तु ऐब्रा ५, २५ शाब्रा ३०, १ खि ५, ७, ५, ४ इत्यत्र न्याय्यं दीर्घमध्यं रूपमुपलभ्यते ततो नैवास्य मतस्य किमपि हीयेत। ऋग्प्रैषाङ्गत्वेन हि तस्योपलम्भात्। यज्ञाङ्गतया तस्य मुख्यतरेण यजुर्विषयता न त्वृग्विषयता स्यात्। यदि याजुषं किमपि प्रकरणं बाह्वृचैः स्वीये ब्राह्मणादौ परिशिष्ट-धिया धृतमुपलभ्येत तर्हि प्राधान्येन यजुःशाखास्वेव श्रूयमाणस्य तस्य बाह्वृचेऽप्रधानैव श्रुतिरिति निरवद्यम्।

h) सपा. काठ २८,४ ग्रन्थपात इति संटि.।

i) विप. [अग्नीत्संबन्धिन्- (याग- [ऋ.])], नाप. (अग्नीत्सदन- [मा ८,५६ प्रभृ.], [आग्नीध्रकुण्डस्थ-] अग्नि- [मै ३,९,१ प्रभृ.])। शरणेऽर्थे रण प्र. पुनः स्वार्थे अञ् प्र. (पावा ४,३,१२०; ५,४,३६)। ञित्स्वरः।

j) आ आग्नीध्रात् इति च्छेदः द्र. (तु. सपा. होत्राद् आ, पोत्राद् आ प्रभृ.; वैतु. पपा. प्रभृ. एकमेव पदमिति)।

k) नाप.। तात्रजातिकेऽर्थे छ>ईयः प्र. (पा ४, २, ११४) तत्स्वरश्च।

१,३.

अग्नि-धान[a]- -¶नम् मै १,८,२; काठ ६,२; क ४,१; -नात शौ १२,३,३५; पै १७,३९,४; -नानि पै २०,३३,५; -†ने ऋ १०,१६५,३; शौ ६,२७,३; पै १९,१३,१५.

अग्नि-गूळ्ह[b]- -ळ्हानाम्[c] कौ २,१२२१.

अग्नि-नेत्र[d]- -त्राः मा ९,३६; का ११,१,२; तै १,८,७,१; मै २,६,३; ४,३,४; काठ १५,२; पै २,५३,१; -त्रेभ्यः मा ९,३५; का ११,१,१.

अग्नि-पवमान[e]- > ¶आग्नि-पावमा(न[f]>)नी[g,h]- -नीभिः तै १,५,७,३[i]; -नीभ्याम् तै १,७,६,४; -न्याम्[j] काठ २१,५; क ३१,२०.

¶अग्नि*-प्रतिष्ठान[k]- -नः काठ १४,९.

अग्नि-भ्राजस्[k]- -जसः ऋ ५,५४,११.

¶अग्नि-मत्[l]- -मत् मै ४,१,३[२]; काठ २७,५[२]; ३१,२[२]; क ४२,५[२]; ४७,२[२]; -मति मै १,६,११; ३[m],१,४;४,४; ७,७[२]; ४[m],५,२;८,५; काठ ९,१६; १९,३; २४,४; २५,८; २९,३; क ३०,१; ३७,५; ४०,१; -मते मै १,८,८[n]; -मन्ति काठ २४,१०; क ३८,३; -मान् काठ ८,१२; १९,२; २३,११‡[o]; क ७,७; २९,८; शौ ८,४,२‡[o].

अग्नि-मरुत्- > आग्नि-मारुत[i]- -¶तम् मै २,१,८; क ४५,१; -ताः मा २४,७; का २६,२,२; मै ३,१३,८. [°त- वैश्वदेव°].

¶आग्निमारुती[h]- -ती, -तीम् मै २,५,७.

†अग्निमि(ध्-इ)न्ध[p]- -न्धः ऋ १,१६२,५; मा २५,२८; का २७,१२,५; तै ४,६,८,२; मै ३,१६,१; काठ ४६,४.

¶अग्नि-मुख,खा[k]- -खा काठ ३७,३; -खाः काठ ३५,१८; क ४८,१६; -खान् तै २,६,९,१;६,६,१,५; ७,३,११,३$; मै ३,३,१०[१]; काठ२१,४;१०;४३,१$; क ३१,१९.

अग्नि-मूढ,ळ्ह[q]- -ढानाम्[c] शौ ६,६७,२; -ळ्हानाम्[c] खिसा २४,२; ३६,६.

अग्नि-मेदिन्[r]- -दी पै १६,७३,५.

अग्नि-या(न>)नी[s]- -नी काठ २२,५.

अग्नि-रुद्ध- -द्धानाम्[c] पै १९,६,१४;४१,८[t].

†अग्नि-रूप[k]- -पाः ऋ १०,८४,१; शौ ४,३१,१; पै ४,

---

a) नाप. । उस. उप. अधिकरणे ल्युट् प्र. स्वरः प्रकृत्या (पा ३,३,११७; ६,१,१९३; २,१३९) ।

b) कर्मणि क्तान्ते पूप. प्रकृतिस्वरः (पा ६,२,४८) ।

c) पामे. अग्निगूढानाम् द्र. ।

d) विप. (देव-) । बस. पूप. प्रकृतिस्वरः (पा ६,२,१) । उप. *नेतृ- + समासान्तः अप् प्र. (पावा ५,४,११६) ।

e) मलो. कस. (तु. टि. आग्नेयपावमानी-; वैतु. भा. देवताद्वन्द्व इति) ।

f) अण् प्र. तत्स्वर उभयपदवृद्धिर् इत्त्वं च (पा ४,२,२४; ७,३,२१; ६,३,२८) ।

g) = आग्नेयपावमानी- ।

h) स्त्रियां ङीपः उदात्तनिवृत्तिस्वरेणोदात्तत्वम् (पा ४,१,१५; ६,१,१६१) ।

i) पामे. आग्नेयपावमानीभिः द्र. ।

j) पामे. आग्नेयपावमान्याम् द्र. ।

k) विप. । बस. पूप. प्रकृतिस्वरः ।

l) मतुब् उदात्तः (पा ६,१,१७६) । ऋ. तै. पै. तच्छाखीयानि ब्राह्मणानि च वकारादिं प्र. श्रावयन्ति (तु. यस्था.) । शौ. याजुषाणि शाखान्तराणि तु मकारादिमिति विवेकः (तु. वैप२ अपि) ।

m) सपा. तै ५,१,३,२ प्रभृ. अग्निवति इति पामे. ।

n) सपा. तै २,२,९,६;७ अग्निवते इति पामे. ।

o) सपा. ऋ ७,१०४,२ अग्निवान् इति पामे. ।

p) =अग्नीध्- । उस. उप. √इन्ध् + कर्तरि अण् प्र. । कृद्-उत्तरपदप्रकृतिस्वरः पूप. मुमागमश्च (पा ३,२,१; ६,२,१३९; पावा ६,३,७०) ।

q) कर्मणि निष्ठायां पूप. प्रकृतिस्वरः । उप. < √मुह् ।

r) उस. उप. √मिद् + ताच्छीलिकः णिनिः प्र. ।

s) तस. स्त्रियां ङीप् प्र. (पा ४,१,१५) । तु. टि. अग्ने-यानी- ।

t) °ग्नी रुद्धा° (°ग्निर् अवरु° इति BKA) इति व्यस्त इव पाठः? यनि. शोधः (तु. मूको. पूर्वं स्थलं च) ।

१२,१.
अग्नि-वत्[a] पै २,७८,४.
अग्नि-व्रत्[b]- -¶वति[c] तै ५, १, ३,२; ६,१,८,३; २, ९,३; ६, ३, २; -¶वते[d] तै २, २, ९, ६; ७; -वान् ऋ ७, १०४,२[e]; ¶तै ५, ५,२,१;२[२]; पै १६,९, २†.
अग्नि-व(र्ण>)र्णा[f]- -र्णाम् खि ४,२,८[g];१२.
अग्नि-वासस्[h]- -साः शौ १२, १,२१; पै १७,३,२.
¶अग्नि-विद्[i]- -विदः मै ३, १, ९; -विदा मै ३,४,८.
अग्नि-विमो॑चन[j]- -नम् पै ९, ७, २.
अग्नि-वीशिका- काठपुष्पि १६.
अग्नि*-वेश.[k]- > आग्निवेशि[l]- -शिम् ऋ ५,३४,९.
अग्नि-शु॑मन[j]- -नम् पै ९,७, १३.
अग्नि-शाल[m]- -लम् शौ ९,३,७; पै १६,३९,७.
अग्नि-श्री[n]- -श्रियः ऋ ३,२६,५.
¶अग्नि- (स्तु>) ष्टुत्[o]- -ष्टुत तै ७,२,५,५;४,३,३; -ष्टुता तै ७,३,७,१[२].
¶अग्नि-(स्तो>)ष्टोम[p]- -मः तै १, ६,९,१; ३,१, ७,३; ५, ४,१०,३;६,४, ३,४;७, १, ४, २; ५, ४; १०, ४[२]; २, १, २; २,१;२; ३,२[२]; ५,५[२]; ६; ३ १३,१$;४,२, ५; मै ३,४, ४; ८, १०[२];९,५; ४, ४, १०; ५, २;७; काठ १४, ९;१५, १०[२]; २२, १[२]; २५, १०; २६, १[२]; २८, १; ३३,६; ३४, ८; १६; ३७,७[२];४३,३; क ४०, ३;४[२]; ४४,१; शौ ११, ९, ७$; $पै ८,१९,७; १६, ८२,७; -मम् तै १,६, ९, १; ७,२,९,२; ४, १०, १; मै १, ११, ९; ४, ४, १०;५,२; ६, ६; काठ १४, ९; २६, १; २८,१[२]; ३३,२; ३७, ११; क ४०, ४; ४४, १[२]; शौ १०,९,८$; $पै १४, ३, २६; १६, १३६, ८; -मस्य मै ३, ८,२[२];४ ५,२; काठ २४, १०[२]; २६,१[२]; क ३८, ३[२]; ४०, ४[२]; -माः तै ७, ४, ७, १; काठ ३३, ४[२]; पै १७, २९, १४; -मात् मै १, १०, ५; काठ ३५,२०; क ४८, १८; -मान् $पै ११, ५, ३; -मे तै ६, ६, ८,२;११,४; मै ३,८, ९;९, ५; ४,५, ४; ७, ६; काठ २९, २; ३७,११; क ४५, ३; -मेन तै १, ६,९,१; ७,१, १, २[२]; ३; ३, १;५, ३; मै १, ८, ६; ३, ८,१०; ४, ४, १०; काठ १४, ९[२]; शौ ९,९,२$; $पै ५,१४, २; १६, ७१,९;११४,१; -मैः शौ १२,३,३३$; पै१७,३९,३; -मौ तै ७,२,५,६;९,१; २;४,

a) तुल्यार्थे वतिः प्र. ।

b) यथा चास्मिन् प्राति. काश्चिच्छाखा वकारादिं काश्चिचापरा मकारादिं प्र. आमनन्ति (तु. अग्नि-मत्- टि. ) । तत्र यथा प्रत्ययाङ्गभूत-मकारवकारविकल्पः शाखाभेदेन प्रादर्शि तथा भूयसे विवेकाय (तु काठ २३, ११ शौ ८,४,२) विशेषमेनं विरहय्योभयत्र वाहृच्याः श्रुतेरभिन्नैव श्रुतिर्भवतीत्यपि द्र. ।

c) पाभे. अग्निमति मै ३,१,४ द्र. ।

d) पाभे. अग्निमते मै १,८,८ द्र. ।

e) पाभे. अग्निमान् काठ २३,११ द्र. ।

f) बस. पूप. प्रकृतिस्वरः (पा ६, २,१) ।

g) अग्नि-वर्णाम् इति मुपा. स्वरः शोधापेक्षः ।

h) विप. (पृथिवी-) । पूप. प्रकृतिस्वरः ।

i) विप. । उस. उप ✓विद् + कर्तरि क्विप् प्र. । कृद्-उत्तरपदप्रकृतिस्वरः (पा ३,२,६१; ६,२,१३९) ।

j) तस. ल्युडन्त-कृत्-प्रकृतिस्वरः (पा ३, ३, ११५; ६,१,१९३;२,१३९) ।

k) व्यप. । अग्नेर्वेशः स्वरूपमिव स्वरूपं यस्येति कृत्वा बस. पूप. प्रकृतिस्वरः (पा ६,२,१) ।

l) तस्यापत्येऽर्थे इञ् प्र. ञित्स्वरश्च (पा ४, १, ९५; ६,१,१९७) ।

m) तस. न. उत्तरपदाद्युदात्तत्वम् (पा २,४,२५; ६,२, १२३) ।

n) विप. (मरुत्-) । उस. उप. ✓श्रि + कर्तरि क्विप् दीर्घः कृद्-उत्तरपदप्रकृतिस्वरश्च ( पावा ३, २, १७८ ; पा ६, २,१३९) । GW. प्रमृ <✓श्री [दीप्तौ] इति । यत्तु सा. इह संप्रसारणाऽभावमिवापश्यत् तद्-संबद्धमित्युपेक्ष्यम् । यदपि MW. बस. च उप. पूप. निरपेक्षं प्राति. चेत्याह तदपि निर्मूलं भवति । तथाहि सति पूप प्रकृतिस्वरत्वप्रसंगादिति दिक् ।

o) =एकाह-विशेष- । उप. धातोर् ह्रस्वादुत्तरं तुगागमे षत्वे (पा ८, ३, ८२) च विशेषः । उस. उप. अधिकरणे कृत् ।

p) =यज्ञायज्ञिय-सामविशेष-, (उपचारात्) क्रतु-विशेष- । षस. सामान्यः समासस्वरः (पा ६, १,२२३) ।

११,२; काठ ३३;३;३४,८[४].

अग्निष्टोम-प्रायण[a]- -णः काठ ३४,८; -णाः तै ७,२,९,१.

¶अग्निष्टोमं-संमित[b]- -तः काठ ३३,४.

अग्निष्टोम-साम[c]- -मम् तै १, ८, १८, १; मै ४, ४,९; -मानि[d] तै ७,२,५,५.

¶अग्निष्टोम-स्तोत्र[e]- -त्राणि काठ ३३,४.

¶अग्नि-(स्थ>)ष्ठ,ष्ठा[f]- -ष्ठः काठ २९,८; -ष्ठम् मै ३, ३, १०[२]; काठ २१, १०; -ष्ठस्य मै १, ५, १३; -ष्ठा तै ६, ३, ४,३;-ष्ठाः मै ४,७,९[५]; काठ २९, ८[५]; -ष्ठात् मै ४, ७, ९; काठ २९,८[१]; -ष्ठाम् तै ६,३, ४, ३-५; काठ २६, ५[२]; क ४१,३[१]; -ष्ठेन काठ २९,८.

अग्नि-ष्ठा[g]- -ष्ठाः मै ३, ९, ३; ४; काठ २६,५[१]; क ४१,३[१].

अग्नि-(ष्वा>)ष्वात्त[h]- -त्ताः मा १९, ५८; ६०‡[1]; का २१, ४, ९; १०‡[1]; -†०त्ताः ऋ १०, १५, ११; मा १९, ५९; का २१, ४, ८; तै २, ६, १२,२; मै ४, १०, ६[२]$; काठ २१,१४[२];$; शौ १८, ३, ४४; -त्तान् मा १९, ६१; का २१, ४,११; मै १, १०, १८¶; ४, १०, ६; काठ २१, १४; ३६, १३¶; -त्तानाम् खि ५,७, २; ६; मा २१,४३-४५; २४,१८; का २३,५,३[३]; २६, ४, १; मै ४, १३, ७: काठ १८, २१; -¶त्तेभ्यः तै १,८,५, १; काठ ९,६; क ८,९. [°त्त- अन्°].

¶अग्नि-सव- -वः तै ५,६,२,१.

?अग्नि-हुत[i]- -तः मा ३८, २८; का ३८,७,१.

अग्नि-होतृ[k]- -तारः ऋ १०, ६६, ८.

१अग्नि-होत्र[k]- -त्राः शौ ६,९७,१; पै १९,१२,७.

¶२अग्नि-होत्र[e]- -त्रम् तै १, ५, २,४; ९,१;६, ९,१[१]; १०, २[२]; २, ५,६,३; ३, २, २, २[१]; ४, १०, १;५,७, ४, २; मै १, ५, ५,१२;६,१०[१]; ११; ८,१[५];$; ४; ५;६[३]; ७[१२];८; ९[१];९, ५[४]; ३,३, ९; ६, ६;१०[४],४,१, ३; ४, ९; काठ ६, १[७]; ३[५]; ४[१]; ५[५];६[४];७[९];८[२]; ७,११; ८, ११; ९, १३[२]; २३, ७[४]; ३१, २; ३९,८; क ३,१२[७]; ४,२[५]; ३[१]; ४[५]; ५[४];६[९];७; ७, ८; ३६,४[४]; ४७,२; $शौ ११,९, ९; $पै ६, १०,२;१६, ८२, ९; १३४, ३; -त्रस्य मै १, ८, १; ४-६; ७[१]; काठ ६, ५[१]; ८[५]; ७, ५; २३, ७; क ४, ४[३]; ७[५]; ५, ४; ३६,४; -त्राऽइम् मै १,६, १०; ८, ७; -त्राय मै १, ८, ६; ८; -त्रे तै २,२,४,७; मै १,५, ५; ७; ८,१[१];४;६;७; ८[४]; काठ ६, ४; ६[३];७[३]; ७, ४[१]; क ४, ३; ५[१]; ६[३]; ५,३[२]; $शौ १०, ३, २२; १५, १२, १; $पै १६, ६४,९; -त्रेण मै १, ८,७[१]; ८;

---

a) विप. (यज्ञ-) । बस. पूप. प्रकृतिस्वरः ।

b) तृस. पूप. प्रकृतिस्वरः (पा ६,२,४८) ।

c) षस. समासान्तः टच् प्र. (पा ५,४, १०३) चित्-स्वरश्च ।

d) समासान्तभावाऽभावान्यतरस्य दुर्वचत्वेऽपि नापू. टि. दिशा तै. तद्भावानुगमाद् एतद् रूपं कृतसमासान्तस्य प्राति. इति संभाव्येत ।

e) षस. सामान्यः स्वरः ।

f) विप. (अग्नि- प्रभृ.) । उस. उप. √स्था + कः प्र. षत्वम् अन्तोदात्तश्च (पा३,२,४;८,३,९७;६,२,१४४)।

g) विच् प्र. । शेषं f टि. द्र. ।

h) विप. (पितृ-) । √स्वद् इति ह्रस्वोपधाद् विविच्य √स्वाद् (तु. ऋ९,६८,२) इत्यतः कर्मणि क्तान्ते पूप. प्रकृति-स्वरे (पा ६,२,४८) प्राप्ते परत्वाद् थाथादि-स्वरः (पा ६, २,१४४) इहाऽवसरं लभेत । ननु नैवमसावुत्सर्गो विशिष्टं पूर्वविप्रतिषेधेन चारिताथ्यार्हं पूप. प्रकृतिस्वरं बाधेतेति चेत् । सत्यमेवैतत् । तदप्यभ्यर्हितसमादरपरतयैवं व्याख्यायि (तु. सा.) । लक्षणानुकूल्यमात्रार्थं तावद् भावे क्ते षस. । तद्वति ताद्धितः अच् प्र. चेत्यादिसंकेतो ग्राह्यः । वाच्यविशेषसंज्ञाद्योतनार्थोऽयं विशिष्टः स्वरः स्याद् इति तु संभाव्येत ।

i) पामे. २अग्निदग्ध->ग्धाः टि. द्र. ।

j) मत. थाथादि-स्वरः ( पा ६,२,१४४ ) । स्विपः संवृक् इत्येतेन समानाधिकरणं विप. द्र. । उ. म. PW. प्रभृ. °हुत्- इति क्विबन्तस्य ष१ इत्याहुः । तत्र विभक्तिस्वरो नोपपद्येत । अन्तोदात्तात् (पा ६,१,१६९) इत्युक्तदिशा स उपपद्येतेति चेत् । न । तथात्वे हि नित्यः उस. स्यात् (तु. अग्निचित्-, सर्वहुत्-, सुकृत्- प्रभृ.) । नित्यसमासे चोक्तलक्षणाप्रवृत्तेरिति यावत् ।

k) बस. पूप. प्रकृतिस्वरः ।

३,३,९; काठ ६ ६; ८,११; क ४,५;७,८.

¶अग्निहोत्र-तप(न>)नी[a]- -नी, -नीम् काठ ६,३; क ४,२.

¶अग्निहोत्र-त्व[b]- -त्वम् मै १, ८,१.

अग्निहोत्र-ब्राह्मण- मैपुष्पि १, ८; काठपुष्पि ६.

¶अग्निहोत्र-हव(न>)णी[c]- -णी तै १,६, ८, ३; -णीम्[२], -ण्याम् मै १,८,५.

अग्निहोत्र-हुत्[d]- -हुताम् शौ ३,२८,६.

अग्निहोत्र-हुत[e]- -ताः पै १४, ३,२८.

¶अग्निहोत्रिन्[f]- -त्रिणः मै १, ८, ६; -त्रिणा मै १, ५, ७; -त्रिणि मै १, ५,११; -त्रिणे मै १, ८, ४; ७; काठ ६, ५; ६[२]; क ४,४;५[२]; -त्री मै १,५, १२;८.७; काठ ६ ८; क ४,७.

¶अग्निहोत्रो(त्र-उ)च्छेषण- -णम् तै २,५,३.६.

अग्नि-ह्रु[g]- -रेभ्यः मै १,३,३५[h].

अग्नी[i] ऋ ५,४५,४;६,५९,३;६०, १; तै ४,२,११,१†; ३,१३,८; मै ४,१०,५†; काठ ४,१५†.

अग्नीध्- अग्निध्- द्र.

अग्नी(ग्नि-इ)न्द्र[j]- -न्द्राभ्याम् मा ७,३२[२]; का ७,१४,१[२].

अग्नी-पर्जन्य[k]- -०न्यौ ऋ ६, ५२,[(२,४०,५). १६].

¶अग्नी-वरुण[l]- -णाभ्याम् काठ २९,३; -णौ तै ६,६,३, ३; मै ४,८,५[m].

¶आग्निवारुण[n]- -णम् तै १, ५,२,५; मै २,१,४.

¶आग्निवारुणी[o]- -णी मै २, ३, १; काठ १२,१; १३,६; -णीम् काठ १३,६.

१अग्नी-(सो>)षोम[l,p]- -मयोः खि ५, ७, २, ८; १०; मा १, २२;२,१५; २५, ५; ६; का १ ८, २; २,४,१; २७,५, १; ६, १; तै १, ६, २, ३;४; ४, १; ११,५;६¶; २,५, २, ७¶; मै ३, १५, ४; ६; ¶काठ ७, ५; ३२, १[२]; ‖क ५, ४; -मा ऋ १, ९३,८;१०,६६, ७; शौ ६, ९३,३[q]; पै १०,२,९; १९,१४, १५[q]; -†०मा ऋ १, ९३, २; ३; [४ (३, १२, ९)]; ६, ७; ९; १२; १०, १९, १; तै २,३,१४,१;२[२]; मै ४, १०, १; ११,२; १४, १८[४]; काठ ४, १६[२]; $शौ १, ८,२; १८, २, ५३; पै ४, ४, १०$; १९, २१, १४†; -माभ्याम् खि ५, ७,२,११[२]; मा १,१०;१३; ६, ९[२]; २४, २३; का १, ३, ७; ४,३;६,२,३[२]; २६,५,३; तै १, १, ४,२;५,१;८, १;६, ¶११, ५;६; ६,१,११, ६¶; ¶मै २, १,३[२]; ४; ३, ७, ८;१४, ४$; ४,३, १[२]; काठ १, १२[२]; ५, १; २३,८; २४,७[२]; ३१. ११[२];

a) नाप. (स्थाली-) । कास. ।

b) भावे त्वः प्र. तत्स्वरश्च (पा ५,१,११९ ; ३,१,३) ।

c) =यज्ञोपकरण-विशेष- । कास. । सत. लित्स्वरः प्रकृत्या (पा ६, १, १९३ ; २,१३९) । उप. <√हु + करणे ल्युट् प्र. । पूर्वपदात् (पा ८,४,३) इति णत्वं स्त्रियां ङीप् च (पा ४,१, १५) द्र. ।

d) सोपपदे क्विबन्ते कृत्स्वरः प्रकृत्या (पा ६,२,१३९) ।

e) विप. । बस. ।

f) नाप. । मत्वर्थीयः इनिः प्र.(पा५,२, ११५) तत्स्वरश्च ।

g) उस. उप. √ह्रु + कर्तरि अच् प्र. थाथादि-स्वरश्च (पा ३,१,१३४ ; ६, २,१४४) ।

h) अग्निजिह्वेभ्यः इति तै. पाभे. ।

i) इन्द्रा टि. द्र. ।

j) द्वस. आनङ्-आदेशाभावश्छान्दसः साधारणः समासस्वरश्च (पा ६, १, २२३) । विस्तरस्तु अग्नीषोम- इत्यत्र टि. द्र. ।

k) यत् सोमवरुणयोरग्नेर् ईद्-आदेशमाचार्योऽन्वशात् तदव्याप्तमनुशासनं द्र. । पर्जन्येऽप्यग्नेर् ईद्-आदेश-श्रवणोपलम्भात् । अतः पा ६,३,२७ सूत्रे तस्यापि उसं. कर्तव्यमिति दिक् । देवताद्वन्द्वीयस्य उभ. स्वरस्य प्रतिषेधे (पा ६,२,१४२) अन्तोदात्तः ।

l) देवताद्वन्द्वे आनङम् बाधित्वा ईद्-आदेश उभय-पदप्रकृतिस्वरश्च (पा ६,३,२६ ; २,१४१) ।

m) ॰ग्नीत्र इति मुपा. स्वरः शोधार्हः (तु. सपा. तै.पाठ-साक्षित्वेनोभयपदप्रकृतिस्वरस्यैव यथार्थत्वात्) ।

n) सास्यदेवतीयः अण् प्र. तत्स्वरः उभयपदवृद्धिः इत्वं च (पा ४,२,२४; ७, ३, २१; ६,३,२८) ।

o) स्त्रियाम् उदात्तनिवृत्तिस्वरेण ङीपः उदात्तत्वम् (पा ४, १,१५; ६,१,१६१) ।

p) मूर्धन्याऽऽदेशो विशेषः (पा ८,३,८२) ।

q) सपा. शौ ५, २२,१ सोमो ग्रावा इति पाभे. ।

३२, १[२]; क १, १२[१]; ३७, ८[१]¶: ४७, ११[२]; शौ १२, ४, २६; पै १७, १८, ६: –मौ खि ५,७,२,४;५; ६[२]; मा २, १५: का २,४,१; ¶तै १,६,९, २[२]; २,३,३,१; ३; ४, १२,२; ५, २,२[२];४; ६; ६, २, २;५, ६, १,३$;६,१,५,२[२]; ३; ¶मै २, १,४[४]; ४,३;१३, १$; ३, ७, १[२];८[२]; काठ ५, १; ७, ५; ८, १०[१];१०,२[१]; २३,८; २४,७[२]; ३२,१[१]; ३५,३; ३९, २; ¶क ५,४; ७,६[३]; ३७, ८[१]; शौ ३, १३, ५; ८, ९, १४[a]; पै ३, ४, ५; १६, १९,४; १९,१४, ९; –†॰मौ ऋ १,९३, १; ५; १०; ११; तै २, ३, १४, २[२]; ३,५,१,२; मै १,५,१;४, १०, १; १४, १८; काठ ४, १६[२]; –॰मौ शौ ६, ५४, २; पै ६, ११,७‡[b];८;९; १९,८,५; २८, ११[c].

¶अग्नीषोमीय, या[d]– –यः तै ७, ५, १५, १; मै १,५, ७; २,१,४;६,१$: ३,७, ८; काठ १५. १;२४,७[२]; २९, १; ३४, १४;३७,२[२]; क ३७, ८[२]; ४५, २; $ शौ ९, ६, ६; $पै १६ १११, ६; –यम् तै १, ८, १, १;८,१; २,३,३.३[२]; ५, २, ३; ३, २, २, २; ६, १, ११, ६[२]; मै १, ६,८; २,१,३; ४[१];३, ६, १०[२];८,२; काठ ८, १०[२]; १०, २[२];२३,७; क ७ ६[२]; ३६, ४; –यया मै १,५.६; ७; काठ ७, ५; क ५, ४; –यस्य मै ३, ४, ६;७, ८; –या तै ३, ४,३, २; –$याः मा २४, ८; का २६, २,३; मै ३.१३,९; ४,३, १¶; –यात् मै ३, ८, २; –याम् तै ३. ४, ३. ३; काठ १३, १२; –यायाः मै १, ५, १२; –ये मै ३,७, ८; काठ १०, २; –येण काठ १०,२[१].

२अग्नीषोम[e]– ॰मौ शौ ६, ६१, ३.

अग्ने (म्रा-इ)न्द्र- > ¶आग्नेन्द्र[f]– –न्द्रम् मै २,६, २; ४,३, २; काठ १२,७; ३४,१; –न्द्राः तै ५.६,१७,१; काठ ४९,६.

¶आग्नेन्द्री– –न्द्रीम् काठ १३,१२.

[a]) सपा. तै ४, ३, ११, २ चतुष्टोम: इति, मे २, १३,१० काठ ३९,१० चतुष्टोमम् इति पाभे. ।

[b]) सपा. ऋ ६,७४,४ सोमारुद्रौ इति पाभे. ।

[c]) सपा. आपश्रौ ६, २३, १ अग्नीषोमा इति पाभे. ।

[d]) विप. ( अष्टाकपाल- प्रमृ. ) । सास्यदेवतीयः छ> ईयः प्र. तत्स्वरश्च (पा ४.२,३२ ।

[e]) देवताद्वन्द्वेऽपीह कथं सामान्य-समासस्वरो न च देवताद्वन्द्वीयमुभयपदीयं द्वैस्वर्यम् (पा ६, २,१४१) इति विमर्शविशेषापेक्षमिव भवति। स्यादेतत्। नात्राऽग्निश्च सोमश्च देवतात्वेन श्रूयेते इति। कथमिति। उच्यते। तयोरत्र ब्रह्मात्मभावभावितस्य निखिलजगदुत्पादन-वैभवस्यर्षेर्मुख्यत्वद्वारेण साधनता-मात्रत्वेन हि श्रवणं भवति। यदि तयोरिह कामना-विशेषविशिष्टस्य कस्यचिद् ऋषेरार्थपत्यमुखेन स्तुत्यताऽभविष्यत् तदा प्राधान्यस्तुतिभाक्तया किल तयोर्मुख्यं देवतात्वमप्यभविष्यत्। इह तु पूर्वोक्तदिशा स्तोताऽऽत्मनः सर्वशक्तिसमन्वितत्वमेव प्राधान्येन स्तौति तच्छेषतामात्रतयाऽग्नीषोमयोश्चापि संकेतं करोतीति तयोर्देवतात्वमिहोपसर्जनीभूतमितीवार्थः साधारणसमासस्वरेण समर्पयितुमिष्टः स्यात्। एवमपि तद्देवतात्वस्य विहतत्वात् कथं तदुपाश्रयस्याग्नेर् ईद्-आदेशस्येह लब्धावकाशतोपपदेतेति पुनरपि संदेहः संजायते। तत्रापि खल्वेवमुच्यते। नात्र देवतात्वस्य नितरामुपघातो भवति। स्तोत्राऽऽत्म-वैभवमहिमैवैतेन गीयते यद् देवते अप्यग्नीषोमौ तत्र साधनतामात्रतां भजत इति श्रूयते। तेन शब्दस्वारूप्यविषये तद्देवतात्वस्य तदवस्थितत्वे सति. अत्रत्यतात्पर्यार्थतस्तद्विघातो नाम तदुपसर्जनीभाव इत्यापद्यते। सा चार्थी गौणता तावद् देवतात्वाश्रितस्वरस्य साधारणसमासस्वरेण बाधितत्वेन प्रदर्श्यते। निगदमात्रेण स्तोतॄणां श्रोतॄणां च तथात्वव्यक्तीभावस्य समर्पयितुमिष्टत्वात्। सौवरेऽर्थस्यानेन प्राधान्यं प्रदर्शितं भवति। अथ यच्छब्दस्वारूप्यनिघ्नमथवा प्रातिस्विकं तदीयं देवतात्वं भवति तस्याविहतत्वात् तदाश्रयो देवताद्वन्द्वस्तवदस्थो वक्तव्यः। तदिदमुपसर्जनीभूतं देवतात्वमुपजीव्याग्नेर् ईद्-आदेशोऽपीह चरितार्थो भवत्विति सर्वं चतुरस्रमनवद्यं च भवति ।

[f]) तु. अग्नीन्द्र- । द्वस. आनङ्ङ्-आदेशे सास्यदेवतीयः अण् प्र. तत्स्वरः उत्तरपदवृद्धिनिषेधश्च (पा ४, २, २४; ६,३,२६; ७,३, २२; ३,१,३) ।

अग्ने-या(न>)नी[a]- -नी तै ४, ४,६,२; मै २,८,१३

¶अग्न्या(ग्नि-आ)धेय[b]- -यम् मै १,६,१२; १३; काठ ८, १०[1]; ९, १५; क ७,६[3]; शौ ११, ९, ८$; पै १६.८२, ३$; -यस्य मै १, ५, ६[2]; काठ ७,४; क ५, ३; -याय काठ ८, ११; क ७, ८; -ये मै १,६, ४[5];५; काठ ९,१५;-येन तै ५,४,१०, ४; काठ २२,२.

¶अग्न्यु(ग्नि-उ)पस्थान[c]- मैपुष्पि १,५; -नम् मै १,५,८;६,१०; काठ ७,५,६; क ५,४;५.

अग्न्ये(ग्नि-ए)ध[d]- -धम्[e] मा ३०, १२; का ३४,२,४.

?अग्नेष्ठ पै २०,५३,७.

अग्र, ग्रा[f]- -ग्रम्[g] ऋ १, २८, ६; ११२, १८; ३, ५, [५; ४, , ५,८];३०, १७;३१,६; ३९, ३; ५५, ७; ४, १३, १; २७, ५; ४६, १;४७,१; ६,६५, २; ७, ९१, ५ ; १०, ८, ४; ७१, १; ७५,३;४;८३, [(८, १००, २) ७];८५,१९[h];१००,१२; १०३, ८[1]; १०७, ५; १११, ८; १३५, ६; खि ४, ९,४; मा ११, १७; १३, ५१; १७, ४० †[1] ; २३, २४ ; २७, ३०†; ३३, ५९†; का १२, २,६;१४,५, ५; १८, ४, ८†[1]; २५, ६, ४; २९, ३, ८†;३२,५,५†; तै १, ७, १२, २; ¶२, ३,४, ३[4] ; ४[2]; १४, ५‡[1]; ६[2]$; ३, ५, ६, २; ४, १,२,२;५,१, २,५; २,१, ५¶; ¶६, ३,९,५[1]; ४, ११,१[1]; ६, ११, २;३;७, २, ७, २[2]¶; ४, १९, ३; मै १, १,४[1k]; ८, ९; १०, ३;२, ५, ६¶, ७, १६†; १७; ३,१,४; १०, १[4]¶; १३, १; ¶४, ३,५[2]; ६,४[2];†;७,९; ८, ९[1]; १२, २†[h]; काठ९. ६; १०,१२†[h];१३; ११, ४[5]; १२, ७[1];८;१३,७[2]; १४,३; १६, २; १७;१९,३; २५, ५[1]; २७, ९[4]; ३०, ३[2] ; ४४, ८ ; ४५, १२; क ८,९; २५,८; ३०, १; ३९, २[2]¶; ४६, ६[2]¶; कौ १, ७०‡[1]; २,९७८; १२०६†[1]; ३, ३,१३; जै १, ७, ८‡[1]; २, २, ८; ४, २३, ९†; शौ २, २६, २ ; ४, १, ५; १९, ३; ३२, ७†; ६, १३७,३; ७, १,१; ३, १;८६,२†[h]; ८७,४;५; ८, ७, ३;१२;१०,८,८; १२, ३, १०; १४,१, २४†[h]; १६,१,६; १८, १, २७; २८ ; पै १, १३, ४; ३८, ४; ५१, १; २, १२, २; ४,३२,७; ५,२, ४;८; १५, १; ५;२८,५;९,११,८; १६, १२,

a) अग्ने इत्यामन्त्रितं पदं तदवस्थमत्र पूर्वपदीभूतं द्र. (तु. वायो-यानी-, अन्तरिक्ष-यानी-)। एभिः पूर्वपदैस्तन्मुख्यो वैदिक्यः स्तुतयः संकेत्यन्ते। अग्ने इत्येवमारभ्यमाणस्तुतिकलापद्वारेण यानी शकटिकाऽभीष्टप्रापिकेतीष्टकाविशेषणतायां तात्पर्यपर्यवसानं भवति। एवमेव वायो-यानी-,अन्तरिक्ष-यानी- इति चेष्टकाविशेषणपदे व्याख्यातव्ये भवतः। सर्वत्र देवानामिति संबन्धे षष्ठी भवति। तत्संबन्धिन्यसीत्यर्थः। यत्तु सा. यानीइति पदमग्न्यादीनां विशेषणमाह प्राप्कोऽसि इति, तन्मन्दमेव भवति। करणे ल्युडन्तात् स्त्रियां ङीबन्तादेतस्मात् तथाविधसंबन्धस्यानौपयिकत्वापत्तेः। न ह्यत्र इनिः प्र. मत्वर्थीयः शङ्कितव्यो भवति । तथा सत्यन्तोदात्तत्वस्य दुष्परिहरत्वात्। अपि चोपरिष्टाच्छ्रूयमाणम् अन्तरिक्ष- इत्यस्य विशेषणत्वं नितरां दुर्घटं स्यात्। भूयानप्यत्र विस्तरः वैश. द्र.।

b) नाप.। उस. कृत्स्वरः प्रकृत्या (पा ६,१,२१३;२, १३९)। उप.< आ √धा।

c) नाप.। उस. ल्युडन्त-कृल्लित्स्वरः प्रकृत्या (पा ३,३, ११५; ६,१,१९३;२,१३९)।

d) =अग्नीध्-। उस. उप. √इध्+कर्मणि अण् प्र. (तु. [अंशतः] भा. [तैब्रा ३, ४, ८, १]; वैतु. म. <√एध्> धि इति)।

e) सपा. तैब्रा ३,४,८,१ आग्नेन्धम् इति पाभे.।

f) विप., नाप. (अग्रभाग-, मुख- [ऋ ३, १०, १७ प्रमृ.])। < √आ√गम् इति या [६, ३] प्रमृ., <√अङ्ग्+रन् प्र. (पाउ २, २८)।

g) क्वचित् वा. क्रिवि. द्र.।

h) =सपा. या ११, ६ । तै २, ४, १४,१ अग्ने इति पाभे.।

i) सपा. तै ४,६,४,३ अग्ने इति, मै २, १०, ४ काठ १८,५ क २८,५ शौ १९,१३,९ पै ७, ४,९ मध्ये इति पाभे.।

j) सपा. ऋ २, १५, ८ मै ४, १४, ५ वलम् इति पाभे.।

k) सकृत् सपा. तै १,१,५,१ अग्ने इति पाभे.।

l) सपा. ऋ ७,८,१ अग्ने इति पाभे.।

३; १३,२; १०१,३; १७. ३६, १०; १८,३,३†[a]; २०, १, १; २, १ ; -ग्रमऽ-ग्रम् ऋ १, १२३, ४; -†ग्रा ऋ १०,८७, १०; शौ ८, ३, १०; पै १६, ६,१०; -ग्राः पै २, २५, १?; -¶ग्राय मै ३, १०, १; -ग्रे[b] ऋ १,३१,५; १२६, ४; १२७, १० ; १६४, ८; २२; २, १७, ३; ३,४८,२;५८, ४; ४,५, ७; ५,१,४;५;८०,२[२]; ७,८,१; ९, ३; १५,५; ३३, १४; ४४, ४; ६८,९; ८०,२; ८,६,२४; ५३, ८; ५९, ६; [१००, २ (१०, ८३,७)],९, ६९,१; ७३, ९; ८६,१२[३];४२;९६, १; ९९. १; १०६,१०; १०,१,१; १८, ७; ४५, ५ ; ६९, १ ; ८५, ३८[c]; १०७,९; ११०, ४ ; १२१, १; १२९, ३; २; खि १, ४, १०; ६,६;२,९,३; ३,५,८; २२, २; ५, ७, ४,५; ७, ७, ६; मा १, ०२[२]; ८. ३७ ; ९, ७; २३; †१२, १३;२२; १०६; १३,१; ४†;५१; १९, ८७; २३, १†; २५ ; २५, १०† ; २९, २९†; ३१, १७[d];२१; ३७, ५; का १, ४,२;८.११,२; १०, २,४; ५.

१; †१३,१,१४;२,५; १४, १, १; ४†;५,५; २१,६, ८; २५, १, १†; ६, ५; २७, १०, १†; ३१,४,५†; ३५,२,१[२];५; ३७, १, ५; तै १, १. ५, १[२e], ५, १०, १;६, ९,२¶; ७, ७, २; १०, १; २, ४, १४, १‡[a]; ६, ७, ४¶; ३,१,४, २[२];१०, २; ५, ४,२; †४, १, ३,४;८, ३; २,१,४;२.३;८.२; १०, ४[२]$; ६, ४, ३‡[f]; ¶५, १,२,४; ४, ५$;६,३;७, २;२, १, ५†; २, ६; ४,३,३; ५, १, २†; ६, ४, २;७,४, ३$[g];५, ३; $९, १; २;¶६,२,३, ५[२];४,४; ५, २; ३,१०,४;४, ३,२; ५,१; ५,६, १[२]; ¶७,१, १,४; ५, १; २, १०, २;४, २,१; ५,१; ५, ४, १; ¶मै १, १, ४$; $१, ३[२]; १५; $४, ३; ६,१$; ३[३]; ७[a]; ८; ९;१३[ॅ]; ७,२; ८, १[४]; ४[२]; ९,४;१०, १८; $११,१;४; २, २,७[h]; ५,५[२];७, ३†; ८†; ९$; १५[२]$;†; १७$; १३, २३†; ३, १,१[२];३[२];५; ६; ८[२]; २, ४; ३, ९; ४, ८[२]; ९; ६, ५; ७[२]; ७, २; ४; ८-१०; ८, ३[२]; ९, ३;४[२]; १०,३;११, ९$; १२,

१६†; ४, $१, २; ८ ; १२[२]; १३;$२,५;३,२;४,२;९; १०; ५,२[३]; ६; ६, ८; ७,२; ८, ३; ८; ९, १$ ; १२, ६$ ; १३, ३†; १४,१$; काठ ५, ६; ६, ४[२]; ६;७,३; ४; ५; ८; १२[२]; ८,२;४[४];१०[७];९,१२; १२, ३; ६; १३,१४; १४,२; †१६, ३; ८; ९; १५; १७$; २० ; १८, १९[२]; १९, २; ४[२];†; ५; ७[३]; ११†; २०,५†; २१, ४[a]; ६; २२,४;२३,८; २४,६; २५,५; २७, ६[२]; २८,४; ६; ३०, २; ८[३]; ३१,१; ६[२]; ९[२]; ३६, ६; १३; ३७,९[२]?[i]; ३८, ३; ४०, १४†.४५,११†;¶क $४, ३[१]; ५;$५,२-४; $६, २; ७; ९[४]; ७.६[७];२५,६†; ८$; २९, २$; ७[१];८; ३०,२[१];†; ३; ५; ३१, १†; ७†; २१ ; ३७, ७; ३९, २; ४२, ६[२]; ४४,४[j]; ६; ४६, ४; ४७, १; ६[५]; ९[२]; †कौ १, ५३३; ५५१; ५७२; २, २९०; ३८३[३]; †जै १, ५५, १ ; ५६, ३; ५८, ७ ; ३, २४, ६; ३१, ३[३]; शौ १, ३४,२; २,२९, ७; ३४, ३;४; ३,४,४;९, ६; १२, ५;२२, ३; ४, १,२; २, ६‡[k];

[a]) पाभे. अग्रम् ऋ १०,८५,१९ द्र. ।

[b]) क्वचित् वा. क्रिवि. द्र. ।

[c]) =सपा. आपमं १.५,३;८;१३ पागृ १, ७,३ कौसू ७८,१० । पै १८,७,१ मागृ १,११,१२ अग्ने? इति शोध्यः पाभे. ।

[d]) सकृत् सपा. मै २,७,१५ काठ ३९,२ पै १९.४६, ३ तैआ ३,१३,१ काठपु १९ आपश्रौ १६,२९, २ अधि इति पाभे. ।

[e]) पाभे. अग्रम् मै १,१,४ द्र. ।

[f]) पाभे. अग्रम् ऋ १०, १०३, ८ द्र. ।

[g]) =सपा. तैआ ३,११,९ । शांआ १२, ४ आगान् इति पाभे. (तु. टि. वैप२) ।

[h]) सपा. काठ ११,२ अग्ने ? इति शोध्यः पाभे. ।

[i]) पाठः ? (तु. सपा. तैब्रा २,७,१५,२[२] अग्ने इति पाभे. [तु. VV २,८६३]) ।

[j]) सस्थ. काठ २८,४ मन्थपात इति संटि. ।

[k]) सपा. ऋ १०,१२१,७ मा २७, २५; ३२, ७ का २९,४,३ तै ४,१,८,५ मै २,१३,२३ काठ ४०, १ तैआ १,२३,८ विभे. ।

७†;८;१४, १[2]; १९, ४; २८, ४[a]; ५,१२, ४†; २८, ११; ६, ११६,१;७, ८७, २; ११५, २; ८, १०, १; ९, ४, २; ५,२०; †१४,८;२१; १०, ७, २८; ८, २१[2]; ११,१, २३; १२, १५; १२, १,८; २४; २, ३१†; ३, १; ६; ४, २४; १३, २, ३९; १४, २, १†[b]; ३२; ५०; १८, ३, ५७†; १९, ६, ९‡[c];२२, २१; २३, ३०; ३१, ९; ३५, १;४१,१[d];५२, १†; ५३, १०; ५६, २; पै १, ३०, १†; ५३, ३;९२,४;२,९,२; २५,२; ५२, ३; ५५, १†; ५९, ९; ७३, १;३, १,४;८,२; २०,५; ३२, ४–६; ३८,१[2]; ४,१, १†; ८; ९; ३,२; ३; ५, १०; १०, २; ११,१;१३,५; १४, ६;१७, ३; ५, २,१;७; २५, ३; ४; ६,६, ४;९,५;१४, ४; ८, ९, १; ९, ५,७‡[e]; १०,५, ९; ६,८; ११, ४,१;५,१३; १२,२, १०; १३, ३,३;५,३; १४, १४; १४, ३, ७; १६, २४,२; ४९, ७; ५६, १-१८; ६०, ८; ६६, ८†; ६७, १[2]†; ९१, ३; ९६,४;५; १०२, ८[2]; १३३, १; १७, १, ९;९, ९;१८,४; ३३,१†; ३६, १;६;१८,१०, २; १३,७; २४, ७; २७,१; १९, २४,१९; ४६, ३;१३; २०, १४, ९;१८, ३†; २०, ३; २४, ४[2]; ३३, ३; ३५, ३; –ग्रेण[g] खि ५, ७, ३, ९; मा ६, २; २८, २०; का ६,१,२; ३०, २, ९; तै १,३, ५, १; २,३, १४, ५‡[f];६, ८, ४¶; ६,३,३, ३; ९, ५¶; मै १, २,१४[2]; ¶३,८,४;९, १[2]; ३[2]$; ५; १०, १; ६, ¶४,१, १२[2];८, ३;११, ८†; काठ ३, ३; १९, १३; २५,५; २६, ५; ७; क २, १०; ३९, २¶; ४१, ३; ५¶; पै १, ८६,७; –ग्रेषु ऋ ८,६,७. [°ग्र- अति°, २अन्य°, अयस्°, अंशुष्क°, आग्रयण°, आग्रायण°, आरा°, २आश्विन°, १इषु°, उक्थ्य°, २उपांशु°, ऐन्द्रवायव°, गो°, चन्द्र°, जिह्वा°, ज्योतिस्°, तपुस्°, नख°, १मद्°, मन्थिन्°, मैत्रावरुण°, यद्°, यूप°, १वात°, वायु°, शुक्र°, १शुष्क°, स°, सम्°, १सायक°, हृदय°].

अग्र-जा[g]- -जाम् ऋ ९,५,९.

अग्र-जिह्व[h]- -ह्वम्[i] मा २५, १; का २७,१,१; मै ३, १५,१.

अग्र-(नी>)णीति[j]- -तिम् ऋ २,११,१४.

अग्र-तस्(:)[k] ऋ १०, ९०,७[l]; खि ३, १६, ४; मा ३१,९†[l], का ३५,१,९†[l];¶मै १,८,७;२, ५,३; काठ १३,३¶; शौ४,१०, २; ५, १७, १४; पै ४,२५,३.

अग्र्(<ग्र-अ)य(न>)ण[m]- आग्रयण[n]- -णः मा ७,

a) सपा. पै ४, ३७,४ उग्रौ इति पाभे.।

b) पाभे. अग्रे ऋ १०,८५,३८ द्र.।

c) सपा. ऋ १०, ९०,५ तैआ ३, १२, २ तस्मात् इति, मा ३१,५ का ३५,१,५ कौ ४,७ जै २,३,१० ततः इति च पाभे.।

d) पाभे. अग्रे तै ५,७,४,३ द्र.।

e) क्वचित् वा. क्रिवि. द्र.।

f) सपा. ऋ २,१५,३ विशिष्टः पाभे.।

g) विप. (त्वष्टृ-)। उस. उप. विडन्त-कृत्-स्वरः प्रकृत्या (पा ३,२,६७; ६,१,१६२;२,१३९)।

h) षस. सामान्यः समास-स्वरः (पा ६, १, २२३)। जिह्वायाः पर-प्रयोगो ह्रस्वश्च (पा २,२,३१;१,२,४७)।

i) सपा. तै ५,७, ११,१ काठ ५३,१ जिह्वाग्रेण इति पाभे.।

j) विप.>नाप.। बस. पूप. प्रकृतिस्वरः (पा ६,२,१)। उप.√नी + स्त्रियां क्तिन् प्र. (पा ३,३,९४) णत्वम्।

k) आद्यादेराकृतिगणत्वात् तसिः प्र. (पावा५,४,४४) तत्स्वरश्च।

l) =सपा. तैआ ३,१२,३। शौ १९,६,११ पै ९,५,९ अग्रशः इति पाभे.।

m) उस. उप.<√इ + कर्मणि ल्युट् प्र. लित्-स्वरश्च प्रकृत्या (पा ६,१,१९३; २, १३९)। शकन्ध्वादेराकृतिगणत्वात् पररूपत्वं णत्वं च (पावा ६, १, ९४ पा ८,४,३)। अथवा कस. उप. भावे प्र. द्र.। अस्मिन् पक्षे °ण- इत्येवं प्राति. अन्तोदात्तम् (पा ६, १, २२३)। असंज्ञा-विषयत्वाद् णत्वं चापीह उसं.। कल्पद्वये समानमपि सत् पररूपत्वं शाखाविशेषनिघ्नं द्र.। तथाहि यावदुपलब्धि मा. का. तै. च तद् भवति मै. काठ. क. च न भवति (तु. आग्रयण इति आग्रायण- इति च)।

n) =ग्रह-विशेष-। नापू. टि. दिशा प्रथमे कल्पे स्वार्थिकः अण् प्र. उसं. (तु. भा. तै १,४,१०,१)। द्वितीये च

२०; १३,५८; १८, २०[a]; का ७, ८, २; १४, ७, १०; १९, ७,२[a]; ¶तै १,४, १०,१; ११, १; ४, ३,२, ३; ७, ७, १[a]; ६, ४,११,३;४[२]; ५,७,१[२]; ८, १; १०,१[२];२[१]; ७,२,७, ४; ८, १[१]; २[१]; ४[१]; ६; ७; क ३, ४[b]; २८, ११[a]; -णम् ¶तै ५, ७, २,५[१];६,४, ११,२;३[१]; ७, ५, ४,१; पै ४,४०,१;४; -णस्य ¶तै २, ३,१०, ३; ३, १, ६, ३$; ६,४,११,२; ७, २,८, ६; ७; -णात् मा १३, ५८[c]; का १४,७,१०[c]; ¶तै ३,१, ९, १; ४,३,२,३[c]$; ६,५, ७,१[१]; ८, १;१०, २[१]; -णे तै ६,४, ११, ३¶. [°ण- सु°].

¶आग्रयण-त्व[d]- -त्वम् तै ६,४,११,२.

¶आग्रयणा(ण-अ)ग्र[e]- -ग्राः तै ६,४, ११,१[f]; -ग्रान् तै ६,४,११,१;७,२,७,३.

अग्र-यावन्[g]- -वा ऋ १०, ७०,२.

¶अग्र-व(त्>)ती[h]- -ती तै २,३,४,३[१];४.

अग्र-शस्(:)[i] शौ १२, ४,३३; १९, ६, ११‡[j]; पै ९,५,९‡[j]; १७,१९,३; २०,२५,६.

?अग्राग्नि- -ग्निः पै १५,१२,६.

अग्रा(ग्र-अ)द्वन्[k]- -ऽद्वाना ऋ ६,६९, ६.

अग्रा(ग्र-अयन>)यण[l]-

¶आग्रायण- -णः मै १, ३,१३[b]; २, ७, १९; ११, ५[a]; ४, ३,२[२]; ५,९; ६,१; ४[१]; ७, १;४;८, ७$; ८[२]; ९[२]; काठ ४,५[b]; १६, १९$; १८, ११[a]; २७, ९[२]; १०; २८, १; ७; ९; १०; ३०,२[४]; ३; क २५, ९$; ४४, ७; ९; ४५, १; ४६, ५[४]; ६; -णम् मै ४,३, २[२];६, ४[५]; ९; काठ १२, ७[२]; २७, ९[७]; १०; -णस्य काठ १२, ७; २७, ९; -णात् मै २, ७, १९[c]$; ४, ६, ४; ७, १; ८, ९; काठ १६.१९[c]$; २७, ९; २८, ७[२]; ९; क २५,९[c]$; ४४, ७[१]; ९; -णेन काठ ८,१; १२,७[३] क ६, ६. [°ण - सु°].

¶आग्रायण-त्व- -त्वम् काठ १२,७;२७,९.

¶आग्रायण-पात्र[m]- -त्रम् काठ २८,१०[२]; क ४५,१[१].

¶आग्रायणा(ण-अ)ग्र[e]- -ग्राः[f] काठ ३०, २[२]; क ४६, ५[२]; -ग्रान् मै ४, ६,४;८, ९; काठ ३०,३; क ४६,६.

अग्रि(म>)मा[n]- -मा ऋ ५, ४४,९.

१अग्रिय्, या[o]- -†यः ऋ १,१६, ७; ८, २६, २५; ९, ७,२;३; ६२, २५; २६; ८३, ३[p], ८६, १२; १०, १२०, ८[q]; कौ २, १२५; ११६; २२७; ३८३; ४७९; ४८०; ३, २, २; जै २,

---

कल्पे मत्वर्थे अण् प्र. (पावा ५, २, १०३ [तु. वाच.]) । उभयथापि प्र. स्वरत्वेनाऽन्तोदात्तत्वं समानमिति दिक् ।

a) सपा. आग्रयणः <> आग्रायणः इति पाभे. ।

b) सपा आग्रयणः<>आग्रायणः (माश्रौ २,३,५,९ च) इति पाभे. ।

c) सपा. आग्रयणात् ( माश ८, १, २,८ ) <> आग्रायणात् इति पाभे. ।

d) भावे त्वः प्र. तत्स्वरश्च ।

e) विप. (ग्रह-) । बस. पूप. स्वरः प्रकृत्या ।

f) सपा. आग्रयणाग्राः <> आग्रायणाग्राः इति पाभे. ।

g) उस. उप. √या + वनिप् प्र. । पित्त्वान्निघाते कृत्-स्वरः प्रकृत्या भवति (पा ३,२,७४; ६,२,१३९) ।

h) मतुप् प्र. । पित्त्वान्निघाते स्वरेऽभेदः ।

i) शस् प्र. तत्-स्वरश्च (पा ५, ४. ४२) ।

j) पाभे. अग्रतः ऋ १०,९०,७ द्र. ।

k) विप. ( इन्द्राविष्णु- ) । उस. उप. √अद् + वनिप् प्र. । पित्त्वान्निघाते धा. स्वरः तदवस्थः (पा ३, २,७५; ६,२,१३९) । इह पदे पादादाव् आमन्त्रित-स्वरः षाष्ठिकः द्र. (पा ६, १,१९८) ।

l) तु. टि. अग्रायण-, आग्रयण- ।

m) कस. ।

n) तात्रभविकेऽर्थे डिमच् प्र. चित्स्वरश्च (पावा ४,३, २३ पा ६,१,१६३) ।

o) विप. (अग्नि-, सोम- प्रभृ.) । घच्छौ च (पा ४,४, ११७) इत्यत्र तत्रभवीयौ सानुबन्धः घच्>इयः उसं. प्र.; निरनुबन्धः घ>इयः प्र. चाभिप्रेतौ भवतः (तु. यनि. च वैप२ अग्रिय- इति च) । २अग्रिय-, अग्रीय-टि. अपि द्र. ।

p) सपा. जैमि १.८१ अग्रयुः इति पाभे. ।

q) सपा. पै ६,१,८ अग्रयः इति पाभे. ।

५,१०; ३,१३,१; २;२०, ११; ३१, ३;३६, ४;५; शौ ५, २, ८;२०, १०७, ११; -यम् ऋ १,१३,१०;४,३७, ४[a]; ६,१६, ४८; ७, ९२, २[a]; ९, ७१, ४[a]; तै ३,१, ११, १†; मै ४, १३, १०†; शौ ११, ८,३; -या ऋ ४,३४,३[b];१०,९५,२[c].

२अग्रिय[d]- -याय[e] तै ४ ५, ५, २.

अग्रीय[f]- -यम् मै २, ७, १३; -याय[e] मै २,९,५.

अग्रे[g]>

†अग्रे-गु[h]- -गः ऋ ९,८६,४५; कौ २,९६६; जै ४,२०,९.

अग्रे-गा[i]- -गाः खि ५, ६, १; मा २७,३१; का २९,३,३; तै १, ३,६,१; ३, १, १०, २; मै १,२,१४; काठ ३, ३; १०, १२; २१, १४; २६, ५; क २, १०;४१,३; -गाम् खि ५, ७, ४,५.

अग्रे-(गु>)गू[j]- -०गुवः मा १,१२; का १,४, २; तै १, १, ५,१; मै १,१,४;४,१,४; काठ १, ११[k]; ३१,१०[k]; -०ग्वः[k] क १,११; ४७,१०.

---

a) नाप. न. (श्रेष्ठ-भाग-, मुख्य-हविस्-)।

b) तृ१ क्रिवि. (अग्रगमनेन वा अग्रग्रहणेन वा अग्रम् वा) इति या [६,१६] प्रमृ. (वैतु. °युोत्>°याः, उत इति कृत्वा या. [पक्षे], वें. सा. GW. प्रभृ. विप. =अग्रसंपादिनः, अग्रपायिनः, अग्रार्हाः इतीव मन्वाना अन्यथा-वदाः)।

c) सपा. माश ११,५,१,७ अग्रिया इति पाभे.।

d) घन् प्र. उसं. (पा ४,४,११७)। अथवा यत्प्रत्ययान्तस्य अग्र्य- इत्यस्य यतोऽनावीयाद्युदात्तभाजः स्थाने अग्रिय- इत्याद्युदात्ता प्रातिभासिकी श्रुतिर्भवति (तु. अघ्न्य- =तै. अघ्निय-)।

e) सपा. अग्रियाय<>अग्रीयाय <> मा १६, ३० प्रमृ. अग्र्याय इति पाभे.।

f) अत्र छन्>ईयः प्र. उसं. (पा ४, ४, ११७)। नित्-स्वरः। शेषं १अग्रिय- टि. द्र.।

g) अग्रे इत्येतस्मिन्नुपपदभूते सप्तम्या अलुग् द्र.।

h) विप. (राजन्- [सोम-])। उस. उप. √गम्+डः प्र. (पावा ३,२,४८) इति प्रायोवादो भवति। वस्तुतस्तु सुपि स्थः (पा ३, २, ४) इत्यत्र सुपि इति योगविभागाद्दाकारान्तधातुमात्रादनुपसृष्टात् सुपि के प्र. सुसाधे √गा+कः इति सुलभ ऋजीयान् पन्थाः। थाथादि-स्वरः (पा ६,२,१४४)।

i) विप. (वायु-)। सोपपदाद् √गा + विच् प्र. (पा३,२, ७४)। यद्वा √गम् + विट् प्र. अनुनासिकस्य चात्त्वम् (पा ३, २, ६७; ६,४,४१) इत्येवं संप्रदाये लब्धप्रतिष्ठं भवतीति द्र.। उप. प्रकृतिस्वरश्चोभयत्र समानः(पा६,१, १६२;२,१३९)।

j) विप. (२अप्-)। अत्र दीर्घान्तं प्राति. इति संप्रदायो भवति। तथाहि। गमः क्वौ (पा ६, ४,४०) इति √गम् इत्यतः क्विपि अनुनासिकलोप ऊङ्-आदेशः (पावा६,४,४०)। यद्वा औणादिकप्रकरणे अग्रेश्च डूः (२,६८) इत्यनेन चकारात् √गम् इत्यतः अपि डूः प्र. इष्यते। 'अग्रे गच्छति' इति कृत्वा सेवकपरं व्याख्यानं चास्याभियुक्ता वदन्ति। तद् एवमुभयथा दीर्घान्तं प्राति. भवतीत्यविशेषः। । अत्र विमर्शविशेषापेक्षेव भवति। सहोदाहृताद् भ्रू-शब्दादस्य विषयविवेकात्। तथाहि भ्रू-शब्दो नेत्रयोरुपरि विराजमानायां बालरेखायां चरितार्थो भवति नित्यस्त्रीलिङ्गश्च। अग्रे-गू- शब्दस्तु यावदुपलभ्यं स्त्रियां सन्नपि विशेषणतया प्रयुक्तो भवति पदार्थविशेषवाचकश्च न भवति। तत् स्त्रीत्वमप्यस्य विशेष्यभूताऽब्-अधीनं न तु प्रातिस्विकमिति तद्विषयोऽपि भूयान् विशेषो भवति। एवंभूते यद्यपि नाद्य यावल्लिङ्गान्तरीया एतद्विशेष्यभूताः शब्दा उपलब्धास्तथापि तथाविधाः शब्दा वैदिके प्रयोगे भवेयुरित्यत्रैतच्छब्दस्वारूप्यं न कथमपि विघातकतामुपेयात्। एवं च संभाव्यमाने तादृशि प्रयोगे मूलतः अग्रे-गु- इति √गम् इत्यतो वा √गा इत्यतो वा डु-प्रत्ययान्तं (तु. पाउ १,३३) निष्पन्नं प्राति. अभूत् तस्य च स्त्रियां पा ४,१, ६६ इति प्रकरणे ऊङ् प्र. उसं. (तु. गु- इत्यन्ताः अध्रि-गु- वनर्-गु- प्रभृ.)। अध्रि-गु- [विप. इन्द्र-] इति (तु. ऋ १, ६१,१; ६,४५,२०;८,९०,१)। एवं तु. ऋ ८,९३,११ यत्र जन- इत्यनेन समानाधिकरणः श्रूयते। एवं वनर्-गु- इति बाह्वृचे मृग- इत्यस्य सामानाधिकरण्यं भजते (तु. ऋ १,१४५,५)। अनेनापि ह्रस्वान्तं गु- इत्यन्तं प्राति. अभ्युपेयतामेवोपेयात्। एवं स्थिते संप्रदायस्यैतद्विषयकं प्रामाण्यं चिन्त्यम्। पाणिनीयां प्रक्रियामनुसृत्य क्विपि अनुनासिकलोपे, ऊङ्-आदेशं वदन् म., औणादिकीं प्रक्रियां चानुसृत्य डूः प्र. इति उ. च नितरामप्रमाणं स्याताम्।

k) सपा. अग्रेगुवः<>अग्रेग्वः इति पाभे.।

अग्रे-णी[a]- -णीः मा ६,२; का ६, १, २ ; पै १९, ३४, २ ; -०णीयः[b] मै १,१,४°.

अग्रे(प्र-इत्वन् >)त्वरी[d]- -री शौ १२, १, ५७; पै १७, ६,६; -र्याः मै ४,२,१०¶.

¶अग्रे-दधुस्[e]- -धुः[f],-धुषि[g] मै ४,१,९.

¶अग्रे-दिधिषु[h]- -षुः[f],-षौ[g] काठ ३१, ७; क ४७,७.

अग्रे-पा[i]- -पाः ऋ ४,३४,१०; -पाभिः ऋ ४,३४,७.

अग्रे-पू[j]- -०पुवः[c] मा १, १२; का १, ४,२; तै १,१,५,१.

अग्रे-यावन्[k]- -वा मै ४,१४,९; -वानम् खि ५,७,४,५.

अग्रे-वधु[l]- -धाय मा १६,४०; का १७, ६,४; तै ४, ५,८, १; मै २,९,७; काठ १७, १५; क २७,५.

अग्रे-ष्ठा[m]- -ष्ठाः पै २०, ४३, ४.

अग्र्य[n]- -ग्र्यः पै ६, १, ८‡[o]; -ग्र्यम् खि १,३,७; पै १८,६, ९; -ग्र्याय[p] मा १६,३०; का १७,४, ४; काठ १७, १४; क २७,४.

अ-ग्रभण- -णे ऋ १,११६,५.

अग्रैंयण-, अग्रांयण- अग्र- द्र.

¶?अ-ग्रह्[q]- -ह्ः काठ ३०, ७.

¶अ-ग्रहण[r]- -णौ मै १,४,७;५,१४, ८,४.

?अग्राग्नि-, अग्राद्वन्- अग्र- द्र.

¶अ-ग्राहयित्वा[r] मै ४ १,९.

अग्रिमा-, १अग्रिय-, २अग्रिय-, अग्रीय- अग्र- द्र.

[a]) विप.(२अप्-, यूपशकल-)। उस. उप. √नी+ क्विप् णत्वं कृत्-स्वरश्च प्रकृत्या ( पा ३,२,६१; ६,१, १६२; २,१३९; ८,४,३)।

[b]) ॰णीयः इत्यत्र छान्दसः ईयङ्-आदेशः द्र. ( तु. पपा. सर्वे मूको. च)।

[c]) सपा. अग्रेणीयः<>अग्रेपुवः (माश १,१,३,७ काश २,१,३,५ तैब्रा ३,२,५,३,३,६,१ च) इति पाभे.।

[d]) विप. (गो-, भूमि-)। उस. उप. √इ + क्वनिप् प्र. कृद्-उत्तरपदप्रकृतिस्वरः स्त्रियां ङीपि रेफान्तादेशश्च (पा ३,२,७५;६,१,१६२; २,१३९; ४,१,७)।

[e]) नाप. ( द्विरूढभार्या-पति-)। तस. [पा २,१,७२ (तु. अग्र-दिधिषु- [वैप२], अग्रे-दिधिषु- [ नाउ. ] च )] कृद्-उत्तरपदप्रकृतिस्वरः ( पा ६, २, १३९ )। उप. √धा + उसिः प्र. (पाउ १,११५)कित्वं लिङ्गवचनव्यत्ययश्च उसं. ( पा ३,२,१७१ )। तेनाऽऽतोलोपो द्वित्वं च द्र. (पा ६, १, ८; ४, ६४)।

[f]) सपा. °दधुः <>°दिधिषुः<>तैब्रा ३,२,८, १२ अग्रदिधिषुः इति पाभे.।

[g]) सपा. अग्रेदधुषि<>अग्रेदिधिषौ<>तैब्रा ३, २,८, १२ अग्रदिधिषौ इति पाभे.।

[h]) विशिष्टादपि सन्नन्ताद् उः प्र. (पा ३,२,१६८)।

[i]) सोपपदात् √पा (पाने) + विच् प्र. कृद्-उत्तरपद-प्रकृतिस्वरश्च (पा ३,२,७४;६,१,१६२;२,१३९)।

[j]) विप. (२अप्-)। √पा(पाने) + डुः प्र. इति उ.। म. च √पा (पाने)+क्विप् प्र. ऊङ्-आदेशश्च √पू + क्विब् वेति। पूर्वपक्षपातिन इवार्वाञ्चो भवन्ति (तु. PW. MW. प्रमृ.) न त्विह √पा (पाने) इत्यस्य कोप्यत्रकाशः संभावनायोपलभ्यते। तथाहि अपां ह्येतद् विशेषणं भवति 'अग्रे प्रामुख्येण पुनन्ति' इति सुवचं च तद्व्याख्यानं भवति। अप्-कर्तृकस्य पानस्याप्रसिद्धेस्तत्कर्मके च पाने तत्प्राधान्यविघातात् तत्-कर्तृकयज्ञाग्रनयनाशंसनस्य सुतरामपार्थत्वात् प्रकरणासंगति-प्रसङ्गात् सुत्यज इव √पा (पाने) इत्यस्य विकल्पो भवति। अन्यच्च ऋ १०,१७,१० इत्यत्राप्यपामेव विशेषणं श्रूयते घृतप्वः इति। पुनन्तु इत्याशंसनमप्यनुपदमेव तत्र श्रूयते। यथा तत्र 'घृतेन पावयित्व्य आपः' इत्येव प्राकरणिकं व्याख्यानं न; तु घृतं पिबन्ति इति वा घृतं पाययन्ति इति वा। एवमिहापि √पू इत्येत्र लब्धावकाशः स्यान्नेव धात्वन्तरं किंचित्। अथापि केत-पू- इति प्राति. अन्न-पू- इति प्राति. चेममेवाभिसन्धिं द्रढयितुं प्रभवतः स्वरस्तु नापू. द्र.।

[k]) विप. (त्वष्टृ, वायु-)। उस. उप.√या + वनिप् प्र. तस्य पित्वात् निघाते कृद्-उत्तरपदधातुस्वरश्च प्रकृत्या (पा ३,२,७४; ६,१,१६२;२,१३९)।

[l]) नाप. (रुद्र-)। उस. उप. √वध् + अच् प्र. थाथादि-स्वरश्च (पा ३, १,१३४; ६,२,१४४)।

[m]) विप.। उस. उप. <√स्था + विच् प्र.।

[n]) तात्रभविकः यत् प्र. आद्युदात्तत्वञ्च (पा ४, ४, ११६;६,१,२१३)।

[o]) पाभे. १अग्रियः ऋ १०,१२०,८ द्र.।

[p]) पाभे. अग्रियाय तै ४ ५,२,२ द्र.।

[q]) पाठः ? ग्रहः इति शोधः।

[r]) तस. नञ्-स्वरः।

अग्रु[a]- -ग्रवः ऋ ७, ९६, ४; कौ २,८१०†; शौ १४, २, ७२†; १८, २,४७; पै १८, १४, २†; -ग्रुः ऋ ५,४४,७.

अग्रू[b]- -†ग्रुवः ऋ १, १४०, ८; १९१, १४; ३, २९, १३; ४, १९,७;९; ३०,१६; ७, २, ५; ९, १, ८; ६६, ९; काठ ३८,१३; जै ४,४,८; पै १,५९, ५[2]$; ४,१७, ६; पै १९, ३४, ८; -ग्रुवै शौ ६, ६०,१; ३; पै १९,१४,४;६.

अग्रे प्रभृ., अग्रय- अग्र- द्र.

✓अघ्[c] >अघ, घा[d]- -घः ऋ १, ४२,२; -घम् ऋ १,९७,[१[2]; २-८]; २, ४१, ११; ५, ३, ७; ६,६२,८; ७,१०४, २; ८, १८, १४; ४७, १; १०, ३५, ३; खि २, ११, १[e]; ४; मा ३५, ६†; ११; २१†; का ३५, ४, १०; २०†; २१†; मै १, ५, १२ ¶; काठ २३, ११ †; शौ १, २८, ३; ४, १७, ३; †३३, १[2]; २-८; ८, ४, २†; ६,२६; १०,१,५; १२,३, १४; ८,५; १४,२, ५९-६२; †२०, २०, ६; ५७, ९; पै ४, ८, १-१३; †२९, १[2]; २-८; ५, २३,३;७,१,५; १४,३,६; १६, ९, २†; ८१, ७; १४४, ७; १७, ३७,४; १८, १२, ७-९; १०[2]; १३,१; १८, २?; १९, २, १०;१४;१६, ७; २०, ५५, ४-७; -घस्य ऋ १, १२३, ५;८,७९,४; ८३, ५;१०, ८९, १४; पै १५, १६, ४-९; १७, १-३; -घा ऋ ८,४७,५;१०, १०२, १०; खि ५, ७, ३, ४; मा २८, १५; का ३०, २, ४; मै ४,१३,८; काठ १९,१३; -घाः ऋ ६, ४८, [१६; ५९, ८][f]; -घात् ऋ १, १२८, ५; १६६, ८; शौ १२, १०, १३; पै १६,१४६,८; -घानाम् ऋ ८,४७,२; -†घानि ऋ २,२९, ५;७, ८३, ५; मै ४, १२, ६; -घाभ्यः पै १९, ३,८[f]; -घाम् पै १, ८६, ६; -†घाय ऋ १, १८९, ५;७,१९, ७; तै १, ६, १२,६; मै ४,१२, ३; शौ २०, ३७,७. [°घ- १आर>आरे°, केवल°,तार्ष्ट°,पुलु°].

अघ-कृत्[g]- -कृतम् पै १९,२, १०; -कृते शौ १०, १, ५; पै ७,१,५; -कृद्भिः शौ १४, २, ६२; पै १८,१३,१.

?अघ-घातिव(न्>)नी- -नी पै १७,१५,२[h].

अघ-द्वि(ष्>)ष्टा[i]- -ष्टा शौ २,७,१; पै १९, १५,११.

अघ-मार[j]- -रः शौ ६, ९३, १; पै ३,१०,२; १९,१४, १३; -रम् पै २०,३८,९.

अघ-मेनि[k]- -निः पै १०, १२,८.

अघ-रुद्[g,l]- -रुदः शौ ८,१,

[a]) नाप. पुं. [अविवाहित- (तु. सा. [शौ ६,६०,१] अर्वाञ्चश्च ; वैतु. वें.सा.[ऋ] अन्यथावादिनौ)] । व्यु.? <✓अज् (क्षेपणे) वा ✓अग् (गतौ) वेति सा. [ऋ ९,६६,९], अग्र-+✓गम् इति पक्षे दे. [२,५], नञ् +✓गृ [शब्दे] इति GW. प्रभृ.; अ-ग्रु(<गुरु-) इति WAG. [१,२१b] ।

[b]) नाप. [कुमारी-, [उपचारात्] अङ्गुलि- (ऋ १, १४०, ८ प्रभृ. [तु. निघ २, ५]), नदी- (ऋ १, १९१,१४;४,१९,७ [तु. निघ १,१३])] । स्त्रियामू ऊङ् प्र. (पा ४,१,६६) तत्स्वरश्च ।

[c]) ✓अंह् (संपीडन-संहननयोः) ✓अह् इत्येताभ्यां समूल इत्यर्वाचीनोऽभिसन्धिः ( तु. GW. अघ- इति )।

[d]) विप. (हिंसक-, वृक- प्रभृ.), भाप. =अंहस्- । पचादित्वाद् अच् प्र. चित्स्वरश्च (पा ३,१,१३४;६,१, १६३ ) । <आ✓हन् इति या [६, ११] प्रभृ. ।

[e]) =सपा. मंब्रा १,१, १० आपमं १,४,७ आगृ १, १३,६ पागृ १, ५, ११ आग्निगृ १, ५, २ : ५१ हिगृ १, १९, ७ । अघं न>मागृ १, १०, १० अगन्म इति पाभे. ।

[f]) सपा. शौ १,२६.४ तनूभ्यः इति पाभे. ।

[g]) उस. उप. क्विबन्त-कृत्स्वरः प्रकृत्या (पा ६, १, १६२;२,१३९) ।

[h]) °घातिनी इति BKA. शोधः ।

[i]) तृस. पूप. प्रकृतिस्वरः (पा ६,२,४८) ।

[j]) कर्मण्युपपदे ✓मृ> मारि + अण् प्र. तत्स्वरश्च प्रकृत्या (पा ३,२,१;१,३;६,२,१३९) ।

[k]) कस. । उप. यद्र. ।

[l]) विप. >नाप. ([अभद्ररोदनशीला-] राक्षसी-) ।

१९;११,२,११; पै १६, २, ८; १०५,१.

अघ-ल[a]- -लाः शौ ८,८, १०; पै १६,२९,१०.

अघ-वि(द्ध>)द्धा- -द्धाम् पै १७,२२,१२.

अघ-वि(ष>)षा[b]- -षा शौ ५,१८,३; १२, ७,१; १५; १०, १३; पै ५, २२, १-९; ९, १७,१०; १५, १६, ४-९; १७,१-३; १६,१४२,१; १४३, ६; १४६, ८; -षाः शौ ६, ९३, २; पै १९, १४, १४; -षाभ्यः शौ ६,९३,३; पै १९, १४,१५.

अघ-शंस[c]- -सः ऋ १, १२९, ६; २,४२,[३; ६, २८, ७]; ४,४, ३; ६,७१,[३; ७५, १०]; १०, १८५, २; †मा १, १$; ३, ३२; १३, ११; २९, ४७;३३, ६९; ८४; †का १,१, २$; ३, ३, २४; १४,१, ११; ३२, ५,१५;६, १५; †तै १,१, १, १$; २,१४,१;४, २४, १; ४, ६,६,४; †मै १,१, १$; ३, २७;५,४;२,७,१५; ३,१६, ३; ४, १,१$; काठ १, १; ५; ४, १०†;७,२†;१६,१५;३०,१०; ३१, ४[२];३५, ५‡[d]; ४६, १†; क १, १; ५; ३, ८†; ५, २†; २५, ६†; ४६, ८; ४७, ४[२];¶; ४८ ६; शौ ४, २१,७; ७,७९, १; १९,४७, ६; पै ३,१०, २; ६, २०, ६ ; १५, १०, १०†; १९, ३९, ४; -सम् ऋ ६, ८, ५; ७,१०४,२;१०, ८७, २०; खि ५, ५, ४; ७, ४, १४; मै १,५,१; काठ २३, ११†; शौ ८, ३, १९† ; ४, २; पै ४, ८, १-१३; †१६,७,९;९,२; १९, २९,१; २०,३८,९; -सस्य ऋ १, ४२, ४; -सात् तै १, ६, ३, १; -†साय ऋ ७, १०४, ४; ८,६०, ८; १०, १८२, १; शौ ८, ४, ४ ; पै १६ ९, ५; -से ऋ ५,३,७. [°स- हत°].

अघशंस-दुःशंस[e]- -साभ्याम् शौ १२,२,२; पै१७, ३०,२.

†अघशंस-हन्[f]- -हा ऋ ९,२४,[७; २८,६; ६१, १९]; कौ १, ४७०; २, १६५; ३१७; ६४१; जै १,४९,४;३, १६,१; २६,३;५१,६.

अघ-हार[g]- -रः कौ २,१२१४; शौ ६, ६६, १ ; पै १९, ११, १०.

√अघाय[h], अघायति ऋ १, १३१,७. [°य अभि°].

अघायत्[i]- -†यतः[j] ऋ १, ९१, ८; ४,२, ६[k]; ५, २४, ३। ६, १६, [३०; ७, १५, १५]; १०, ६३, १२ ; मा ३, २६; का ३, ३, १८; तै २,३, १४, १; मै १, ५, ३; ४, १०, १; काठ २, १४; ७, १; क ५, १; जै ४,६,१०; -यताम्[j] शौ १०, ९, १; पै १६, १३६, १; -यते[j] ऋ ६, ५१,६; ८, ७१, ७; पै ४,८, १-१३; -यन्तम् शौ १०, ४, १०; पै १६, १५, १०.

---

[a]) कर्मण्युपपदे √ला + कः प्र. (पा ३,२,३)। अथवा सिध्मादिभ्यश्च( पा ५, २, ९७ ) इत्यत्र अघ- इत्यस्योपसंख्याने परविषयत्वेन मत्वर्थीयो लच् प्र. स्यात्। प्रथमे कल्पे थाथ- (पा ६, २, १४४) इत्यनेन द्वितीये च चितस्वरेणान्तोदात्तः द्र. (पा ६ १, १६३)।

[b]) विप. (ब्रह्मगवी-)। बस. पूप. प्रकृतिस्वरः (पा ६, २, १)।

[c]) विप. >नाप. ( तस्कर- प्रभृ. [तु. निघ ३, २४; वैतु. PW. GW. प्रभृ. विप. एवेति]) । बस. उप. भाप. । नापू. टि. दिशा समासस्वरौ द्र.। यद्वा कर्मण्युपपदे √शंस + णः प्र. उसं. पूप. प्रकृतिस्वरः च (पावा ३,२,१) ।

[d]) सपा. ऋ २,२३,१० अभिदिप्सुः इति पाभे. ।

[e]) द्वस. सामान्यः सामासिकः स्वरः (पा ६, १, २२३)।

[f]) उस. । क्विबन्त-कृत्स्वरः प्रकृत्या (पा ६,१, १६२; २,१३९)।

[g]) नाप. ( [अत्याचारिन्-] शत्रु- )। उस. उपं. √हृ + अण् प्र. कृत्स्वरश्च प्रकृत्या (पा ३, २, १; १,३;६,२,१३९)।

[h]) अघ-यु° इति पपा. । परेच्छायां क्यचि पूप. आकारान्तादेशः ( पावा ३, १, ८ पा ७, ४, ३७ ) । धा. स्वरेणान्तोदात्तः (पा ६,१,१६२)।

[i]) शतुः अदुपदेशान्निघाते शपः पित्त्वान्निघाते च शिष्टः धा. स्वरः ।

[j]) शतुरनुमः (पा ६,१,१७३) इति विभक्तेरुदात्तत्वम्।

[k]) ORN. छन्दस्तः अघ° इति ?

अघायु[a]- -यवः मा ४,३४; ११, ७९; का ४, १०, ५; १२, ७,१४; तै १, २, ९, १; ४,१,१०,३; मै १, २, ६; २, ७,७;३,७,८; काठ २, ७; १६, ७; क २, १; शौ १, २७, २; ३;१९,१८,१-१०; पै १, ४२, ३; २,३१,२; ५; ७,३, २?[b]; ५;१७, १-१०; १९, ३१, ५; -युः ऋ १, १४७, ४; खि ४. ५,१८; तै ५,७,३, १; शौ ४, ३, २; ५, ६, १०; १०, १-७, १९,४७,७; ४९,९; पै ६, ११, १२; १२, ९-११; १३, १-३; २०, ७; ८,६,९; १४, ४, ९; १९, ३१, ६; २०, १७, ५; -युना पै ७,८,७; -यून् पै १९, ३१, २[c]; -यूनाम् शौ १, २०, २[d]; -यूनि खि ४, ५, ३[e]; -योः ऋ १,२७,३;१२०; ७;४, २, ९; ⌊(१, ३६, १५), ७, १, १३⌋; १०, ४२, ⌊११; ४३, ११; ४४, ११⌋; मा १६, ५०‡[f]; तै ३, ३, ११, १; ४, ५, १०, ४‡[f]; मै २, ९, ९[f]‡; काठ १०, १३†; १७, १६‡[f]; क २७, ६‡[f]; कौ २, ९८६†; जै ४, २४, ७†; शौ १, २७, १;७,५३,१†; †२०,१७, ११; ८९, ११; ९४, ११; †पै १५, ११,१;१६,८,११;१९,३१,४.

अघा(घ-आयिन्>)यिनी[g]- -०नि खिसा २९,३[e].

अघा(र>)रा[h]- -रा पै १, ८६,६.

अघा(घ-आरिन्>)रिणी[i]- -णीः शौ ११,११,१४; -णीम् पै १७,२२,१२.

१अघा(घ-अ)श्व[j]- -श्वाय ऋ १,११६,६.

२अघा(घ-अ)श्व[k]- -श्वस्य शौ १०,४, १०; पै १६, १५, १०;

?अघासार- -रम् पै १,५८,२.

?अघभवत् पै १६,१०३,१[l].

अघा[m]- -घासु[n] ऋ १०,८५,१३.

?अघां पै १,३६,४.

¶अ-घात- -ताय काठ २९, १; क ४५,२.

¶अ-घातक[o]- -कः[p] काठ ८,६.

¶अ-घातुक[q]- -कः मै १, ४, ७[२]; ६, ४;८, ५[२]; ३, १, ३; काठ २७,६[२]; ३०, १०; ३२,५; क ७,२[p]; ४२,६[१]; ४६,८.

¶अ-घात्य- -त्येन काठ २६, १०; क ४१,८.

✓अघाय, अघारा-, अघारिणी-, १अघाश्व-, २अघाश्व-?अघासार- ✓अघ् द्र.

अ-घोर,रा[r]- -०र मै २, ९, १०[s]; -रा मा १६,२; का १७, १,२; तै ४,४,१२,५;५,१,१; मै२,९, २;३,१६,४; काठ१७,११;२२,

---

a) विप. (मर्त्य-, वृक- प्रभृ.) उः प्र. (पा ३,२, १७०) तत्-स्वरश्च ।

b) अघायव- (नाप. ⌊अघायु-⌋)> -वान् ⌊द्वि३⌋ इति शोध इति मतम् ।

c) सपा. शौ ४,२०,६ पिशाचान् इति पाभे. ।

d) सपा. शौ ६,९९,२ जिघांसन्तः इति पाभे. ।

e) सपा. खिसा २९,३ अघायिनि इति, शौ १०, १,७ पै १६,३५,७ उदार्य्यम् इति, RW. प्रभृ. ⌊शौ.⌋ उदार्यम् इति च पाभे. ।

f) सपा. ऋ २, ३३, १४ विशिष्टः पाभे. ।

g) विप. (कृत्या-) । उस. ।

h) उस. उप. ✓ऋ + अच् प्र. (तु. पा३,१,१३४)।

i) पपा. अनवगृहीतः । उस. उप. आ✓ऋ इत्यतो वा अनुपसृष्टाद् ✓ऋ इत्यतो वा ताच्छीलिकः णिनिः प्र. (तु. सा. आर्ता- इत्येवं व्याचक्षाणः) कृत्-स्वरश्च प्रकृत्या (पा ३, २, ७८; १, ३; ६, २, १३९ ⌊वैतु. PW. प्रभृ. ✓घृ>घारिन्- इति मन्वानाः स्वरतश्चिन्त्याः⌋) ।

j) विप. [दुष्टाऽश्व- (पेदु- ⌊तु. सा. PW. GW, GRV. प्रभृ.; वैतु. वें. स्क. व्यप. इति⌋)] । बस. पूप. प्रकृतिस्वरः (पा ६,२,१ ; वैतु. सा. पूप. =अहन्तव्य- इति )।

k) = सर्पजाति-विशेष- । व्यु.? BW. अघ- + ✓श्वस् इति।

l) सपा. शौ १०,८,२४ एष एतत् इति पाभे. ।

m) =मघा-नक्षत्र- । व्यु. ?

n) सपा. शौ १४,१, १३ पै १८, २, २ कौसू ७५, ५ मघासु इति, आपगृ १,३,१ मघाभिः इति पाभे. ।

o) तस. । उप. <✓हन् ।

p) सपा. अघातकः<>अघातुकः इति पाभे. ।

q) तु. टि. अ-क्षोधुक- ।

r) तस. नञ्स्वरः (पा ६,२,२ ) । उप. <✓घुर् ।

s) अघोरघो° इति पाठः (तु. सपा. मना २, ११ व ४६२ : २२ ⌊वैप ३, ११० द्र.⌋ घोरघो° इति तैआ १०, ४५,१ च)? अनुषङ्गात् छन्दस्तः सर्वस्य मन्त्रस्यैव

अज्युसे ऋ ६, २, ८. [अनु°, अप°, अभि°, अभ्या°, अव°, आ°, उद्°, उप°, उपा°, निर्°, प्र°, वि°, सम्°].

अज्- पृतना°, १अज- निर्°.

अजत्- अप°

अजन- गो°.

अजनी- अश्व°, आ°, मन्द्र°.

अजिर्,रा[a]- -रः ऋ ६,६४,३; ८, १०१,३; १०, ९८, २; शौ ३, ४,३[b]; -रम् ऋ १,१३८,२;३, ९,८; ४,४३, ६; ७, ११, [२; (१०,७०, ३)]; १०, १०२,४; खि ४, ११, ६[c]; मा ३४, ६[c]; ¶काठ ९,१;१३,१२; २१,८[d]; ¶क ८,४; शौ ८,८,३; पै १६, २९, ४[e]; -रा ऋ १, १३४,[३; ५,५६,६]; ३,३५,२; काठ ३१, १४; -०राः[f] ते २, ४,७,२; काठ ११; ९; -राय मा १६, ३१; का १७, ४, ५; तै ४, ५, ५, २; मै २, ९, ५; काठ १७, १४; क २७, ४; -रासः ऋ १, १४०,४;५,४७, २; ८, ४९, ८; खि ३,१,८. [°र- खदिर°].

†अजिर्-शोचिस्[g]- -चिषः ऋ ९, ६६, २५; कौ २, ६६०; जै ३, ५५, १; -चिषम् ऋ ८, १९,१३.

?अजि़रा(र-आ)चरिष्णु[h]- -ष्णुः खि ४,८,६.

अजिरा(र-अ)धिराज्[i]- -जौ शौ ७,७३,३.

√अजिराय[j], †अजिरायते ऋ ८,१४, १०; शौ २०, २८, ४; ३९,५,

अजे निर्°.

अज्म[k]- -ज्मम् ऋ १, १६३, १०; ३,२, १२[l]; मा २९, २१; का ३१, ३, १०; तै ४, ६, ७, ४; काठ ४६, ३; -ज्मस्य ऋ ४, ५३,४; -ज्मेषु ऋ १, ३७, ८; १०[m];८७,३; ५,८७,७; ८,४३, २०; तै ४, ३, १३, ७; मै ४, ११,२.

अज्मन्[n]- -†ज्म ऋ १, १५८, ३; ६, ४, ४; ८, ४६, २८; १०, १०३,६; मा १७,३८; का १८, ४,६; तै १, ३, १४, ७; ४,६, ४,२; मै २, १०, ४; क २८,५; कौ २, १२०४; शौ ६, ९७,३; १९,१३,६; पै ७, ४, ६; १९, १२, ९†; -ज्मन् ऋ १, ६५, ३; ११२, १७; १६६, ५; ६, ३१, २; ८, २०, ५; -ज्मना, -ज्मनि शौ ११, १२, २२; -ज्मभिः ऋ ८,४६,१८;-ज्मा काठ १८,५.

१अज्युमान[o]- -नः ऋ ५,३०,१४.

अज्र[p]- -ज्राः ऋ ६, २४, ८;

---

a) विं. (मनस्-, रुद्र- प्रमृ.)। किरच् प्र. (तु. पाउ १,५७; भोउ २, ३, ४७)। यश्च काउ १, २४ इत्यत्र निरनुबन्धः प्र. शिष्टो भवति स स्वरानुरोधरहितलोकमात्रगोचरः द्र.। वेदे त्वन्तस्वरतश् चिदनुबन्धः सुवच एवेति किमु वक्तव्यं भवति। चित्स्वरः (पा ६,१,१६३)।

b) सपा. पै ३, १,३ जरसे इति पाभे.।

c) सपा. काशि १३४ः १२ अजरम् (तु. उ. म.[मा.]) इति पाभे.।

d) चिर- इति शब्दसाहचर्यात् अचिरम् इति शोधः।

e) अचिरम् इति मूको.।

f) सपा. मै २,४,७ अज्राः इति पाभे.।

g) विप. (अग्नि-,चन्द्र- [=सोम-रश्मि-])। बस. पूप. प्रकृतिस्वरम् (पा ६,२,१)।

h) स्वरः? प्राति. चेत् साधु स्यात्तर्हि तस. तत्स्वरश्चान्त्य एव द्र.। मूको. तु भूयस्त्वेन जरिष्णु- इत्येव उप. समर्थयन्ति (तु. MW.)। अजिराजरिष्णुः, अजराजरिष्णुः, अजराजरिष्णु, इत्येतेषां मध्यमो वोत्तमो वा पाठः स्याद् आदिस्वरश्चेति विमृशन्तु विमृशः।

i) द्वस. सामान्यः समासस्वरः (पा ६,१,२२३)।

j) नाधा. आचारार्थे क्यङ् प्र. दीर्घश्च (पा३,१,११)।

k) भाप., नाप. [मार्ग-,चर्या-,आजि-(तु. या [४,१३] प्रमृ., WW. [१,३५] SEY [३९] )]। मन् प्र. (तु. पाउ १,१४०) नित्स्वरश्च।

l) सपा. तैआ ३,१०,४ आपश्रौ १४, ११, १ अँज्मा इति, तां १,७,६ ?अयमन् इति च पाभे.।

m) सपा. कौ १,२२१ जै१,२३,८ यज्ञेषु इति पाभे.।

n) मनिन् प्र. (तु. पाउ ४,१४५)। शेषं *k* टि. द्र.।

o) शानचो निघाते यक्-स्वरः (पा ६,१,१८६)।

p) नाप.(सम-भूभाग-)। औणादिकः रन् प्र. उसं. नित्स्वरश्च (पाउ२,२८; पा६,१,१९७)। एतच्च एपू. इति च प्रत्ययमात्रभिन्ने सती अप्यर्थतः समाने भवत इत्येतदर्थं तु. अजिर्- इति पाभे. तै२,४,७,२ काठ ११,९। यत्तु सा.(ऋ ४,१, १७) <अ-जर- (<√जॄ) इत्येवं व्युत्पत्तिं व्यकल्पयत् तद् निर्दिष्टशाखान्तरीयव्यवहारविरोधाद् अप्रामाणिकम्। यदसौ तत्रैव गमनशीलतया व्याचक्षाणः √अज् इत्यस्माद् व्युदपादयत् तद् साधु।

-०ञ्राः[a] मै २,४,७; -†ञ्रान् ऋ ४,१, १७; १९, ७; ५,५४, ४;६,६२, २; ८, १५, २; १०, ४४,८; ५९, ३; शौ २०, ६१, ५;६२, ९; ९४,८; -ञ्रे ऋ ८, २७,१८. [°ञ्र- ? उदृ°, घासे°].

अञ्र्य[b]- -ञ्र्या ऋ १०,६९,६.

आज- उद्°, निर्°.

आजि[c]- -†जयः ऋ १,८१,३; ७, ३२, १७; कौ १, ४१४ ; २, ३५४; जै १, ४०, ६; ३, २९, ११; शौ २०,५६,३; -जा ऋ १, ६३, ६ ; १०२ , ३ ; १०; ११६,२; १५; ७, ८३, २; ९, ६६,८; पै ३, ३६,२†; -जिम् ऋ १, १७९, ३; ४, २०, ३; २४, ८[d]; ४१, ८; ४२,५;[५८, १० (९, ६२,३)]; ५, ४१, ४; ६, २४, ६; ७५, २; ७, ९८, ४; ८,४५, ७; ५३, ८; ९,३२, ५; १०, १०२, १२ ; खि ३, ५ , ८ ; †मा १७, ९८ ; २९, ३९; †का १९,१, ११; ३१,२, ३; तै ४, ६, ६, १†; ५, ३,२, ३¶; ७, ५, ९, २¶; ¶मै १, ११,५; ७[३]; ३,१६, ३†; ४,३, २; ¶काठ १०, ५; १२,७;१४, ५; ७; ८; २१, १२; २३, ३; ४०,७†; ४६,१†; कौ १,६८†; जै १, ७, ६†; शौ ६, ९२, २[e]; ७, ८७,१†; १३, २, ४[d]; ५; २०, ८७,४†; †पै ८, १३, १०; १५, १०, २; १८,२०,८; ९; १९,३४,११; १२; -†जिषु ऋ १, ८१, १; १३०, ८[f]; २, ३४, ३; ४, १७, ९ ; ५, ३५, [७; ८, ८४, ८]; ७, ८३, ६; १०, १५६, १; तै ३,५,११,५; मै ४, १०, ३; १२, ४; काठ १५, १२; कौ १, ४११; २, ३५२ ; ८७७ ; जै १, ४०, ३; ३, २९,९; ४, ११,२; शौ २०, ५६,१; -जीन् ऋ ६, ३५, २; शौ २, १४, ६; पै २, ४, ३; १०, १, ६ ; -(जि>)जीम् ¶मै २, १, ११; ३,४,३;-जेः ऋ ४, ४१, ११; १०, १०२, ५; -जौ ऋ १, ५१, ३; ५२, १५; ११२, १०; १७६,५; ३, ३२,६;५३, २४; ४, १६, १९; ६, १९, ३; २०, १३; ८,९६, १४; ९, ९१, १ ; ९७ , १३; २०; १०, ६१, १; ८; ६८,२; ७५,९;१०२, १; काठ ७, १२[f]; ३८, १२[f]; †कौ १, ५४३; २, १५६; †जै १,५५,१२; ३,१५, ४; शौ २०,१६,२†;१३७,८.

आजि-कृत्[g]- -कृत् ऋ ८, ४५, ७.

आजि-तुर्[h]- -तुरम् ऋ ८,५३, ६; खि ३,५,६.

आजि॒-पति[i]- -०ते ऋ ८,५४, ६; खि ३,६,६.

अज्-, १अज- √अज् द्र.

२अज॒,जा[j]- -०ज शौ ९,५, ९; १६; -०ज काठ ७, १३; शौ ९, ५,

---

[a]) विप. (२अप्-) ।

[b]) यदत्र यतोऽनावीयः स्वरो न भवति भवति च तित्-प्रयोजितः स्वरितः (पा ६,१,१८५) । तदेतद् अञ्र- अजिर्- इत्यत्रैव भूयो ज्ञापकं स्यात् । कथमित्युच्यते । मूलतस् त्र्यच्केऽस्मिन् शब्देऽभ्युपेयमाने ( अजिर्-> अञ्र- ) ततश्चाऽद्यच्कात् सतः प्रत्ययोत्पत्तौ सत्याम् (अजिर्य->अञ्र्य-) यतोऽनावीयस्वरनिमित्ताभावात् (पा ६,१,२०५) नैमित्तिकाऽभाव इत्यर्थात् । यद्वा अनावः (पा ६,१,२१३) इति यदुक्तं तदलमिति द्र. । अन्येषां द्व्यच्कत्वे सत्यप्यनाद्युदात्तानां सतां तत्र उसं. ( तु. ऊधस्य-, कन्या-, धान्य-) ।

[c]) नाप. [धावन-प्रतियोगिता-, युद्ध- (तु. निघ २,१७ या [९,२३] प्रभृ.), पुरस्कार-प्रतियोगिता-] । अधिकरणे इण् प्र. ( पावा ३, ३, १०८ यद्वा पाउ ४, १३१ ) तत्स्वरश्च । या. प्रभृ. <आ√जु वा आ√जि वेति? तु. SEY [२३,७४] ।

[d]) नाप. (संग्राम- इति सा. प्रभृ.; धावनप्रदेशावधि-भूमि-विशेष- इति PW. प्रभृ.) ।

[e]) आजिं जय इत्यस्य स्थाने सपा. मा ९,९ वाजजित् च भव इति, का१०,२,६ वाजजित् च एधि इति पाभे. ।

[f]) =सपा. माश्रौ १,५,२,१७ । त्वाऽऽजौ> आपश्रौ ५, ९, ८ त्वा ये इति पाभे. ।

[g]) विप. (इन्द्र-) । उस. उप. √कृ+क्विप् प्र. । कृद्-उत्तरपदप्रकृतिस्वरम् (पा ६,२,१३९) ।

[h]) उप. <√तुर्<√त्वर् । शेषं नापू. टि. द्र. ।

[i]) नाप. (इन्द्र-) । तस. पूप. प्रकृतिस्वरम् (पा६,२,१८) ।

[j]) नाप. ([*अद्भुतमाय-] विशिष्टदेव-, ब्रह्मन्-, पशु-भेद-) । √अज्+कर्त्तरि अच् प्र. (पा३,१,१३४) चित्स्वरश्च,<अ-ज- इति वा । अपशु-प्रकरणे तत्रतत्र तत्तद्देवतादिविशेषणतया बह्व्यः श्रुतयो भवन्ति । तत्र क्वचित्-क्वचित् अ-ज(<√जन्)- इत्येवमपि भाष्यकारैर्व्याकृतं भवति । तत्र तेषां पारस्परिकस्य भूयसो वैमत्यस्य सद्भावाद् विमर्शविशेषतो भूयिष्ठेषु

१५; पै ३, ३८, ९; १६, ९७, १०; ९८,७; -जः ऋ १, ६७, ३; १६२, २; ४; १६३, १२; २, ३१, ६; ३, ४५,२; ६,५०, १४; ७, ३५, १३; ८, ४१, १०; १०,१६,४; ६४, ४; ६५, १३; ६६, ११; १३४, ६; खि ५,३,५; खिसा २९,८[a]; मा ५, ३३; १३,५१[b]; २१, २९; २४, ३२; २५,२५;२७; २९, २३†; ५९; ३४, ५३†; का ५, ८,३; १४,५,५[b]; २३, ४, १; २६,७, २;२७,१२,२;४; ३१,३,१२†; ७,१; ३३,२,१६†; तै १,३,३, १;¶२,१,१,४;५; ४,४,१०,३; ६,७,५†; ८,१,२;५,५,१,३¶; १२,१;२४,१; ७, १, १, ४¶; मै १,२, १२;६,२†; ४¶;२,५, १¶;७,१७;१३,२०; ३,११,२; १४,१३;१६,१[२]†; ४, ८, ३¶; काठ २,१३; ८, ८; १२[२]; १३, १; १६, १७[b]; २४, ७[२]; ३९, १३; ४६,३;४[२]; ४७, २; ४८, ३; क २, ७; ¶७, २; ७[२]; २५, ८[b]; ३७, ८[२]¶; †कौ २, ४४१; १०६९; †जै ३, ३३, १६; शौ ४, १४, १[b]; ९,५, १; ३; ७[१];

१०; ११;१३[b]; १६; १८; २०; २१; ३१-३६; १०, ७, ३१;८, ४१; १३, १, ६; १८, २, ८†; १९,११,३†; पै ३, ३८, १;९; ८,१९, १-३;८; १३,८,१३†; १६,९७,१; ७-९; ९८,२;३;७; ९९,६;८; १७,१०,२; १८,१५, ६; -¶जम् तै २,१,१,५; मै १, ६,४;२,५,२; ३[२]; ५; ११[५]; ३, १०, २[२]; ४, ८, ३; काठ १२, १२;१३[१]; १३, १; २; ४[२]; ५; १३; १८, १; शौ ४,१४,६[c];९; ९,५,७[२]; ११; १२; २२; २४; २८;३१;३७; १८, २,९; पै ३, ३८,११[२]; ८,१९, ४; ७; १०; ११;९,७,२; १६, ९७, ७[१]; ८; ९८,१;९[२];१००,२;४;१७,१३, ५; -¶जया तै ६,१,६,३;१०, १; मै ३,७, ७; काठ २३, १०; २४, २; ६[१]; क ३७, १;३;७[१]; -†जस्य ऋ १,१६४, ६; १०, ८२,६; मा १७, ३०; का १८, ३,६; तै ४,६,२, ३; मै २,१०, ३; काठ १८,१; क २८,२; शौ $४, ४, ८; १४, ७; ८; ९,५, १९$, १४, ७; पै १६, ६६, ६; $९९,१-२;५; -जा ऋ २,

३९,२; मा १४, १९; २३, ५६; का १५,५,५; २५,१०,४; तै २, २, ४, ५¶; ३, ४, २,२;¶३, २; ६; ४, २, १०,४[b];३,७,१; ¶५, १,६, २; ४, ३, २; ¶६, १, ६, ३; ५, १०, १; मै ¶१, ५, १०; ८, १; २, ६, १३; ८, ३; १३, १४; ३, ७, ७¶; ४, ४, ९¶; काठ ६, २; ७, ७; १३, ११; १२[४]; १७, ३; १९, ५; २३, १०; ३४, ७; ३९, ४; ¶क ४, १; २६, २$; ३०, ३; ३७, १; ७; -जाः ऋ ६,५७, ३; १०, २६, ८; तै ५, ६,१९,१; ७,३,१४,१; मै ४,२, १४; काठ १३,१; २४,६; २८, १०[१]; ३५,१५; ४३,४; ४९,९; क ४५,१[२]¶; पै १,४०,४; -जान् मै २,५,११¶; काठ १३, ३¶; पै १२, ६, १०; -जानाम् ¶तै २,१,१, ५; ५,५, १, ३; पै २, ३७, ४; ६, १५, ८; -जाम् ऋ ८,७०,१५; ¶मै २,५,२[२]; ३, ७, ७; ४, ८, ८[२]; ¶काठ १३, १; २८,५; क ४४,५¶; शौ ६, ७१,१; पै २,२८,२; २०, १४, १; -जाय पै ६,३,११; -¶जायाः

तत्प्रकारकेषु स्थलेषु तथाविधाया व्युत्पत्तेर् अप्राकरणिकत्वा-वभासाच्च । तत्तद्वाच्यविमर्शविस्तरतः करिष्यमाणस्याऽ-स्मदीयस्य विवेचनस्य वैश. एव विशेषेण युक्तावसरत्वाच्चेह व्युत्पत्तिविभागतः शब्दद्वैविध्यनिर्देशो नाकारीति मर्षयन्तु युक्तायुक्तविचारिणः । एस्थि. अपि द्वित्रैरुदाहरणैरेषा मौनमुद्रा किञ्चिदुपपाद्यत इव । तद्यथा । ऋ १०,८२,६ इत्यत्रोपस्थाप्यमाना द्वितीया व्युत्पत्तिः (तु. GG.)। विश्वकर्मणोऽपां गर्भत्वेन श्रूयमाणत्वाद् अजन्मनस्तथा-विधविशेषणस्यानुपपत्तेर् अप्रामाण्यमिवाऽऽपतेत्। एवम् ऋ २,३१,६ प्रमृ. एक-पाद्- इति विशेषणाच्च बुध्न्यत्व-विशिष्टस्याऽहेः साहचर्याच्च तत्र माहाभाग्याद् एकेनैव पादेन सर्वत्र प्राप्तुमलंभूष्णुर् अतश्च चातुष्पाद्यं प्रति नितरां निरपेक्षः कश्चिद् अद्भुतमायोऽजाऽन्तरविशिष्टोऽज एव शिश्रावयिषितः स्याद् इति संभाव्यते (तु. ऋ १०,११७,८ यत्राऽस्मदभिप्रायत एकद्विचतुष्पदां पारस्परिका उत्कर्षापकर्षौ सम्यक् स्पष्टं च श्राव्येते) । यत्तु G. ऋ १०, ९०,३ प्रमृ. स्वपक्षसमर्थनमपश्यत् तदपि व्यर्थमिव भवति । तत्र सर्वत्र पाद-शब्दस्य सामान्येनांशपर्यायत्वदर्शनाद् इति दिक् ।

a) अु° इति मुपा. स्वरः? यनि. शोधः ।

b) सपा. अजः (माश ७,५, २, ३६ वैताश्रौ २९,१ कौसू ६४,२३ च) <> अजा (आपश्रौ १६,२७,१८ च) इति पाभे. । c) पाभे. अग्निम् मा १८, ५१ टि. द्र. ।

तै ६,१, ६, ३; काठ ८,२;२३, १०; क ६,७;३७,१;–¶जायाम् तै ५, ४, ३, ३; मै ३, ३, ४; काठ २१, ६; क ३१, २१; –जायै तै २,१,१,६¶; –जासः ऋ ६, ५५, ६; ७, १८, १९; –जे शौ ५,३१, २; पै ९, ११, ४; –जेन शौ १८, २, २२. [°ज,जा- गो°, चरम°].

¶अ(जा>)ज-क्षीर[a]– -रम् तै ५, १,७,४; मै ३,१,८[२]; –रे तै २, २,४,४; ५; –रेण तै ५, १, ७, ४; ४, ३, २; मै ३,१,८; काठ १९,७; क ३०,५.

अज-गर[b]– -रः खि २, १४, २; ३; मा २४, ३८; का २६, ८, ३; तै ५,५,१४,१; मै ३, १४,१९; काठ ४०, ५; ४७, ४; शौ २०, १२९,१७[c]; पै १,९६, ४; –राः शौ ४,१५, ७; ९; ११,२, २५; पै ५,७, ६; १६,१०६,५; –रेण तै ७,३,१४, १; काठ ३५, १५; ४३,४.

अ(जा>)ज-त्व[d]– -त्वम् तै ६,१, ६,३.

अज-पाल[e]– -लम् मा ३०, ११; का ३४,२,३.

अज-मायु[f]– -युः ऋ ७, १०३, ६; १०.

अज-मीळ्ह[g]–>आजमीळ्ह[h]– -ळ्हासः ऋ ४,४४,६; शौ २०, १४३,६†.

¶अज-लोम[i]– -मैः तै ५, १, ६,२; काठ १९,५; क ३०,३.

अज-लो(मन्>)म्नी[j]– -म्नी मै ४, २,१४.

अज-(शृङ्ग>)शृङ्गी[k]– -ङ्गि शौ ४,३७,२; पै १३,४,२;–ङ्गी शौ ४,३७, ६; पै १३, ४, १०; ११;१५.

अजा-त्व[l]– -त्वम् काठ २३, १०; क ३७,१.

अजा(जा-अ)वि[m]– -वयः ऋ १०, ९०,१०; मा ३, ४३; ३१,८†; का ३,४,६; ३५,१, ८†; तै ६, ५,१०,१¶; काठ २९,९¶; शौ ५,२१,५;७,६२,५; ८, ७, २५; ११, २,९; १९, ६, १२; पै ३, २६, ५; ९, ५, १०†; ७, १; २३, ९; १६, १४, ४; १०४, ९; –विभिः शौ १०, ६, २३; पै १६,४४, ५; –विषु शौ ११, २, २१; १२, २, १५; पै १६, १०६,१; १७,३१,६.

†अजा(ज-अ)श्व[n]– ०श्व ऋ १, १३८,४[४]; ६,५५, ३; –श्वः ऋ ६,५८,२; ९, ६७, १०; मै ४, १४,१६; –श्वम् ऋ ६,५५,४.

?अजक[o]– -कः खि ५,१५,५.

अजकाव[p]– -वम् ऋ ७,५०,१.

---

[a]) षस. सामान्यः समासस्वरः पूप. ह्रस्वश्च (पा ६,१, २२३;३,६३)।

[b]) = सर्प-विशेष- । उस. उप. √गॄ + अच् प्र. थाथादि-स्वरश्च (पा ३,१,१३४; ६,२,१४४)।

[c]) तु. टि. ?अजक- ।

[d]) भावे त्वः प्र. तत्स्वरश्च । पूप. ह्रस्वः (पा ६,३,६४)।

[e]) नाप. । उस. √पा (रक्षणे) >पालि + कर्तरि अण् प्र. उप. प्रकृतिस्वरश्च (पा ३,२,१; ६,२,१३९)।

[f]) विप. (मण्डूक-)। बस. पूप. प्रकृतिस्वरम् (पा ६, २,१)। उप. <√मा (शब्दे)।

[g]) उप. < √मिह् ।

[h]) व्यप. (मन्त्रद्रष्टृ-ऋषि-)। अण् प्र. ताद्धितः (तु. पा ४, १, ११२ यद्वा पा ५,४,३८) तत्स्वरश्च।

[i]) षस. । अत्र उप. मूलतो नकारान्तं सत् समासाऽन्ताऽन्तम् उताहोऽकारान्तमिति विमृश्यम् (तु. वैप२)। यतो मौलस्याऽकारान्तप्रकारकस्य प्राति. अपि सद्भावः प्रत्यक्षमापद्यते । प्रथमे कल्पे समासान्तदेशितः स्वरः (पा ५,४,१०३;६,१,१६३)। उत्तरे च सामान्यः समासस्वरः (पा ६,१,२२३) इति विवेकः ।

[j]) विप. (गो-)। बस. पूप. प्रकृतिस्वरं स्त्रियां ङीप् च (पा ६,२,१, ४,१,२९)।

[k]) = ओषधि-विशेष- । बस. परादिस्वरः (पा ६,२, ११५)। स्त्रियां च ङीषि (पा ४,१,५५) प्र. स्वरः।

[l]) =अज-त्व- । ह्रस्वाभाव इतीह विशेषः ।

[m]) ऋ. मा. च पपा. अनवगृहीतः । शौ. तु. °ज-अ° इति । द्वस. सामान्यः समासस्वरः (पा ६,१,२२३)।

[n]) विप. वा नाप. (पूषन्-)। बस. पूप. प्रकृतिस्वरम् ।

[o]) अजक- इति विगतस्वरोऽपि मूको. भवति न त्वसौ कोऽपि वास्तविकः पाभे. । सपा. शौ २०,१२९, १७ यत्र अजागारः इति मुपा. अजगरः इति च मूको. पाभे. । वस्तुतोऽत्र पदद्वयी वा भवति पदत्रयी वेति पदविभागं प्रति भवत्येव संदेहः । उभयथा संभवाद् उभयथाऽपि तात्पर्यस्याविस्पष्टत्वाद् विनिगमकान्तराभावाच्च । इह अरक-, अविका- इत्यत्रत्ये टि. अपि द्र. ।

[p]) नाप. (जन्तु-विशेष- ⌊अजशब्दयुक्त- इति वें., विषधर- इति PW. GW. प्रमृ.⌋; विष-भेद- ⌊रोगविशेष-त्रत्-⌋

अ-जग्ध-पाप्मन्[a]- -प्मा शौ ९, ७, ९; पै १६,११३,३.

¶अ-जग्निवस्- -वांसम् तै २, १, १०,२[1]; काठ १०, ६[1]; १२,५[1]; १३,६[2].

अ-जघ्नुषी- -षी ऋ ८, ६७,१५.

अजत्-,अजन,नी- √अज् द्र.

?अजना[b]- -नाम् पै २,४०,३.

?अजन्य- -न्यात् पै २०,७,१०.

?अज-व(भ्रु>)भ्रू[c]- -०भ्रु शौ ५, ५,८; पै ६,४,८.

अ-जय[d]- -यः पै १५,६,५[e].

१अ-जुर,रा[f]- -†०र ऋ १, ५८,[४; (४,७,९)];१२७,९[2]; ६,२,९; ५,७; ८,५; १६, ४५; ८,२३, ११; १०, ११५, ४; मा १८, ७४; का २०, ५, ७; तै १,३, १४, ३; ३, १, ११, ६; कौ २, ७३५; -†रः ऋ १, ५८, २; १४४, ४; १४६, २; ३, २,[२; ५, ४, २]; २३, १; ४, ४५,७; ५, ७, ४; ४४, ३; ६, ४, ३; १५,५; २२, ३; ४८,३;६८,९; ७,१५,१३; १०, ५०, ५; ८७, २१; खि ४, ९, ५; ५, ५, ८; मा १७, १०; का १८, १, ११; तै ३, ४, ११, १; ४, ६, १,२; मै २, ७, ८‡[g]; १०, १; ४, १०, १; ११, ४$; १२,६;१४, १५; काठ २, १४; १७, १७; २३, १२; ३५, १४; क २८, १; ४८, १३; कौ १, २४; जै १,३,४; शौ ८, ३, २०; $१९, २४,८[e]; ५३, १[h]; २०, ३६,३; पै $८,[१६, ८; ११, ५, ५$; १६,७,१०; ८, ५; -†रम् ऋ १,१२६, २; १६४, २; १४; ३, ८, २; ३२,[७; ६, १९, २; ४९, १०]; ५, ६, ४; २७, ६; ६, ५,७;८, ६; २१,१; ३८,३; ४९, १५; ७, १८, २५; ८,६, ३५;२३,४; २०; ९९, ७; १०, ५१,७; ८८, १; ३; १०६, ६; १५६,४; मा १८,७४; का २०, ५,७; तै १, ३, १४, ३; ५, ४, ११¶; ७,३¶; ११,२;४,४,४,६; ५, ७, ८, २$; मै २,१३,७;४, ११,१; १२, २$; १३, १;१४, १५; काठ २, १४; १५;४,१६; ८, १७; ९,६; १५,१२; कौ १, २८३; ४१९; २, ३७२; ८८०; जै १, ३०, १; ४१, १; ३,३०, १५; $शौ ३,१९,१;५; ६,९८, २; ९, १४,२; १४;१०,८,४४; १३,३,१८; १८, ४, ८८; २०, १०५,३; $पै ३,१९, ५; १३, ५, २८; १०, १; १६, ६६, २; ६७, ४; १९, १२, १४;२२,४; -‡रस्य[i] कौ २, ३३३; जै ३, २८,५; -रा ऋ १, ११३, १३; ५, ३४, १; शौ १०, ८, २६; पै १६, १०३, ३; -†राः ऋ १,६४,३; १२७,५[1]; १४३,३[1]; ३,१८,२; ७, ३, ३; १०, ९४, ११; काठ ३५, १४; क ४८, १३; कौ २, ५७१; जै ३, ४६, ६; पै ९, ११, ८$; -†राणि ऋ १०, ९१, ७; मै ४, ११,४; -राम् शौ २,२९, ७; १२, २

---

इति सा., रोग-भेद- इति [पक्षे] GRV.) । व्यु.? अजका-व- इति पपा. । तमेवानुसरति सा. । अर्णवादिवद् मत्वर्थे वः प्र. द्र. (तु. पावा ५,२,१०९) । एतदुत्तरसूत्रे अजगव- इति प्राति. धनुर्विशेषसंज्ञापरमितोऽन्यदिव भवति । न चासौ संज्ञात्मकोऽर्थ इहाप्यभिप्रेतः स्यादिति वचनायोपलभ्येत । तस्यार्थस्याऽत्रात्यपरिहर्त्तव्यविषायनिष्टवस्तुवर्णनपरकप्रकरणेन नितान्तमसंगतत्वात् । ये अपि घ ४,१,५,१९ इत्यत्र, तां २५,१५,३ इत्यत्र च यक. अजकाव्-इति अजगाव- इति च प्राति. श्रूयेते ततोऽप्येतद् भिन्नार्थवाचकत्वाद् अन्यदिव भवति ।

a) विप. (°यजमान-) । तस. नञ्स्वरः । उप. बस. ।

b) गाम् इत्यनेन सामानाधिकरण्यमिति कृत्वा प्राति. संकेतोऽकारि । वस्तुस्थितिः संदेहकवलितैव द्र. ।

c) सौवरः संकेतः तम्. इति कृत्वा कल्पनामूलः द्र. । वा. पादादित्वात् षाष्ठिकम् आद्युदात्तत्वम् (पा६,१,१९८) । क्वचिद् अजबभ्रुः इति प्र१ अपि रूपमुपलभ्यते (तु. पाण्डु. टि.) । तथात्व उत्तरं श्रूयमाणेन पिता इति पदेनास्य समानाधिकरणता स्यात् । एवमेव PW. प्रभृ. च व्याचक्षते । स्वरस्तु दुरुपपादः स्यात् । क्वचिद् अजबभ्रु- इत्यविभक्तावयवः पपा. अपि दृश्यते (तु. पाण्डु. टि.) । सपा खि ४, ७[1], ८ ?न बभ्रु इति पाभे. । अथ । बभ्रु [सं१] इति शोधो भवेदिति विच. [सिभा १,२११] ।

d) परकर्तृकस्वजय-रहित- इत्यर्थे बस. द्र. ।

e) सपा. °जयः <> °जुरः इति पाभे. ।

f) विप. (अग्नि-, रथ- प्रभृ.) । बस. उप. आद्युदात्तत्वम् (पा ६,२,११६) । उप. <√जॄ ।

g) सपा. ऋ १०,४५,८ प्रभृ. माश ६,७,२,२ आपमं २,११,३१ अमृतः इति पाभे. ।

h) पाभे. अक्षरः पै १२,२,१ द्र. ।

i) सपा. ऋ १०,९१,७, अजुराणि इति पाभे. ।

३२[a]; पै १५,२,८; -†रासः ऋ ७, ५४, २; १०, ४६,७[b]; ८७, २०; मा ३३, १[b]; का ३२, १, १[b]; शौ ८,३, १९; पै १६, ७, ९; -रे ऋ ३,६,४; ६, ७०,१; १०, ३१, ७; मा ३४, ४५†; का ३३,२, ८†; तै ४, ३, ११, १; मै २, १३, १०; ४, ११, १†; काठ १३, १५†; ३९,१०; कौ १,३७८†; जै १, ३९, ९†; शौ ८,३, २५; ९, १२; पै १६, ८, ६; १९, २; -०रे तै ४,३, ११, ५; काठ ३९, १०; -रेण पै ३,१, ८‡[c]; -†रेभिः ऋ १, १६०, ४; ६, ५, ४; ६,२; ७, १०४,५; तै १,३, १४,४; काठ ३५,१४; क ४८, १३; शौ ८, ४,५; पै १६,९,४; -रेभ्यः ऋ १०,९४,७; -रैः ऋ २, ८, ४; -रौ मा १८ ५२; का २०, ३, २; तै ४,७,१३,१; मै २, १२, ३; काठ १८, १५; क २९, ४; पै ३, ३८, ६; -०रौ ऋ १, ११२,९.

?२अ-जर[d]- -राय मै ४,१४,१७.

अ-जर(त्>)न्ती[e]- -न्तीम् मा २१, ५; का २३,१, ५; तै १,५,११, ५; मै ४, १०,१; काठ ३०, ४; ५; क ४६, ७; शौ ७, ६, २; पै २०,१,८.

अ-जरयु[f]- -यू ऋ १,११६,२०.

अ-जरायु[g]- -युः पै ११,५,७.

अ-जवस्[h]- -वसः ऋ २,१५,६.

अ-जस्र,स्रा[i]- -†०स्र ऋ ८, ६०,४; काठ ३५, २; जै ४, २८, ९; -स्रः ऋ २, ३५,८; ३,१, २१; २६,७; ५४,१; ७,१,१८; १०, ६,२; मा ११,५४; १८, ६६†; का १२, ५, ५; तै ४, १,५,२; ३,१३,६†; मै २, ७, ५; †४, १०,१;१२, ५; १४, १५; काठ १६,५; शौ ७,८३,१;१९,३,२; पै २०, ३१, ९; -स्रम् ऋ १, १००, १४; ९, ११३, ७; १०, ४५, १; १३९, १ ; १८५, ३; खि ५, ५ , ८ ; मा ३, ३३†; ११ , ३१ ; १२, १८† ; १३, ४३;१७, ५८†; २६, ६; का ३, ३, २५†; १२, ३, ४; १३, २, १†; १४, ४, ६; १८, ५, ९†; २८,४,१;५,१; तै १. ३, १४, ५†;५,११,१; ४, १, १,४; ३, २;२,२,१†;१०, २; ६, ३,३†; मै १, ५,४†[j]; ६, २;७; २, ७, ३;९;१७;१०, ५†; ३, ३, ८†; ९'; ४, ११, १; काठ ४, १६; ७,२†; १४; १६,३; ९†; १७; १८,३†; १९,४'; ¶; क ५,२†; ६, ४; २८, ३†; ३०, २'; ¶; कौ २,१०५८;३,३,१२‡; जै २, २,७‡; शौ ६,३६, १; १३,२, ३६; १६,२,५; पै १८, २४,३; १९, ४, १; -†स्रया ऋ ७,१, ३; मा १७, ७६ ; का १८, ६, १२; तै ४,६, ५, ४; मै २,१०, ६; काठ १८, ४; ३५, १; ३९, १५; क २८, ४; कौ २, ७२५; जै ३,५९,१६; -†स्रा ऋ १०, १२,७; शौ १८,१, ३५; -स्राः ऋ ४,५५,२; -स्राम् तै १, ४, ३४,१; मै २, १३, १९; काठ ४०, ४; -स्रेण ऋ ६, ⌊१६, ४५[k], ७,५,४⌋; ४८,३; खि १, ४, ६; मा ११, २८; का १२, ३ १; तै ४,१, ३, १; मै २, ७,

---

a) सपा. पै १७,३३,३ भ्मृतम् इति पाभे. ।

b) शोधः वायुवः ऋ १०, ४६,७ टि. द्र. ।

c) सपा. ऋ १०,१७३,६ विशिष्ट इह पाभे. ।

d) प्रामाणिकी स्याच्चेच्छ्रुतिस्तर्हि जुर- इति भावे अप् प्र. (पा ३,३,५७) व्युत्पाद्य नञ्-तत्पुरुषः समासः द्र. । एवमाकारिकाश्रुतिं पपा. प्रमाणयेत् । निधिरज्जुराय इति सांहितिकं मूको. साक्ष्यं तु अधिरज्जुर् आय(त्) इत्याकारक-पदविभागे ज्ञापकं स्यात् । अन्यत्र निधि- इत्यस्यान्तोदात्तत्वेन प्रसिद्धेः यस्थि. अधि- इत्यस्यैव विकारमात्रत्वेन सुवचत्वात्। तु. सपा. शौ ६,११८,२; तैआ २,४,१ च यत्रोभयत्र अधिरज्जु- इति प्राति. एव श्राव्यते तच्च यद्र. ।

e) विप. (अदिति-) । तस. । एवं च सत्यपि बस. प्रकृते नञो जर- (पा ६,२,११६) इत्यत्र उसं. द्र. । शेषम् उप. जुरत्- टि. द्र.।

f) विप. (अश्विन्-) । बस. अन्तोदात्तः (पा ६,२,१७२)। यत्तु कैश्चित् तस. इत्युक्तं भवति (तु. PW. प्रभृ.)। तन्न। नञ्स्वरप्रसङ्गात्।

g) बस. । उप. जरोपपदे √इ+ञुण् प्र. (पाउ १,४)।

h) नाप. ( सेना- )। बस. अन्तोदात्तः ( पा ६,२, १७२)। उप. <√जु ।

i) विप ( अग्नि-, ज्योतिस्- प्रभृ. ) । तस. नञ्स्वरः (पा ६,२,२)। उप. <√जस् ( उपक्षये ) + रः प्र. (पा ३,२ १६७) ।

j) सपा ऋ ८,१८,५ विशिष्टः पाभे. ।

k) वा. क्रिवि. (तु. GW.; वैतु. वें. सा. विप. ⌊शोचिस्-⌋ इति)।

२; काठ १६,३; कौ २,७३५†; -त्रैः ऋ १,१८९,४.

अ-जात,ता[a]- -¶तः तै १, ५, ८,५; ७, ६, ५; २, १, ५, ४; मै १, ६, ४; ३,६, ७; -ताः ¶तै २, १.२,३;७,१,१,३; शौ ११,१०, ५; पै १६, ८५,५; -तान् ऋ ५, १५,२; मा १५,१;२; का १६, १, १; २; तै ४, ३, १२, १[२]; मै २,८,७[२]; ३, २, १०; काठ १७, ६[२]; क २६, ५[२]; शौ ६, १३६,२; ७, ३५, १; ३६, १; पै १,६७,२; २०,८,८;९.

अजात-पुत्रप(क्ष>)क्षा[b]- -क्षायाः खि ७,७,२.

अजात-शत्रु[c]- -त्रुः ऋ ८,९३,१५; तै ४,४,१२, ४; मै ३, १६, ४; काठ २२, १४; पै १५, २, २; -त्रुम् ऋ ५,३४,१.

अ-ज्ञानि[d]- -नये शौ ६,६०, १; पै १९,१४,४.

अ-जामि[a]- -मयः ऋ ६,२५,३;-मि ऋ ५,१९,४; १०,१०,९; १०; ¶तै ६,३,१०,५; ७,४, २, ३; १०,२[२]; ¶मै ४,६,८[२], ¶काठ ६,५;७; ३३,२[२]; ¶क ४,४;६; †शौ १८,१,१०;११; -मिभिः ऋ १,१००,११;-†मिम् ऋ १, १११, ३; १२४, ६; ४, ४,५; ६,४४,१७;७,८२, ६; मा १३, १३; का १४,१, १३; तै १,२, १४,२; मै २,७,१५; काठ १६, १५; क २५,६; -मीन् ऋ ६, १९,८; १०,६९,१२.

अ-जामित्व[e]- -त्वाय तै २, ६,६,४; १०,४; ५,५,६,२; ७, २.५,५; काठ १०,८; १२,४; २१,७.

अ-जायमान[a]- -नः[f] मा ३१, १९; का ३५,२,३. [°न- सु°].

अँ-जित्- -ँजितः खि ५,५,११[g].

अ-जि(त>)ता- -ताम् पै १, १३, ४[h].

अ-जितमनस्[i]- -नसः काठ १०, १०.

अजिन[j]- -नम् शौ ६,६७,३; पै १९, ६,१५; -नेन शौ ५, २१, ७; -नैः शौ ४, ७, ६; पै २, १, ५. [°न- अधिकृष्ण°, २कृष्ण°, वस्त°].

अजिन-संध[k]- -धम्[l] मा ३०,१५; का ३४,३,२.

अजिर-, अजिराय √अज् द्र.

*अ(जि>)जी-गर्त[m]->

आजीगर्ति[n]- -र्तिः काठ १९,११; क ३१, १; -र्तिम् तै ५, २,१,३.

अ-जीत,ता[o]- -तः शौ १२, १, ११; पै १७,२,२; -ता शौ १, २७, ४[p]; पै १९, ३१, ७; -ताः तै ५,७, २, ४[q]; काठ १३, १५[q];

---

a) तस. नञ्स्वरः (पा ६,२,२)। b) बस.। उप. तस.। c) विप. (इन्द्र-[ऋ.], सवितृ-प्रमृ.)। तस. उप. जात-शत्रु- इति बस.। अथवा बस. पूप. प्रकृतिस्वरम् (पा ६,२,१)। एवमौभयविध्ये संभवत्यपि द्वितीयः कल्प एव साधीयान् द्र.। जातशत्रुत्वाऽभावाऽपेक्षयाऽजातशत्रुत्वस्य व्यवहारेऽभीष्टतरत्वेनोपलम्भादिति दिक्।

d) नाप. (जन-)। बस. उप. आद्युदात्तत्वम् उसं. (पा ६,२, ११६)। जाया-(>जा-) + समासान्तो निङ्-आदेशः (पा ५ ४,१३४)।

e) पदविभागस्य सस्व. च कृते अ-च्छिद्रत्व- टि. द्र.।

f) =सपा. तैआ ३.१३.१ हिश्रौ १४,४,३८ काउ १०१:१। शौ १०,८,१३ पै १६,१०२२. अदृश्यमानः इति पाभे.।

g) सपा. शाश्रौ ८,२५,१ अपितः (तु. सा. [ऋ ७,८२,३]) इति पाभे.। h) अजताम् इति मूको.। सपा. शौ २, २९,७ अ-जराम् इति पाभे.।

i) तस.। उप. जित-मनस्- इति बस. द्र.।

j) अज- इत्यतस् ताद्धितमिति MW.। प्राञ्चस्तु √अज्+ इनच् प्र. इत्याहुः (तु. काउ २,२२)। यत्तु (पाउ २,४८) इत्यत्र (भोउ २,२,१९४) इत्यत्र च इनच् प्र. इत्युक्तं भवति तल्लक्ष्याननुविधायित्वादलक्षणं द्र.। न ह्यन्तस्वरा श्रुतिर्भवति यतश् चानुबन्धश् चरितार्थतामियात्। प्र. स्वरेण मध्योदात्तत्वम्।

k) नाप. (चर्मकार-)। उस. उप. सम् √धा +मूलविभुजादित्वात् कः प्र. अन्तोदात्तश्च (पावा ३,२,५ पा ६,२,१४४)।

l) सपा. तैब्रा ३,४,१३,१ अजिनसंधायम् इति पाभे.।

m) व्यप (ऋषि-)। 'अजौ गर्तौ यस्य' इति बस. पूप. दीर्घः (तु. पा ६,३,१३७)। पूप. इः प्र. (पाउ ४.१४०) तत्स्वरश्च। अत्र अ-जी° इति मन्वानः MW. विमर्शविशेषापेक्षः।

n) व्यप. (शुनःशेप-)। अपत्येऽर्थे इञ् प्र. ञित्-स्वरश्च (पा ४.१.९६; ६,१,१९)।

o) तस. नञ्स्वरः (पा ६,२,२)। उप. <√ज्या इति भा. PW. प्रमृ.; <√जि इति भा. [पक्षे], सा. च।

p) सा. अजिता इति ?

q) ज्योगजीताः (वाश्रौ १,५,५,७ पागृ ३,२,२ जैगृ २, ३,६) >माश्रौ १,६,४,२१ ज्योग्, जीवाः इति द्विपदः पाभे.। मंब्रा २,१,१२ पागृ ३,२, २ (गुजसं.) ?ज्योग् जीताः (यत्र यनि. शोधः) इति पाभे.।

-तान् तै ५,७,२,३[a].
अ-जीति[b,c]- -तये ऋ ९, ९६, ४; -तिम् ऋ ९, ९७, ३०; तै ५, ७,२,३[d].
अ-जीमूतवर्षिन्[e]- -र्षी मै ४,८,८.
अ-जी(र्ण>)र्णा[b]- -र्णा तै ४,३,११, ५; मै २,१३,१०; काठ३९,१०.
अ-जीवन[b]- -नः शौ १८,२,३०.
†अजुर्[f]- -रम्[g] ऋ ८, १, २; शौ २०,८५,२.
अ-जुर्य,र्या[h]- -†र्य ऋ ६, २२, ९; शौ २०, ३६, ९; -र्यः ऋ २, ८,२;६,३०,१;-र्यम् ऋ १,६७, १;१४६,४;२,१६,१; ३. ७, ४; ५३, १५; ५, ६९, १; ६, १७, १३; १०, ८८, १३; शौ ५,१, ४; पै ६, २, ४; -र्यस्य ऋ ८, १३, २३; -र्या ऋ २, ३९,५; -र्याः ऋ २,३,५;३,७,७;४,५१, ६; -र्यासः ऋ १०,९४,१२.
?अजुर्यमुः[i] ऋ ५,६,१०.
अ-जुष्ट,ष्टा[b]- -ष्टम् ऋ ५, ७७, २[j]; ७, ७५, १; ७८,६; मै ४,१२, ६†; पै १६, ६३, ६[k]; -†ष्टा ऋ २,४०,२; तै १,८,२२, ५; मै ४, ११, २; काठ ८, १७; शौ ७,१२०, २§; पै २०,१७, ८; -ष्टाः पै १९, ३६, १५; -ष्टात् ऋ ७,[(१, ३६, १५); १, १३]; -ष्टान् ऋ ९, ७३, ८; -†ष्टानि ऋ १०, १६४, ३; शौ ६,४५,२; पै १९, ३६,५†; -ष्टाम् शौ १०,३,६[k].

a) =सपा. तैब्रा ११, १७। पाग् ३,१,२ अजीजान् इति पाभे., मंब्रा २,१,९ ?अजीजात् इत्यत्र च यनि. शोधः।
b) तस. नञ्स्वरः (पा ६,२,२)।
c) भाप.। तस. उप. <√जि इति (तु. वें. भा. सा. NW.; वैतु. PW. GW. प्रभृ. <√ज्या इति? सस्थ. अज्यानिमजीतिम् इति पाठे अज्यानिम् इत्यस्य व्यतिरिक्तत्वोपलम्भात्)।
d) =सपा. बौध २,६,१३। मंब्रा २,१,१० पाग् ३, १,२ अजीजिम् इति पाभे.।
e) विप. (पर्जन्य-)। तस.।
f) विप. ([जरा-रहित-] इन्द्र-)। बस. अन्तोदात्तः (पा ६, २, १७२)। उप. हलन्तं भाप.। PW. तु अकारान्तमाह। तदपि विमृश्यं भवति।
g) सपा. कौ २,७११ जै ३,५८,८ जुवम् इति पाभे.
h) तस. कृत्योक- (पा ६,२,१६०) इत्यन्तस्वरः। उप. <√जॄ> जुर् + क्यप् प्र.। यत्तिवह सा. ण्यता प्र. (जार्य->जुर्य- इति कृत्वा) व्यु. आह, तदसत्। गुणवृद्ध्यविषये (क्ङिद्विषये) एव √जॄ>जुर् इत्यस्याऽद्य्परिणामस्य श्रुतिप्रसिद्धेरिति यावत् (तु. ऋ १,१८२,३ प्रभृ. यत्र श-विकरणतयैव श्रुतयो भवन्ति)।
i) एकमेव पदं सर्वं निहतं चेति पपा. भवति। आख्यातमाख्यातेन क्रियासातत्ये (पा २,१,७०) इत्यन्तर्गणसूत्रोक्तदिशा मयूरव्यंसकादिष्वन्तःपातमिव सा. वष्टि (तु. वें.; [पक्षान्तरे] द्वे पदे इति च द्वितीयस्यापि निघात इति च मन्वानः?)। न त्वेवं सत्यपि समासावयवयोः अजुः इत्यस्य यमुः इत्यस्य च स्वरूपपरिच्छित्तिः सुलभा संभाव्येत। यस्मिन् कस्मिन्नपि लकार ईदृग्-रूपाप्रसिद्धेः। सर्वेषां योगानां तच्छेषाणां च छन्दोविषये बाहुलकदर्शनमत्राशरण्यानां शरणं भवत्वित्यपि न सुवचं भवति। तथाविधागतिकत्वाभावात्। तर्हि का सा गतिरिति चेदुच्यते। अत्रेयं कल्पना विचार्यतां यथाऽऽदितस् एवाग्निमजुर्यमगुर् इत्येवं सतः प्रथमस्य पादस्य कालान्तरे तत्तत्प्रभावजो यनि. प्रकारकः पाठः प्रचलित इति। एवं हि सम्यक्प्रकारेणानुष्टुप्-पादः संजायते। यस्थि. तु तत्सिद्ध्यर्थम् एवाँ इत्याकारकः पाठो दीर्घत्वानुनासिकत्वाभ्यामायासविशेषसाध्य इवाभाति। अजुर्य- इत्येतेन विशेषणेन योगश्चाग्नेस्तत्र तत्र दाशतय्यां सुलभ इव द्र.। अत्र समस्तं पदमित्यास्थाय GW. (तु सा.) √अज् इत्यस्य च √यम् इत्यस्य च योगमाह। तच्चिन्त्यं भवति। तदुक्तदिशा अजुरम् इत्याकारको वा अजुर्यम् इत्याकारको वा पूर्वभागः स्यात्। उभयथापि छन्दोवैषम्यमापतेत्। तन्निवारणार्थमवश्यं तेनापि मन्त्रारम्भे एवाग्निम् इत्याकारकः पाठोऽभ्युपेयः। भूयानप्यत्र विमर्शविस्तरोऽन्यत्रानुसंधेयः। AJP ३८,१ इत्यत्र BL. इत्यनेनोक्तमनुसरन् NW. अजुर्यं यमुः इत्यादित इव सतः पाठस्य ह्रसनमभ्युपैति। पूप. अस्मदभ्युपगतमेव, नातस्तत्र किमपि चोद्यमिव भवति। यमुः इति प्रस्तावितम् उप. √यम् इत्यस्य किं रूपं भवतीति नालं परिच्छेत्तुमिति सुत्यजम्। तदपेक्षया अगुः इत्यस्य न्याय्यतरत्वात् प्रसिद्धतरत्वाच्च ग्रहणं सुगमतरमिव भवेत्। अभ्युपगते च तस्मिंस्तदीयाज्मध्यस्थस्य गकारस्य गीर्भिः इत्यस्मिन् परतः सति ध्वनिसाम्यप्रयोजितो लोपोऽपि सुग्रहो भवेदिति दिक्।
j) शोधः ?वि चावः टि. द्र.।
k) सपा. °ष्टम्<>°ष्टाम् इति पाभे.।

**अ-जुष्टि**[a]- -ष्टिः ऋ ६, ३, २; -ष्टौ ऋ १,६३,५.
**अँ-जू**[a]- -जुवः खि ५,५,११.
**अ-जूर्य**[b]- -र्यौ[c] तै ३,२,२,१.
|**अ-जूर्यत्**[a]- -र्यतः ऋ ३, ४६,१; ५,४२,६; मै ४,१४,१४.
**अजे** √अज् द्र.
?**अजैश्रवसः**[d] शौ २०,१२८,१६.
?**अजैषस्** पै ५,१४,१.
**अ-जो(ष>)षा**[e]- -षाः[f] ऋ १,९,४; शौ २०,७१,१०.
**अ-जोष्य**[g]- -ष्यः ऋ १,३८,५.
**अ-ज्ञात,ता**[a]- -तः खि ४,५,१०; शौ १०, १, ८; पै १६, ३५, ८, -तम् शौ ६, १२७, ३; पै १, ९०,४; १७, ३१, ५[h]; -ताः ऋ ४,२३,५; ७, ३२, २७; कौ २,८०७†; जै ४,१०,७†; शौ ८,७,१८;२०,७९,२†; पै १६, १३,७; -०ते शौ १०,१, २०; पै १६,१६,१०; -तेषु ऋ १०, २७,४; [°त- अन्°].
**अज्ञात-केत**[i]- -ताः ऋ ५,३,११.
**अज्ञात-यक्ष्म**[j]- -†क्ष्मात् ऋ १०, १६१, १; शौ ३, ११,१; २०, ९६,६; पै १,६२,१.
**अँ-ज्ञान**[a]- > अज्ञान-तस्[k](:) खि ३, १०[२],८.
**अ-ज्ञास्**[l]- -ज्ञाः ऋ १०,३९,६.
**अज्म-,अज्मन्-,१अज्यमान-** √अज् द्र,
**२अज्यमान-** √अञ्ज् द्र.
**अ-ज्यानि**[m]- -निम् तै ३,३,८,३;४, ७,२; ५, ७, २, ३[n]; काठ १३, १५; शौ ६, ५५,१; पै १९,९, २; -नीः तै ५,७,२,५¶.
**अ-ज्येय**[o]- -यः मै ४,४,५.
**अ-ज्येष्ठ**[p]- -ष्ठाः ऋ ५, ५९, ६; -ष्ठासः ऋ ५,६०,५.
**अज्र-, अज्र्य-** √अज् द्र.
**√अञ्च्** √अच् द्र.
?**अञ्चन-** -नम् पै १९,४०,१[q].
**√अञ्ज्** (वधा.)[r], अङ्क्ते ऋ १,१२४, ८; ५,१,३; ८,२९,१; मै ४,८, ५¶; †कौ २,१०९८; अनक्ति ऋ १,१५३,२; ¶तै २, ६, ५, ३; ६,३,४,३[२]; ¶मै ३, ९, ४; ६; १०, २[s]; अनक्ति ऋ ४, ६, ३; १०, ६८,२; ¶तै २, ६,५, ३[२]; ६,२,१०,५[२]; ३,३, २;४, २;३[३];९,३; ११, ३[२]; ¶मै ३, ९, ३[३]; ४, ५, २; ¶काठ ७, १५[२]; १८, १७[t]; २१, ८; २६, ५[३]; ३७,१६[३]; ¶क ६,५[२];४१, ३[३]; शौ ५,२७, २[t]; २०, १६,

---

a) तस. नञ्स्वरः (पा ६,२,२)।
b) दीर्घ एव विशेषः (पा ८,२,७६)। अन्यद् अ-जुर्य- इत्यत्र टि. द्र.।
c) सपा. जैमि १,५ अचर्यौ इति पाभे.।
d) पाठः? सपा. खि ५, १४, ५ उच्चैःश्रवसम् इति पाभे.। WR. (तु. पाण्ड. टि.) उच्चैःश्रवसम् इति।
e) विप. ([असंतृप्ता-, सस्पृहा-] गिर्-)। तस. उप. कर्तरि कृत् (तु. पाभे. NW.; वैतु. ORN. प्रमृ. अन्यथावादिनः)।
f) सपा. कौ १,२०५ जै १,२२,२ सजोषाः इति पाभे.।
g) विप. (जरितृ-)। तस. नञ्स्वरः। अत्र उप. √जुष् > जोषि इत्यतः कृत्यप्रत्ययान्तं भवेद् यदि वा जोष- इत्यतस् तादर्हिकप्रत्ययान्तं भवेत्। उभयथाऽपि स्वरोऽन्त्यः स्यात् (पा ६,२,१६०,१५५)। सोऽयं तदपवादः द्र.। यद्वा नञोऽगुणप्रतिषेधीयत्वे सति तत्पूर्वस्याऽस्य प्राति. जोष्येतरद्वेष्येत्येतत्पर्यायत्वेन वृत्तेरुक्तस्याऽन्त्यस्वरस्य प्राप्त्यभावः द्र.।
h) सपा. शौ १२,२,१६ अन्येभ्यः इति पाभे.।
i) विप. (जन-)। तस. गर्भितः बस.। अथवा तस. एव। तथात्वे ज्ञात-केत- इति उप. बस.। उभयथाऽपि नञ्स्वरो न विहन्येत।
j) तस. गर्भितः कस. द्र.। तेन च साधारणः सामासिकः स्वरः (पा ६,१,२२३)।
k) अज्ञानतो कृतम् इति मुपा.। स च अज्ञानतः कृतम् इत्यस्य विकारमात्रमुताहो अज्ञानतः अकृतम् इति वास्तविक पदविभाग इति विमृश्यम्। तसिः प्र. (पावा ५,४,४४) तत्स्वरश्च।
l) =ज्ञाति-भिन्न-। तस. नञ्स्वरः (तु. वें.; वैतु. PW. प्रमृ. बस. इति मन्वाना विमृश्याः)। उप. √ज्ञा + कर्तरि असिः प्र.।
m) उप. < √ज्या। शेषं a टि. द्र.।
n) =सपा. मं २,१,१० पागृ ३,१,२ बौध २,६, ११ तैप्रा ११,१७। माश्रौ १,६,४,२१ अज्यानम् इति पाभे.।
o) तस.। उप. < √ज्या + यत्। नञ्स्वरापवादोऽन्तोदात्तः (पा ६,२,१६०)।
p) विप. (मरुत्-)। बस. अन्तोदात्तः (पा ६,२,१७२)।
q) अञ्जनम् वा आञ्जनम् वेति शोधः?
r) धा. व्यञ्जन-म्रक्षण-कान्ति-गत्यादिषु वृत्तिः।
s) सपा. तै ६,३, १०, २ अभिघारयति इति पाभे.।
t) सपा. तै ४, १, ८, १ आनक्ति इति, पै ९,१, २ अयुक्त इति च पाभे.।

२†; अञ्जते ऋ ९,१०२, ७[a]; †अञ्जते ऋ ९, ८६, ४३; कौ १, ५६४; २,९६४; जै १,५७, ११;४,२०,८; शौ १८,३, १८; †अञ्जते ऋ १,९२,१; १५१,८; ८, ७२, ९; ९, १०,३; कौ २, ४७१; ११०५; जै ३, ३५, ६; †अञ्जन्ति ऋ १, ९५, ६; ३, ८, १; १४, ३; ५,३, २; ४३, ७; ६, ११, ४; ९, १०९,२०; मै ४, ९, ३;१३,१; १४. १५; काठ १५, १२; पै ८, १४, ६; अनक्षि पै १६, ३३, १०; अङ्ध्वे[b] ऋ १०, १००, १० ; अञ्जे पै १,११२, १; अनज्मि शौ ४,१४, ६[c]; पै १, ६६, २; अञ्ज्मः ऋ ९, ४५,३; अनक्तु शौ ५, २८, ३; अनक्तु ऋ ८, ३९,१; खि ५,७, १, २; मा ६, २; २७,१२[d]; ३७, ११; का ६, १, २; २९, २, २[d]; ३७,२,१; तै १, ३,५. १; ६,१;६,३,३, २;४,२; मै १,२,१४;२,१२,६[d]; ३,९, ३; ४, ९, ३; १३, २†; काठ ३, २; ३; १५, १३; २६, ३;५; क २,९;१०;२९,५[d];४१, १; ३; पै २,५९,१; अञ्जन्तु शौ १८,३,१०[e]; अञ्जन्तु मा २३, ८[l]; का २५,३, ४[l]; तै ७,४, २०,१[l]; काठ ४४,९[l]; शौ ३, २२,२; पै ३,१८,२; अङ्ग्धि[g] ऋ १०, १५६, ३ ; कौ २, ८७९† ; पै २०, २७, १[h] ; अङ्क्तम् शौ ६, ६९, २; ९, १ , १९ ; पै १६, ३३, ९ ; १९, ३२,१४; अनक्तन ऋ १०, ७६, १ ; अनजन् ऋ ३, १९, ५; आञ्जन् मै १, ८, ४¶[i]; अञ्जीत मै ४,८,५¶; अनज्यात् ऋ १०,३१,४.

†आनजे ऋ १, १०२, १; ८, ६३, १; मा ३३,२९; का ३२, २,१२; कौ १,३५५; जै १,३७, ४; †आनजे ऋ८,६३,१; कौ१, ३५५; जै १,३७, ४; पै १,५५, १$; आनञ्ज मा ८,३०; का ९, ५,३; तै३,३,१०;२; काठ१३,९. अज्यते ऋ ८, २०, ८; ५१, ९; ९,३२,३;७६,२; १०,११८, ३; खि ३,३,९; मा ३३, ८२†; का ३२,६,१३†; †कौ २,१२०; ५७९; ९५९; †जै ३, ४७, ५; ४,१९, १; २७, ५; अज्यसे ऋ ९,६६,९; †अज्यसे ऋ ३,४०, ६;९, ७८, २; ८५, ५; कौ १, १९५; जै १, २१, २; शौ २०, ६,६. [अनु°, अन्तर्°, अभि°, आ°, उद्°, उप°, नि°, परि°, प्र°, प्रति°, वि°, सम्°].

अक्त,क्ता- -क्तः ऋ ४, ३,१०; ६, ४,६;५,६; ९, ९६, २२; तै ४, १, ४, २‡[j] ; मै २, ७, ४‡[j]; काठ १६, ४‡[j]; -क्तम् ऋ २, ३,४; ४,२७,५;९,७४,८; १०, १७७,१; मा २,१६[k]; २०,३९; का २२,४,४; तै १,१, १३,१[k]; मै ३,११,१; १६,२[l]; काठ ३१, ११[k]; ३८, ६; ४६, २[l]; क १, १२[k]; ४७, ११[k]; पै १६,५०, ३[m]; -क्ता ऋ १,६२,८[n]; मै ३, ९, ६¶; -क्ते तै १, ३, ७, १; ६,३, ५, ३; -क्तौ मा ६,११; का ६,२,६; तै १,३, ८, १; ६, ३,७,५; मै १, २, १५; काठ ३, ६; क २, १३. [°क्त- अनु°, अभि°,आ°,१आल°,उप°, घृत°, नि°, वि°,सम्°, स्वा(सु-आ)°].

अक्तु(वप्रा.)[o]- -क्तवः ऋ १०,३,४; ८९, १५; -क्तवे ऋ १०, ४०, ५; -क्तुः ऋ १,१४३,३;२,३०, १; -क्तुना ऋ २,१०,३;१९,३;

a) प्रपु३ क्ष>ञ्च् प्र. उसं. चित्-स्वरश्च (तु. कृण्वते प्रमृ.)।

b) <अङ्ग्ध्वे (तु. शौ ४,१५, ६ समङ्धि प्रमृ.)।

c) सपा. मा१८,५१ का २०,३,१ तै४,७,१३,१ मै २, १२,३;३,४,४ काठ १८,१५ क २९,४ युनज्मि इति पाभे.।

d) पाभे. अनक्ति काठ १८,१७ द्र.।

e) स्वरः? अञ्जन्तु इति शोधः (तु. W.)।

f) सपा. मै ३,१२,१९[३] आञ्जन्तु इति पाभे.।

g) तु. टि. अङ्ध्वे।

h) सपा. तैब्रा २,५,८,६ अङ्ग्धि इति पाभे.।

i) सपा. काठ ६, ५ क ४, ४ अलिम्पत् इति पाभे.।

j) =सपा. बौश्रौ १०,४:११। ऋ १०,१,२ मा ११,४३ का १२,४,६ माश ६,४,४,२ अक्तून् इति पाभे.।

k) = सपा. माश १, ८,३,१४ तैब्रा ३,३,९,३ आपश्रौ ३,६,१ प्रमृ.। का २,४,३ काश २,८,१,१३ रिप्तः (तु.टि. रिप्तः) इति, मै १,१,१३; ४,१,१४ माश्रौ १,३,४,१५ अप्तुभिः इति पाभे.।

l) सपा. मा २९,४ का ३१,१,४ तै ५,१,११,२ युक्तम् इति पाभे.।

m) सपा. शौ ६,११८,१ गत्नुम् इति, मै४,१४,१७ वग्नुम् इति, तैआ २,४,२ कामा १२६:८ वग्नुम् इति पाभे.।

n) निशावाचि विशेष्यनिघ्नम्।

o) नाप. (तेजस्-, तमस्-, रश्मि-, रात्रि- प्रमृ.)। क्तुः प्र. (तु. पाउ १,७१) तत्-स्वरश्च।

–क्तुभिः[a] ऋ १, ३४,८;३६, १६; ४६, १४; ५०,२;७; ९४, ५;११२,२५; ३, १७, १; ३१, १६; ४, ५३, १; ३; ५,४८,३; ८४, २; ६, ६९,३; ९,५०,५; १०, १४, ९; ३७, ९; मा ३४, ३०; ३५,१; का ३३, १, २४; ३५,४,२; तै २,२, १२, ३; कौ २,५५९; ३,५, ७; १२; जै ३, ४४, ५; शौ १३, २, १७;२२; १७,१,९$; १८, १, ५५; २०, ४७, १४; १९; पै १२, १, ६; १८, २२, २; ७ ; ३१ , ४$; –क्तुभ्यः ऋ १०, ८९, ११; –क्तुम् ऋ ७, ६६, ११; १०, ६४,३; ९२, २; –क्तुषु ऋ ८, ९२, ३१; कौ १, १२८; जै १, १४,४; –क्तून् ऋ १, ६८, १; ५, ५४, ४; ६, ४, ५; ३९,३; ६५,१; ७, ७९, २; ८, ५, ८; १०, १, २[b]; १२, ७; मा ११, ४३†[b]; का १२, ४, ६†[b]; शौ १८, १, ३५; –क्तोः ऋ ३, ७, ६; ३०, १३ ; ४, १०, ५; ५, ३०,[१३; ६, २४,९]; ६,३,३; ५;३८,४; ७, ११, ३; ३९, २; १०, ९२, १; १४; खि ५,७,२, १; मा २८, १२; ३३, ४४†; का ३०, २, १; ३२, ४, १†; मै ४,१३,८; १४, १५†; काठ १९, १३; –क्तौ ऋ ६, ४९, १०.

¶अक्त्वा तै ६,३, ९, २; मै १,८, ७; काठ ६, ८*; १९,१०; १२; २२, १०; २५,५; ७; क ४,७; ३०, ८; ३१, २; ३५, ४; ३९, २; ५.

२अज्यमान,ना[c]– –नः ऋ ९, ९७, ३५[d]; १०, ३१, ९[e]; –ना ऋ १०,३१,१०.

?अञ्जत्[f] शौ १९,५३,२[g].

अञ्जत्[h]– –ञ्जन् ऋ १, ९२, ५[i]; मा २९,१; का ३१, १, १; पै १२,२,२[g]; –ञ्जन्तः पै ९, १२, ८. [°ञ्जत्- प्रति°, सम्°]

अञ्जन[j]– –नम् पै २०, ४९,७; –ने खिसा २९, ४३. [°न- अभि°, आ°, प्र°, वि°, सम्°].

¶अञ्जन-गिरि– –रिणा काठ २३,१; क ३५,७.

¶अञ्जलि[k]– –लिना तै २, ५,१,२; ७; ३,३,८,४; ५,४,९, ४; मै ३,४,३[2]; काठ २१,१२.

अञ्जस्[l]– –ञ्जः[m] ऋ १, ३२, २; १९०,२; मै ४,१४,१३; शौ २, ५,६; पै १३,६,२; –ञ्जसा[m] ऋ १,१२९,४; ६, १६,३; ५४,१; १०,७३,७; मा ५,५; का ५,२, ३; तै १,२, १०,२; ¶५, २,३, ५;८,५[2]; मै १,२,७;३,४,७[2]¶; काठ २, ८; ६,१०†; ¶२०,१; ७; क २,२; ¶३१,३;९; कौ२, ८२६†; जै ४,४, ७†; –ञ्जसि ऋ १, १३२,२[2]; –ञ्जोभिः खि ५,७,२,१; मै ४, १३, ४; काठ १६,२१.

¶अञ्ज(सा-अयन>)सायनी[n]– –नी तै ७,२, १, २; ३, ५, ३; ७, ३; ९, ३; ४, १, ३; २,४; ४,३.

अञ्जस-पा[o]– –पाः ऋ १०, ९४, १३; –पाम् ऋ १०,९२, २

अ(ञ्जस्>)ञ्जो-यान[p]– –नः शौ १८,२,५३.

---

a) प्रायेणास्य रूपस्य तत्तत्क्रियाव्याप्यकाक्तुरूपदार्थभूत-कालविशेष-वाचकतया क्रियाविशेषणत्वेन प्रयोगा उपलभ्यन्ते।

b) पामे. अक्तुः तै ४,१,४,२ द्र.।

c) शानचः निघाते (पा ६,१,१८६) यक्-स्वरः।

d) सपा. कौ २,९१० जै ३,१९,५ पूयमानः इति पामे.।

e) सपा. शौ १८,१,३९ युज्यमानः इति पामे.।

f) पाठः? सा. शतरि रूपमाह। पाण्डु. यनि. निघात एव दृश्यते। कोशान्तरसाक्ष्यतः सस्वररूपसद्भावोऽपि प्रमाप्यते। W. त्वत्र नान्तरीयोत्तरं मन्त्रमादर्शीकुर्वन् अर्वाङ् इति पिपठिषति। तदेवं रूपपरिच्छेदो भूयोविमर्शापेक्षः द्र.।

g) सपा. शौ १९,५३,३ पै १२,२,३ प्रत्यङ् इति पामे.।

h) शता प्र. (पा ३,२,१२४) तत्स्वरश्च।

i) द्र. PW. GW. प्रमृ ; वैतु. स्क. वें. सा. क्रिप. इति।

j) = अञ्जनद्रव्य-विशेष-। करणे ल्युट् प्र.।

k) नाप.। अलिच् प्र. चित्स्वरश्च (पाउ ४,२; पा ६,१, १६३)।

l) नाप.। असुन् प्र. नित्स्वरश्च (पाउ ४, १८९ पा ६, १,१९७)।

m) वा. क्रिवि. द्र.।

n) विप. (स्रुति-)। उस. उप. √इ + ल्युट् प्र. लित्स्वरश्च प्रकृत्या पूप. विभक्तेरलुक् च (पा ६, १, १९३; ३,१३९ पावा ६,३,१)। स्त्रियां ङीप् (पा ४,१,१५)।

o) विप. (अग्नि-, अद्रि-)। उस. उप √पा(पाने)+विच् प्र. कृत्स्वरश्च प्रकृत्या (पा ३,२,७४;६,२,१३९)।

p) विप. (पथिन्-)। उप. <√या + ल्युट् प्र.। समासस्वरौ नापू. टि. द्र.।

?अञ्ज(स>)सी[a]- -सी ऋ १, १०४,४.

अञ्जसी(न>)ना[b]- -नाम् ऋ १०,३२,७.

†अञ्जान,ना[c]- -नः ऋ २, ८, ४; ३, १०, ४; ९, ५०, ५; १०३, ⌊२; १०७, २२⌋; कौ २, ४३०; ५५९; जै ३, ३३, ५; ४४, ५; -नाः ऋ ४, ५८, ९; मा १७, ९७; का १९,१,१०; काठ ४०, ७; पै ८,१३, ९. [°न- अभि°, आ°, सम्° ].

अञ्जि (वप्रा.)[d]- -ञ्जयः ऋ १, १६६,१०; ७,७८,१; १०, ९५, ६; -ञ्जये तै ७, ३, १७, १; काठ ४३, ७; -†ञ्जि ऋ १, १२४,८; ४, ५८,९; ७,५७,३; ८, २०, ११; २९, १; मा १७, ९७; का १९,१,१०; काठ ४०, ७; पै ८,१३, ९; -ञ्जिः मै ४, २,१४¶; -ञ्जिभिः ऋ १,३६, १३;३७,२; ६४,४; ८५,३;८७, १; ११३, १४; २, ३४, १३; ५,५२, १५; ५६, १; १०,७८, ७; मा ११,४२; का १२, ४,५; तै ४, १, ४, २; मै २, ७, ४; काठ १५, १२; १६, ४; कौ १, ५७; जं १, ६, ३; -ञ्जिम् मा २३, २१; का २५,६,१; तै ७, ४,१९,१; ¶मै २, ५, ९[२]; काठ ४४,८; -†ञ्जिषु ऋ २,३६,२; ५, ५३, ४; शौ २०, ६७, ४; -ञ्जीन् ऋ १०,७७,२ [°ञ्जि- अल्प°, उद्°, १कृष्ण°, महत्, १रोहित°, वृषद्°, स्वेद°].

अञ्जि-मत्[e]- -मन्तः ऋ ५, ५७,५.

?अञ्जि-व[f]- -वम्[g] शौ ८,६, ९; पै १६,७९,९.

अञ्जि-(स>)षक्थ[h]- -क्थः मै ३,१३,५; -क्थाय काठ ४२,७.

अञ्जि-सक्थ[i]- -क्थः मा २४, ४; का २६,१, ८; -क्थाय तै ७,३,१७,१.

अञ्ज्ये(ञ्जि-ए)त[j]- -ताय तै ७, ३,१७,१, काठ ४३,७.

आनजान[k]- -ना ऋ १, १०८, ४.

✓अट् > अट्णार[l]- > ¶आट्णार[m]- -रः तै ५,६,५,३.

✓अण् (बधा.)

१अणु[n]- अति°.

---

[a]) अर्श-आदेर् आकृतिगणत्वाद् मत्वर्थीयः अच् प्र. चित्स्वरश्च (पा ५, २, १२७; ६, १, १६३)। स्त्रियां ङीष् प्र. उसं. (पा ४, १, ४०) तत्स्वरश्च। तु. अञ्जसीना- टि.।

[b]) विप. (स्रुति-)। अञ्जस्- + ख>ईनः प्र. (तु. पा ४, २, ९३) तत्स्वरश्च (तु. सा. GW. प्रभृ.; वैतु. वें., सा. ⌊पक्षे⌋ °सीनाम् ⌊ष३⌋ इति)।

[c]) शानचि चित्स्वरः (पा ६,१, १६३)।

[d]) विप. (⌊व्यञ्जक-⌋ वाघत्-, सूरि-), नाप. पुं. स्त्री. न. [कान्ति-, रूप- ⌊ऋ ४,५८,९ प्रभृ⌋; आभरण- ⌊ऋ १,३७,२ प्रभृ.⌋; सर्वाङ्ग-श्वेताश्व- (तै ७,३,१७,१ ⌊तु. भा. सा.⌋), पुंव्यञ्जन- ⌊मा २३, २१ प्रभृ.⌋ प्रभृ.]। कर्त्रादिर्थे इः प्र. (तु. पाउ ४,१४१) तत्स्वरश्च।

[e]) मतुपः स्वरः (पा ६,१,१७६)।

[f]) मत्वर्थीयः वः प्र. (तु. पावा ५,२,१०९) तत्स्वरश्च।

[g]) कमलमञ्जिवम् इति पाठः? भगम् अलंवुवम् (<*अलं-वृ-) इति शोध इति मतम् (तु. पै. मूको. कमलवञ्चुवम् इति च, सस्थ. टि. ३कमलम् इति च)।

[h]) अत्र शाखाभेदेन शब्दस्वरूपे कियानपि भेदः द्र.। सुषामादिषु च (पा ८,३,९८) इत्युक्तदिशा परादौ नतिर्भवति। नाउ. टि. उक्तायाः प्राप्तविभाषाया इह सविषयतोदाहार्या भवति। शेषं नाउ. टि. द्र.। काठ. तु स्वराङ्कनाभावस्थलम्।

[i]) विप. (⌊अश्वमेधीय-⌋ पशु-)। बस. समासान्तः षच् (पा ५ ४, ११३)। चित्-स्वरेण (पा ६,१,१६३) नित्येऽन्तोदात्ते प्राप्ते सक्थं चाक्रान्तात् (पा ६,२,१९८) इति विभाषा द्र. (तु. लोमशसक्थौ मा २४,१)।

[j]) वर्णलक्षणसमासः (पा २,१,६९)। वर्णो वर्णेष्वनेते (पा ६,२,३) इति पर्युदासवचनाद् एतशब्दे उप. सति पूप. प्रकृतिस्वरो न भवति। साधारणः सामासिकः स्वर एव च भवति (पा ६,१,२२३)।

[k]) लिटः कानच् (पा ६,१,१६३) चित्स्वरश्च।

[l]) व्यप.। औणादिकः कर्तरि नारच् प्र. ष्टुत्वञ्च (तु. दु १,१४)।

[m]) गोत्रापत्येऽर्थे अण् प्र. (पा ४, १,९२) तत्स्वरश्च।

[n]) उः प्र. (पाउ १,८) तत्स्वरश्च। धा. सूक्ष्मार्थे वृत्तिः द्र. (तु. या ⌊६,२२⌋ प्रभृ.)। यत्तु PW. प्रभृ. आद्युदात्तमाहुः। तत्र प्रामाण्यं चिन्त्यं भवति। सत्यम्, माश १४, ७,२,११ इत्यत्र तथात्वं दृश्यते। न तु तत्काण्डगतस्य स्वराङ्कनस्य काण्डान्तरवत् प्रामाण्यं भवतीत्यसकृत् तत्तत्प्रकरणेष्ववोचाम। यच्च २अणु- इति क्रिवि. उपलभ्यते ततोऽप्येतदेव ज्ञापितं भवितुमर्हतीति यथाऽन्तोदात्त एवात्र

१†अ॒ण्वी[a]- -ण्व्या ऋ ९, १५, १; २६, १; कौ २, ६१६; जै ३,५०,४.

२अ॒ण्वी[b]- -ण्वीः ऋ ९,१, ७; -†ण्वीभिः ऋ १,३,४; मा २०,८७; का २२, ८, ८; कौ २, ४९६; जै ३,३८,१०; शौ २०, ८४, १; -ण्व्या ऋ ९, १४,६.

†अणिमन्[c]-

¶अणिम-त॒स(:)[d] मै ३, ९, ४[२];१०,४.

¶अ॒णिष्ठ,ष्ठा[e]- -?ष्ठम्[f] काठ २५,१; क ३८, ४; -ष्ठाः तै २, ५,५,२; काठ २५,१; क ३८,४.

¶अ॒णीयस्[g]- -यांसः काठ ६, ७; क ४,६; -यान् काठ २०, १०; क ३१,१२.

अणीयस्क॒[h]- -स्कम् शौ १०,८,२५.

२अ॒णु[i]- -णु काठ १२,१३[१]¶.

३अ॒णु[j]- -णूनि शौ ११,९,१०; पै १६,८२,१०,

४अ॒णु[k]- -णवः मा १८,१२; का १९,४,४; तै ४,७,४, २; मै २, ११,४; काठ १८,९; क २८,९.

५अ॒णु[l]- -णू[m] खि५,२२,२; -णौ[m] शौ २०,१३६,२.

†अ॒ण्व[n]- -ण्वम् ऋ ९,१०,५;९१, ३; कौ २,४७३; जै ३, ३५, ८; -ण्वानि ऋ ९,८६,४७; १०७, ११; कौ २, १०४०; -ण्वेषु ऋ ९,१६,२[o].

आ॒णि[p]- -णिः ऋ ५,४३,८; -णिम् ऋ १, ३५, ६; -णी मै ४,८, ४[१]¶; -णीः खि ४,८,५; -णौ[q] ऋ १,६३,३.

√अण्ड् > १आण्ड- मा॰[?]°.

अ॒ण्व·, १,२ अ॒ण्वी- √अण् द्र.

√अत् (बधा.) वि°, सम्°.

अ॒तत्[r]- -तन् ऋ ६,६१,९.

अ॒तमान[r]- -नम् ऋ २, ३८, ३; -नाः ऋ ६,९,२.

अति- वि°.

अ॒तिथि[s]- -थयः शौ ९, ७, ६; पै १६, ११६,१; -¶थये तै ५,२, २, ४; मै १, ५,७; काठ ७, ५; १९,१२; क ५,४;३१,२; -थिः ऋ १,७३,१; १२८,४; २,२,८; ३,२,२; ४,१,२०;४०,५; ५,१, ८;९;३,५;४,५; १८ १;६,२,७; ४,२; ७,८,४; ९,३; ४२,४; ८, [१९,८ (८४,१)]; १०३, १२[t]; १०,९१,२; †मा १०,२४; १२, १४;३४; ३३,२६; †का ११,७, ४; १३, १, १५; ३,५; ३२,१, १६; †तै १,६,१२,२$; ८,१५, २;२,५,१२,४; ४,२,१,५;३,२;

प्रमाणं नानुदात्त इति (तु. ३अणु- अपि)। कथमित्युच्यते। यदा हि किञ्चित् विप. क्रिवि. भावयितुमिष्यते तदा तस्य स्वस्वरूपस्यैव नपुंसकवचने रूपं प्रयुज्यते। अतो न त्रिप. इत्यत्र क्रिवि. इत्यत्र च सौवरः कोऽपि विवेकः कर्तुमिष्टः स्यादिति भूयो विविञ्चन्तु विविचः।

[a]) विप. (धी-)। स्त्रियां ङीन् प्र. नित्स्वरश्च (तु. पा ४,१,७३; ६,१,१९७)।

[b]) अङ्गुल्यात्मकविशेष्यविशेषवाचकं द्र.। शेष नापू. टि. द्र.।

[c]) ग्रन्थान्तर आद्यन्तोभयस्वरोपलब्धिवशात् इमनिन्-इमनिचौ प्र. यथायोगं द्र. (तु. वैप२)।

[d]) तसिः प्र. तत्स्वरश्च (तु. पावा ५,४,४४)।

[e]) विप. (ग्रीवा-, तण्डुल-)। आतिशायनिकः इष्ठन् प्र. नित्स्वरश्च (पा ५,३,५५; ६,१,१९७)।

[f]) पाठः? °ष्ठाः इति शोधः।

[g]) विप. (अङ्गार-, [पुरस्ताद् ह्रसीयस्-] पशु-)। ईयसुन् प्र. (पा ५,३,५७)। स्वरः एपू. टि. द्र.।

[h]) प्रकृत्यर्थवैशिष्ट्ये कः प्र. (तु. पा ५,४,२८)।

[i]) वा. क्रिवि. द्र.। [j]) नाप. (सूक्ष्म-रूप-)।

[k]) =धान्य-विशेष-। उन् प्र. नित्स्वरश्च (पाउ १, ९; पा ६,१,१९७)।

[l]) नाप. (स्त्री-योनि-)। °णू इति सप्त १ द्र.। शेषं नाउ.टि.द्र.

[m]) रूपा. °णू <> °णौ ( शांश्रौ १२,२४,१ ) इति परस्परं पाभे.। २अणु वैप४ द्र.।

[n]) =पवित्रस्य सूक्ष्म-च्छिद्र-। औणादिकः वन् प्र. (पाउ १,१५२) नित्स्वरश्च।

[o]) वैतु. वें. सा. अङ्गुलि- इति ?

[p]) नाप. ( [चक्रस्याऽक्षान्निर्गमननिरोधार्थ-] कील- )। इण् प्र. (पावा ३,३,१०८)। तत्स्वरः।

[q]) = (उपचारतः) शकट- इति GW. प्रभृ.; संग्राम- इति स्क. वें. सा. (तु. निघ २,१७)।

[r]) यक. शतृ-शानचोः शपश्च निघाते (पा ६,१,१८६) धास्व. पूर्वावस्थः।

[s]) नाप. (अभ्यागत-)। कर्तरि इथिन् प्र. (पाउ४,२) नित्स्वरश्च। पक्षान्तरे या ४,५ प्रभृ. <अ (<अभी [भि √इ]) + तिथि- इति (वैतु. लोकमात्रपरो वादः नञ्-पूर्वो बस. इति। नासौ वेदे चारितार्थयितुमलम्। स्वरानुपपत्तेः)।

[t]) सपा. कौ १,११० जै १,१२,४ अ॒तिथिम् इति पाभे.।

†मै २,६,१२;७,१०; ४,११,१; १२, २$; १४, १५; †काठ २, १५; ८, १६$; १५, ८; १६,८; १०;३४,१४¶; †क २५,१; कौ १, ८५†; ३७२; जं १, ९, ५†; ३९,३; शौ ७,२२,१; ७७, ९†; ९, ७, ४; ८, ७;१०,६,४; १५, १०, १; ११,१; १२,२; १३,१; ३; ५;७; ९;११; पै १६,४२, ४; ११२,१०; ११३,१०; १९,४१, ७;२०,५,२;-†थिम् ऋ १,४४, ४;५८,६;[१२७,८;८,२३,२५]; [१८६, ३;८, (१९,८) ८४, १]; २,४,१;३,३,८;२६,२; ४,२,७; ५, ८,२;६,७,१; १५,१; ४; ६; १६,४२; ७,३,५;८,४४,१;७४, १;१०३, १०;१०, १,५;९२,१; १२२,१; १२४, ३; मा ३,१;७, २४; १२,३०;३३,८; का ३,१, १; ७,१०,१; १३,३,१; ३२,१, ८; तै १,४,१३,१;३,५,११.५; ४, २,३,१; मै १,३,१५; २,७, १०; ३,७,९¶; ४,१०, ३; काठ ४,५;७,१२; १५,१२; १६,१०; ३९,१४; क ३,५; ६,२; कौ १, ५; ६७;८७; ११०‡[a]; २,४९०; ५९४; ९१४; जै १,१,५; ७,५; ९,७; १२,४‡[a]; ३,३८,४; ४८, १०; ४, १५,७; -थीन् ऋ ५, ५०, ३; शौ ९,६, ३; १०, ८; ११,५; पै १६, १११,३; ११५, ४; ११६,९; -थीनाम् तै ५,२, २,३¶. मै ४,८,१¶: काठ १९, १२; क ३१,२¶; शौ ९,७,१३; पै १६, ११३, ६; -०थे ऋ ८, ७४, ७; -थे: मा ५, १; का ५, १,१; तै १,२,१०,१; ६, २,१, २; मै १,२,६; ३,७,९; काठ २, ८; २४, ८; ३०, १¶; क २,२; ३८, १; ४६, ४¶; शौ ९, ८, १-६; पै १६, ११३,७-९;-थौ शौ ९,८,८. [°थि- ?प्रिय°, मित्र°].

आतिथ्य[b]- -थ्यम् ऋ १, ७६,३; ४,४,१०; ५,२८,२; मा ५,१; का ५,१, १; ¶तै १, २, १०,१[3]$; १४,४†; २,२,५, ५; ५, २,२,४; ६, २,१,१[3]; २[4];४; ७[2];७,५,१५,१; ¶मै १,२,६$; ९,८;३,७,९[c];$; ८,२;९,१;४, ११, ५†; ¶काठ २, ८$; ६, ११†;२१,८[२c]; १०;२४,८[4];$; क २,२; ३८,१[4];¶[1]; पै ९,१२, ३; -¶थ्यस्य तै ६,२,१,३; ४; मै ३, ७, ९; -थ्यात् मै ३, ९, १¶; -थ्ये ऋ ४, ३३,७; काठ ३४,१४¶.

आतिथ्य-रूप[d]- -पम् मा १९,१४; का २१,२,३.

†अतिथि-ग्व[e]- -ग्वम् ऋ१,५३, १०;११२,१४;४,२६,३;६,१८, १३; ८,५३,२; १०,४८,८; खि ३, ५, २; शौ २०, २१, १०; -ग्वस्य ऋ १, ५३,८; २, १४, ७; ६,४७,२२; शौ २०, २१,८; -ग्वाय ऋ १, ५१, [६; १३०, ७]; ६, २६,[३; ७,१९,८]; शौ २०,३७,८.

आतिथिग्व[f]- -ग्वे ऋ ८, ६८,१६;१७.

अतिथि-पति[g]- -तिः मै ४,८, १¶; काठ ३०,१¶; क४६,४¶; शौ ९,६,३;७,१; ११,५; पै १६ १११,३;११२,५;११६,९.

†अतिथि(न्>)नी[h]- -नीः ऋ १०,६८,३; शौ २०,१६,३.

†अत्क[i]- -त्कः ऋ ८, ४१, ७; -त्कम् ऋ १,९५,७;१२२,२;४, १६, १३; १८,५; ५,७४,५; ६, २९,[३;१०,१२३,७];९,६९,४; १०,४९,३; ९५, ८; ९९,९; कौ २,७२२;११९३; ११९७; जै ३, ५९,१४; पै ८,१४,७; १५,१२, ५; -त्कान् ऋ ५,५५,६; -त्के ऋ ९,१०१,१४; १०७,१३; कौ २,११८;७३७; जै ३,१२,५;४, २६,२;-त्कैः ऋ २,३५,१४;६,

---

a) पामे. अतिथिः ऋ ८,१०३,१२ द्र.।

b) तादर्थ्ये ण्यः प्र. उसं. (पा ५,४,२६)। तत्स्वरः।

c) सकृत् सपा. तै ५,४,६,१ भागधेयम् इति पामे.।

d) षस. सामान्यः समासस्वरः (पा ६,१,२२३)।

e) व्यप. (दिवोदास-)। उस. उप. <√गम् वा √गा वा (वैतु. एत-ग्व-, नव-ग्व- प्रभृ. बस. इति विवेकः द्र.)।

f) तस्याऽपत्यमित्यर्थे अण् प्र. (पा ४,१,९२) तत्स्वरश्च।

g) तस. पूप. प्रकृतिस्वरम् (पा ६,२,१८)।

h) अतिथि- इत्यनेन समानार्थं प्राति. प्र. भेद इति सा. (तु. MW.)। अतिथि- इत्यतो मत्वर्थे प्र. इत्यपरो वादः (तु. GRN. NW.)। पूर्वे कल्प औणादिकः इथिनिच् प्र. चित्स्वरश्च। उत्तरे तु मत्वर्थीयः इनिः प्र. ताद्धितस् तत्स्वरश्चेति विवेकः। स्त्रियां ङीप् प्र. तस्य च पित्त्वान् निघाते स्वरस्तदवस्थ इति दिक्।

i) =रूप-, वज्र-,आयुध- [ऋ६,३३,३], व्यप. [ऋ १०, ४९,३ प्रभृ.]। इण्भी- (पाउ ३, ४३) इति कन् प्र., नित्स्वरश्च (पा ६,१,१९७)।

३३,३.

अत्य[a]- -त्यः ऋ १,५६,१;५८,२; ६५,३; १४९,३; १९०,४;२,४, ४; ३,२,७; ३८,१; ५,३०,१४; ६, २,८;४,५; ७,२४,५;८,५०, [(४९, ५) ५]; ९, ३२,३; ४३, १;५;६६,२३; [७६,१; ७७,५]; ८०,३; ८१,२; ८२,२; ८५, ५; ८६[३(७०,१०)]; २६;४४;९३, १; ९६,१५; २०;९७,१८; ४५; १०, ६, २; ७६, २; ९६, १०; १४४,१; खि ३, २,५; मा २२, १९; ३३, ७५†; का २४, ६,१; ३२, ६, ६; तै ७, १, १२,१; मै ३,१२,४; ४,१४,१५†; काठ ४१, ३; †कौ १, ५३८, ५५८; २, १२०; ५७८; ६६८; ९६५; ११२४; †जै १, ५५, ६; ५७, ५; ३,४७, ४; ५५, ९; ४,२०, १०; २७.५; शौ २०,३१, ५†; -†त्यम् ऋ १,५२, १;६४, ६; ,१२९, [२; १३५ ५]; १३०,६; ३,१,३; २२,१; ५.२५ ६; ४४, ३; ७,३,५; ९,६,५; ८५,७; मा १२,४७; का १३,४,३; तै ३,१, ११,७; ४,२,४,२; मै २ ७,११; ४,११,१; काठ २,१५;१६,११; क २५,२; कौ १, ३७७; जै १, ३९,८; -त्यस्य ऋ १,१८०,२; -त्या ऋ ४,२, ३; -†त्याः ऋ १, १६३, १०; १७७,२; १८१, २; ३,५६,२; ५,३१,९; ५९,३; ६,४४, १९; ९,१३,६; ८७, ५; मा २९,२१; का ३१,२, १०; तै ४,६,७,४; काठ ४६, ३; कौ २, ५४१; जै ३, ४२,८; -†त्यान् ऋ १,१२६ ४;२,३४,३;३,३२, ६; ३४, ९; शौ २०, ११, ९; -त्याय ऋ ३,७, ९; -†त्यासः ऋ ७,५६, १६; ९,४६,१; ९७, २०; तै ४,३, १३,७; मै ४,१०, ५; काठ २१,१३; -त्येन ऋ २, ३४,१३; - त्यैः ऋ ६,३२,५.

अाति, ती[b]- -तयः ऋ १०,९५,९; -तिः[c] मा २४, ३४; का २६, ७, ४; मै ३, १४, १५ ; -ती[c] तै ५,५,१३ १; काठ ४७,३.

?अत एतः[d] पै १६,५२,२.

?अतःकर्तुः[e] पै ४,११,५.

?अ-तण्डाल[f]- -लम् पै १५,१८,१.

अतत्- √अत् द्र.

?†अ-तथा[g]- -थाः ऋ १,८२,१;कौ १,४१६; जै १,४०,८.

†अ-तन्द्र,न्द्रा[h]- -न्द्रः ऋ१,७२,७;७, १०,५; ८,६०, १५; कौ १,४६; जै १,५,२; $शौ ११, ६, २४; १३, २, २८; ४२; पै १६, २३, ४$;१८,२३,५; -$न्द्रम् पै ९, १२,९;१०,२,९; -न्द्राः ऋ ८, २,१८; कौ २,७१; जै ३,७, ९; शौ २०,१८,३; -न्द्रासः ऋ १, ९५,२; ४,४,१२; तै १,२,१४, ५; मै ४,११, ५; काठ ६, ११; पै ८,१४,२.

¶अ-तपस्विन्- -स्वी काठ ३४,९.

अ-तत[i]- -सः शौ[j] ९,५. ६; पै १६,

---

[a]) विप. ([गमनशील-, वेगवत्-] सप्ति- प्रमृ.), नाप. (अश्व-[तु. निघ १,१४ या ४,१३ प्रमृ.])। कृत्यसरूपः कर्तर्य् औणादिको यत् प्र. । अथवा अत्- इत्यस्मात् क्विबन्तात् ताद्धितः यत् प्र.. । उभयथाऽपि यतोऽनावीयः स्वरः ।

[b]) =पक्षि-विशेष- । कर्तरि इण् प्र. (पावा ३,३, १०८; यद्वा पाउ ४, १३१) तत्स्वरश्च । कृदिकारात् (पाग ४,१, ४५) इति ङीष् ।

[c]) सपा. °तिः <> °तीः इति पामे. ।

[d]) यत एयथ इति शोधः (तु. सपा. शौ १०, १,२८ पै १६,३७,९) ।

[e]) ?येनेमे द्यावापृथिव्यतः कर्तुः इति सतः पाठस्य स्थाने °थिवी यतः क्रतुः इति शोधः द्र. ।

[f]) कदाचिद् उप. √तण्ड् + आलच् प्र. ( पाउ १, ११६; मोउ २,३,१०० उउ. ) स्यात् । अथवाऽसमस्तं प्राति. स्य द् √अत् इत्यस्मात् । तद् विमृश्यम् ।

[g]) तुथा > तथा नाधा. भवति क्विबन्तः । ततः कृद्-वृत्ते पुनः क्विपि तथा- इति प्राति. भवति । तस्य तस. नञ्-पूर्वत्वे नञ्स्वरः (पा ६, २, २) इतीवाऽनुसंदधानः सा. व्याचष्टे । अर्वाचामपीदक्ष एवाऽभिप्रायो भवति ; वैतु. वें. स्क. विव. तथाः (< √तन् + लुङि मपु१) इति व्याचक्षते । अस्मिन् कल्पे माङ्-योगेऽडागमाऽभावश्च तिङ्ङतिङः ( पा ८, १, २८ ) इति निघातश्च विमृश्यौ द्र. ।

[h]) विप.(अग्नि-,देव-, युवति- प्रमृ.)। तस. नञ्स्वरः। उप. < √तन्द् । -न्द्रम् इति द्वि१ सत् वा. क्रिवि. द्र. ।

[i]) समासस्वरौ नापू. टि. द्र. । [j]) अत्राम्नायवचनादेव तप्यमानस्याऽपि तापाऽभावात्मिकाऽऽर्शे रभिप्रेता स्यात् । परि कप्र. पार्थक्यवचनः अतः इति पञ्चम्यन्तेनाऽभिसंबद्धः । W. त्वन्यथामनाः सन् पाठविकृतिं शङ्कमानः परि चेद् अतप्थाः इत्येवं परि√तप् + लुङि रूपं वष्टि । तत्र अततः इति दीर्घाऽऽकारवत्पाठं प्रदर्शयत् क्रियच्चित् मूको. साक्ष्यमपि प्रोद्बलकं भवेत् (तु. पाण्ड. टि.) । 'तताच्

९७,५.

†अतप्त-तनू[a]- -नूः ऋ ९,८३, १; कौ १, ५६५; २, २२५; जै १, ५७,१२;३,२०,९.

अ-तप्यमा(न>)ना[b]- -ने ऋ १, १८५ ४.

?अ-तमत्[c]- -मत् पै १०,६,१०.

अतमान- √अत् द्र.

अ-तमेरु[b,d]- -रुः मा १,२३[2]; का१, ८,४[2].

?अतर्हि[e] पै ११,५, ११.

अ-तवीयस्[b,f]- -यान् तै २,२,१२, ५‡[g].

†अ-तव्यस्[b,f]- -व्यान्[g] ऋ ५,३३, १; ७, १००, ५; मै ४,१०,१; काठ ६, १०; कौ २, ९७६; जै ४,२३,६.

अ-तस्(:) एतद्- द्र.

?१अतस[h]- -से ऋ १,१६९,३?[i].

२†अतस[j]- -सम् ऋ ४, ४,४; ८, ६०,७; मा १३,१२; का १४,१, १२; तै १,२, १४,२; मै २, ७, १५; काठ १६,१५; क २५, ६; -सस्य ऋ ३, ७, ३; -सा ऋ १०, ८९, ५; तै २, २, १२,३; -सानि ऋ २,४,७; -सेषु ऋ १,५८,२;४; ४,७,१०.

अतसी[k]- -सीनाम् ऋ ८, ३, ३१; शौ २०,५०,१.

?√अतसाय् > अतसा॒य्य,य्या[l]- -य्यः ऋ २, १९,४; -य्या ऋ १,६३,६.

अ-तस्कर[m]- -रम् शौ १२, १, ४७; पै १७,५,५.

अति ऋ १, ८१, ⌊५[n]; १०२, ८[n]⌋; १३५, ६[2]; १४१, १३[o]; १४३, ३; १८३, ४[p]; २, २, १०[q]; ⌊११, २१; १५, १०; १६-२०, ९⌋[p]; २३,

चरोरप्यतप्तः स्नुत्कामत् अजः' इत्यत्र चमत्काराऽऽधिक्यस्य तु संभाव्यमानत्वाद् यनि. एव साधीयसी मौलिकी श्रुतिः स्यादिति मतं भवति ।

a) =⌊अपरिपक्व-⌋सोम-। बस पूप. प्रकृतिस्वरम् (पा ६,२,१)।

b) तस. नञ्-स्वरः (पा ६,२,२) ।

c) पाठः? उप <√तम् ।

d) विप. (यज्ञ-, प्रजा-) । उप. <√तम् + एरुः प्र. उसं. (पा ३,३,१) ।

e) उतर्षीन् इति BKA. शोधः (तु. सपा. शौ ८,९.२४ उत ऋषीन् इति पाभे.) । f) उप. <√तु ।

g) सपा. °वीयान् <> °व्यान् इति पाभे. ।

h) नाप. (गुल्मादि-) ।

i) पाठः? अतसैः इति शोधः (तु. सस्थ. टि. शुशुक्वान्) ।

j) भाप. (अभ्यर्थना-, स्तुति-, प्राप्ति-) । √अत् ⌊प्रापणे, याचने⌋ + असच् प्र. चित्स्वरश्च (पाउ ३, ११७ पा ६, १, १६३) ।

k) गौरादित्वात् स्त्रियां ङीष् प्र. (पा ४,१, ४१) तत्-स्वरश्च। अतसि- इति स्वतन्त्रम् असिच्-प्रत्ययान्तम् पुं. प्राति. इत्येवमपि मतं भवति (तु. PW. प्रभृ ; वैतु. ORN.)।

l) विप. (⌊समाश्रयणीय,या-, अभ्यर्थनीय,या-⌋ इन्द्र-,ऊति-)। नाधा. क्यङ्न्तात् भावकर्मणोः कृत्यसजातीयो यत् प्र.। अकारलोपे(पा६,४,४८) प्र. पूर्व स्वरः(पा६,१,१९३)। यद्वा सर्वप्रातिपदिकेभ्यः (पावा ३,१,११) इत्याचारार्थे क्विपि √अतस इति नाधा. भवेत्। ततः पूर्ववद् भावकर्मणोः कृत्यसजातीयः (पा ६,४,५५) इत्यत्र लब्धसंकेत आय्यः प्र. इति। इह तावद् अतो लोपे प्र. स्वरः। यत्तु PW. GW. √अतसाय् इत्येवं लुप्तान्त्याकारतया निर्देशमन्वमन्येतां तद् आर्धधातुकविषयत्वप्रवेशात् प्राक्तरायां प्राकृत-दशायामपलक्षणमिव स्यात्। केचिद् अतसी- इत्यस्य तद्धितवृत्त्याऽपि व्याचिख्यासवो भवेयुः (तु. ORN. MW. NW.)। एवमपि ताद्धिते आय्ये प्र. प्राति. पुंवद्भावे निष्पादनप्रकारः स्वरसंकेतश्च। अथापि सा. √अत् + अः (उपजनः) + साय्यः प्र. इत्येवमनुसंधान आगमानुदात्तत्वं चादाय आदिस्वरतया सौवरीं स्थितिं समादधानः प्रौढायेत (तु. स्क. वें; वैतु. स्क. ⌊पक्षे⌋ <नञ्+ √तस् इति?)

m) विप. (पथिन्-)। बस. अन्तोदात्तः (पा६,२,१७२)।

n) विश्वम् इति द्वि. युक्तः कप्र. ( वैतु. वें. सा. अति···ववक्षिथ इति, स्क. क्रिउ. इति च) ।

o) 'यथा सूरो मिहम् अति यथा स्यात्तथा निस्तनुयात् तथा वयमपि विद्वान् अति यथा स्यात्तथा निस्तनुयाम'. इति मन्त्रस्वारस्ये कप्र. । यद्वा 'यथा सूरः अति (तराम्) मिहं निस्तनुयात्तथा वयमपि विद्वान् अति (तरां) निस्तनुयाम' इत्यर्थे अव्य. क्रिवि. (वैतु. GW. MW. प्रभृ. अतिनिष्टतन्युः इति द्व्युपसृष्टावपलक्षण-स्वरायामाग्रहोऽप्रशस्तः द्र.) ।

p) नः इति द्वि. युक्तः कप्र. (तु. सस्थ. टि. भगः; वैतु. PW. प्रभृ. गतिरिति) ।

q) अन्यान् इति द्वि. युक्तः कप्र. (तु. PW. प्रभृ.; वैतु. सा. GW. अति···चितयेम इति) ।

८; ९; १६, १८[a]; २०, २[b]; २२, ७[c]; २९, | ३[d]; ४०, ४[e]; ५२, ६; ५, २९, २[g]; ३२, १०[i]; | ३३, २[h]; ४४, १[h,j]; ३; ५२, ६[j]; ५१, ६[k];

[a]) लक्षणे कप्र. (तु. सा. [यत्त्वसौ भावं निष्पन्नं प्रमति- इत्येतत् स्त्री. प्राति. लक्षणया तद्वद्वृत्तित्वो- पचारेण पुंसा सामानाधिकरण्यं भजत् सद् बस. भवतीति कृत्वा स्वत एव पुं. भावयति, तद् यथा दाशतय्या वाचो- युक्त्या विरुध्येत तथा यद्र.]; वैतु. वें. GW. च लक्षणार्थम- लक्षयन्तौ अनु···आजगन्म इति द्विगुपसृष्टाऽऽख्याता- ऽऽख्यायिनौ)।

[b]) यज्ञम् इति द्वि. युक्तः कप्र.।

[c]) सीम् (=पूर्वार्धश्राव्यमाणाः स्वसृः) अनुलक्ष्यति संबन्धः (तु. वें. सा. च)। यश्चेहाऽपरः अनुः श्रूयते तदर्थं अनु√बन्ध्>अनु···बद्बधान- इति द्र. (वैतु. सा. यः बद्बधानाः इति पदं सीम् इत्येतत्-समानं प्रकृतेन कप्र. अनुनाऽन्वितमिच्छति)। एवं यश्चेह प्रः श्रूयतेऽसौ गतितया √स्यन्द् >स्यन्दयुध्यै इत्यत्रान्वितः द्र. (वैतु. सा. यो द्वितीयमुक्तपूर्वम् अनु स्यन्दयुध्यै इत्यनेन प्रं च मुचः इत्यनेन गतितया योजयितुमिच्छन् प्रमुचः इत्येकस्मिन् पदे द्वैस्वरी कथं, तिङि चोदात्तवति गति- निघाताभावश्च कथमिति चोद्यं नैव पश्यति। नापू. मन्त्रे च समानप्रकरणके प्र√सृ इत्यस्य प्र√क्रम् इत्यस्य च ये श्रुती भवतस्ते च नितरामित्रोपेक्षते)। यत्तु PW. GW. प्रभृ. अनुप्रमुचः इति द्विगतिकं त्रिस्वरमश्रुतपूर्वं क्विप. श्रावयेयुस्तदतीव निस्सारं द्र.। निपातद्वयप्राकरणिकसंबन्धाऽविभावनदुर्विपाकमात्रत्वात् स्वरसंचारसौक्ष्म्यं प्रत्यू अक्षम्यसाहसमात्रत्वाच्चेति दिक्।

[d]) दिशम् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. वें. अनु···श्राव्य इत्याह तच्चिन्त्यम्)।

[e]) कप्र.। ईम् इत्यनेन सना. वा युदित्येनच्छिरस्केन पूर्वार्धमितेन वाक्येन वाऽन्वयः। प्रथमे कल्पे ईम् इत्यनेन नापू. मन्त्रे श्रावितचरोऽर्चनप्रकारः परामृश्य- मानः द्र.। उत्तरे तु ईम्···इन्द्रम् इति समानाधि- करणः संबन्धः। प्रथमे कल्पे लक्षणार्थं उत्तरे तु पश्चादर्थे अनुः इत्यपरो विवेकोऽपि द्र. (तु. [उत्तरे कल्पे] वें.; वैतु. सा. PW. प्रभृ. अनु···आर्चन् इत्येवं योजुकाः)।

[f]) पादादौ यद् इत्याक्षिप्य पश्चादर्थे वा लक्षणे वा तदभिसंबद्धः कप्र. (वैतु. सा. सर्वथोत्तन्त्रमिव क्षितयः इत्यस्य विप. इतीव भाषमाणः, PW. प्रभृ. च अनु··· नमन्त इत्यनपेक्षिताऽनन्वर्थोपसृष्टिमाख्यातिकं योगं ब्रुवाणाः)।

[g]) याः (धियः) अनु इत्था जोष वक्षः इत्येवमन्वयः (वैतु. वें. जोषम इत्यन्वितः प्रत्यर्थे कप्र. मन्वान- श्चिन्त्यः। सा. अनु···वक्षः इति योगोऽस्पष्टान्वितार्थः)।

[h]) लक्षणे कप्र.। सामान्येन द्वितीयायां प्राप्तायामिह यासु इति सप्तमी द्र. (वैतु. वें. GW. अनु···वर्धसे इति योगं मन्वाते तौ चात्र प्रत्याख्येयौ द्र.)।

[i]) पाभे. काठ ४,३ अधि द्र.।

[j]) एनान्···विद्युतो मरुतो···अनु···अह अनुगच्छ- न्त्येव इति सा. √गम् इतीममध्याहरन् अनो- र्गतित्वं प्रतिपिपादयिषति। न चासौ यत्नस्तदीयः शोभनः। लक्षणार्थे कप्र. सुवचत्वे नैनैव च विद्युन्मरुत्- सान्निध्यात्मकस्य श्रुत्यर्थस्वारस्यस्य सुवेदेऽध्याहारस्य तदुपाश्रयस्य गतित्वकल्पनस्य वा सुतरामजागलस्त- नायमानत्वं न व्यभिचरेत्। यच्च वें. सा. एनान्··· मरुतः इत्यन्वादेशस्य चाऽन्वादिष्टस्य चोभयोः सपदि योगमेकस्मिन्नेव वाक्येऽन्वयं च बभाषाते तदपि तयोर- सदृशमिवापतेत्। अन्वादेशस्याऽन्वादिष्टस्थानित्वेनैव सावकाशत्वादित्यस्य निगदसिद्धत्वात्। न चेहैवोपरि- ष्टाद् दिवः इति षष्ठी न च तत्संगत्यर्थं 'मरुद्गणस्य' इत्यश्रौतोऽध्याहारोऽपेक्ष्यत इत्यादिविस्तरस्त्वस्मदीये वैश. द्र.। उक्तादेव न्यायाद् अन्वादिष्टाऽन्वादेशविषयकाद् उत्तरार्धमात्रव्यापकैकवाक्यकल्पनामुपाश्रित्य प्रवर्तमानयोः GW. MW. अनु···अर्त इति योगोऽपि सुत्यजः स्यादिति न बहु वक्तव्यमिवास्ति।

[k]) अनु···यन्ति इति योगं भाषमाणः PW. उपेक्ष्यः (वैतु. GW.)। तथा सति रोदसी इत्यस्या- ऽन्वयस्य स्वारसिकस्य दुर्लभत्वप्रसङ्गात्। यनि. तु पर्जन्यविसर्जनानन्तरं मरुतामुभयलोकसंसर्जुकेनैव सतेन्द्र- धनुषा द्यावापृथिव्योर्मध्ये गतिः सुवचेति तदुपपत्तिः। यदपि सा. पर्जन्यविमोचनस्य द्यावापृथिवीविषयत्व- मनुमन्येत तदपि चिन्त्यम्। दिवः पूर्वार्धे पर्जन्यकोशस्या- वनाऽपादनत्वेन श्रावितत्वे सति तस्याः सपदि पर्जन्य-

विमुक्तजलाधारत्वस्य दुर्घटत्वाच्चायुक्तत्वाच्चेति दिक्। अपि च अनु···वि···सृजन्ति इत्यवं योगमातिष्ठमानः MW. चिन्त्यः। ···यन्ति इत्यनेन च वि···सृजन्ति इत्यनेन चैकर्थ्यव अनोर्युगपद्योगसुशन् PW. विमृश्यः।

ª) पूर्वार्धगते शुर्धम् इति गणम् इति च पदे अनु-लक्ष्यत्वेनानेन क्रप्र. सताऽन्विते भवतः (तु. वें.)। सकलमन्त्र-मयेऽत्रैकस्मिन् वाक्ये सति यत् सा. पूर्वार्धोत्तरार्धभेदेन वाक्यभेदं चकार। तन्मन्दम्। तदीययोजनाद्वयेऽपि अनु-प्रयन्ति इत्येकपदे द्वैस्वर्यप्रसङ्गादिति दिग् (अस्मदीय-योजनायां तु. ऋ ५, ५२, ५)। PW. प्रभृ. गतित्वं मन्वानास्तथैवोपेक्ष्याः।

ᵇ) इह श्रथयन्ते इत्यकर्मकमाख्यानम् (तु. टि. अनु √श्रथ्, श्रन्थ् > °शिश्रथः; वैतु. GW. य इहाप्युप-सृष्टमाख्यातमाह, वें. सा. च यौ उपसृष्टिं च समर्थयतः √श्रथ्=√श्लिष् इति धात्वन्तरसाम्यं च [तु. सा. ऋ ४,३२,२२ अपि])। एवं तावत् स्वं भानुमनु इत्येवं यनि. क्रप्र. एव द्र. (तु. स्क.)।

ᶜ) लक्षणे क्रप्र. (तु. वें. स्क. सा. GW.)। गतिरेव वा स्यात्। तदा गोमतीः···अनु···क्षेति इति सकर्मकतया-ऽन्वयो वक्तव्यः। प्रायेण तु √क्षि (निवासे) इत्यस्या-ऽकर्मकतयैव श्रुतयो भवन्ति। क्वाचित्कमेव सकर्मकमपि श्रवणं भवति (तु. ऋ ५,३७,४)।

ᵈ) वाम् इत्येतेनाऽन्वितः पश्चादर्थे क्रप्र. द्र. (तु. GW.; वैतु. वें. सा. PW. यदनु अनुष्टवे इति समस्तमाख्यातं भवति न्याय्येतरद्वैस्वर्यं च प्रसज्यते)। यथा च स्तुव->-वे इति स१ स्यान्न चाऽऽख्यातमिति।

ᵉ) लक्षणे क्रप्र. द्र.।

ᶠ) पाश्चात्यास्तु प्रथमे मन्त्रे अनु···विराजति इत्याख्यातं द्वितीये मन्त्रे च अनु···ययुः इत्याख्यातं पश्यन्ति। तदेतत्तदीयं दर्शनमदर्शनमिव भवति (तु. सा., वें. [२ये मन्त्रे])। उभयत्र लक्षणादिकर्मप्रवचनी-यार्थविशेषोपपत्तेः। तथाहि। उषःकर्तृकया प्रयाण-क्रियया सवितृकर्तृकाया विराजनक्रियाया लक्ष्यलक्षण-संबन्धो वा पौर्वापर्यसंबन्धो वा मन्त्रस्वारस्यानुरोधेन काममुपपद्येत। स एव च कर्मप्रवचनीयार्थ इत्यभि-प्रायः। गतित्वे प्रयाणविराजनक्रिययोरभिधेयार्थस्वरूप-सामान्ये सत्येव तयोः क्रिययोर्गतिद्वारा पौर्वापर्य-संबन्धो भवेन्नाम वाच्यः। न तु 'पत्युर्मरणमनु म्रियते पत्नी' इतीह प्रयुक्तमरणद्वयवत् प्रयाणविराजन-क्रिययोः काऽप्यभिधेयार्थस्वरूपसमता संभवति येन प्रयाणाऽपेक्षया विराजनस्याऽऽनन्तर्यद्योतकत्वेन अनोः गति-त्वमुपपद्यताम्। समानवाच्यार्थस्वरूपतायामानन्तर्य-साहचर्यसजातीयोऽनोरर्थो गतित्वद्योत्यो भवति विभिन्न-वाच्यार्थकक्रियाप्रयोगे चाऽसावेवार्थः कर्मप्रवचनीयत्वं प्रयो-जयतीत्याकारको विवेक इहाभिप्रेतो भवति। अथो-त्तरस्यामृच्ययमपरो विवेकविषयोऽवधेयः। तद्यथेह सवितृकर्तृकदेवान्तरकर्तृकयोः प्रयातियातिक्रिययोरभिधेय-स्वरूपं प्रति भेदाभावो भवति, तथा पूर्वोक्तदिशा तदीयाऽऽनन्तर्यार्थो गतिगोचरीक्रियेतेत्येवं प्रत्यवस्थीय-माने उच्यतेऽयमपि नैव गतिविषय इति। कर्मान्तर-सद्भावात्। को भावः। उच्यते। यत्र कर्तृविशेष-कर्तृकक्रियामपेक्ष्य कर्त्रन्तरकर्तृकायास्तज्जातीयाया अप-रायाः क्रियाया आनन्तर्यार्थो गतिद्योत्यो भवति तत्र पूर्वा क्रिया कृद्वृत्तिं वाऽऽपाद्यते कर्तरि वाऽन्तर्भा-व्यते। सा चैवं कृद्वृत्तिमापाद्यमाना वा क्रिया तदन्त-र्भावविशिष्टो वाऽसौ कर्ताऽनुप्रसृष्टाया उत्तरस्याः क्रियायाः कर्मतया निर्दिश्यते। तद्वति वाक्ये कर्मान्तरं च न संभवति। यथा 'रामो गच्छति' इति रामकर्तृकैका क्रिया 'लक्ष्मणो गच्छति' इति लक्ष्मणकर्तृकाऽपरा क्रिया। तयोः परस्परासंबन्धावच्छेदो द्विविधः संभ-वति। 'रामस्य गमनमनुगच्छति रामं' 'वाऽनुगच्छति लक्ष्मणः' इति। न तु रामस्य वनगमनमनु लक्ष्मणः कीर्त्तिं जगाम' इत्यत्र गतित्वं संभवति। उभयोः क्रिययोर्गत्यर्थसामान्येऽपि द्वितीयस्य कर्तुरीप्सिततमत्वे-नाऽपरस्य कर्मणः प्रदानात्तदपेक्षया प्रथमकर्तुर्वा कृद्-वृत्तिमापन्नायास्तत्कर्तृकायाः क्रियाया वा द्वितीयकर्तु-रीप्सिततमत्वाभावेऽनुग तविषयत्वाभावात्। अनुना कर्मप्रवचनीयेन तयोर्मध्ये वर्तमान आनन्तर्यसंबन्धस्तु द्योत्यत एव। तद्वदिहाऽपि (ऋ ५, ८१, ३) सवितृ-कर्तृकप्रयाणक्रियां कृद्वृत्तिमापन्नाम् अनु (अनुलक्ष्या-ऽनुसृत्य वा) अन्ये देवाः स्वीयमीप्सितमकर्मभूतं महिमानं ययुर्नत्वनुययुरिति विवेकः कर्तव्यः।

ᵍ) अनु प्रयाणम् > सपा. शौ ७,७७,६ अनुप्रयाणम् इति पामे.।

१७, १२[a]; २३, ८; २८, ४[b]; ३६, २[c]; ४६, १४[d]; ५४, | ६[e]; ६३, ६[f]; ७; ६४, ५; ६७, ६; ७५, ६[g]; | ७, ७, २[h]; १८, १२[i]; २५?[j]; ३१, ९[k]; ७०,

[a]) 'तासां नदीनां संबन्धिनः पन्थां पथो मार्गान् प्रवतः प्रवणान् अन्वकार्षीः' इति शेष इत्येवम् अनु इत्युपसर्गयोग्यक्रियाध्याहारं च तत्प्रकारकमन्वयं च तद्‌भाष्यं च सा. अनुमेने । अत्र प्रत्येकस्मिन् पदे क्षोदक्षमे सत्यपि न विस्तारणार्थ इति संकेतमात्रमुच्यते । प्रवतः इति शसि रूपस्य नीचीः इत्यस्य च अपसः इत्यस्य च समानाधिकरणभूतस्य तद्वद् अपाम् विशेषणत्वेन सहजेन चारितार्थ्यमुपागतस्य पन्थाम् इति अमि रूपेणैकवचनेन विगतिगतीयमानं वचनव्यत्ययमुपाश्रित्य सामानाधिकरण्येन योजयितु मनीषाऽनीशा तदीयेत्यवधेयम् । प्रवतः इत्यस्योक्तात् स्त्रियां शसि सामर्थ्यात् (तु. ऋ ७, ३२, २७ प्रमृ.) । अन उक्तो वचनव्यत्ययप्रस्तावो निरर्थकः । एवं च अनोः कर्मप्रवचनीयतया पन्थाम् इत्यनेनाऽन्वय ऋजूयत्युत्तरार्धमात्रव्यापकमेकमेव वाक्यं च भवेदिति ।

[b]) उरुगायम् अभयम् अनु ... विचरन्ति इत्याकारिका योजना GW. MW. प्रभृतीनां पाश्चात्यानामभिमता भवति । तत्र विमर्शो भवति । किमिह तासां गवामभयविशिष्टलोकविशेषं प्रति संक्रमणं शिश्रावयिषितं भवत्युताहो तासामिहैवाऽभयेन विचरणमिति । सूक्तगानि लिङ्गानि तावद् द्वितीयमेव विकल्पं द्रढयन्ति । ओपक्रमादोपसंहाराद् हि समग्रं सूक्तमेतद् गवामाप्यायने सुखविशेषाधाने पालने पोषणे च सुपठं भवति । अतः कप्र. उरुगायेनाभयेन इति तृतीयार्थे योगः । अभयस्य सिद्धवच्छ्रावितत्वान् नाऽयं साध्याभिप्रायोद्देशादिलक्षणपदार्थवचन इति विवेकश्च सुकरः । तदकुर्वन् सा. तु चिन्त्यः ।

[c]) अनुप्रयेजे इति योगं स्क. वें. सा. GW. चाहुः । तदनभिमतं भवति । यत्र ऐन्द्रस्यौजसो लक्ष्यत्वेन समर्पयितुमिष्टत्वात्तदर्थीयः अनुः कप्र. एव स्यात् । अन्यथा द्वैस्वर्यमप्यनुपपन्नं भवतीत्यपरं चोद्यं स्यात् । स्क. [पक्षे] पश्चादर्थे अव्य. इत्यपि नेष्टम् ।

[d]) अनुः सहार्थे कप्र. (पा १,४,८५) ।

[e]) लक्षणार्थः कप्र. । यत्र यत्र यथा यथा च गावः प्रायुस्तत्र तत्र तथा तथा च प्रेहीत्यर्थः (एवं नाम ताः संरक्षन् संस् ताभिः सह गत्वा तासां प्रत्यायनसमयेऽरिष्टाभिस्ताभिः प्रत्यागन्तुमर्हेरित्यभिसन्धेः [तु. नाउ. मन्त्रः]) । एस्थि. अपलक्षणामपि सतीं द्वैस्वरीमनुमन्वानाः अनुप्र ... इहि इति योगं च ब्रुवाणाः PW. प्रमृ. उपेक्ष्याः ।

[f]) अनु-प्र √पत् (गतौ) इतीवेह कल्पयन्तः सा. प्रमृ. नादियेरन् । लक्ष्यमात्रभूतयोरश्विनोः प्रपतनक्रियया कर्तृत्वसंबन्धाभावे सति कस्यचिदपि तदनुप्रपतनकर्तृत्वेन वक्तुमनुपलभ्यमानत्वात् लक्षणार्थः कप्र. पृथगन्वयः स्यादित्यभिसन्धेः ।

[g]) पूर्वार्धे यथाऽभिलषिते पुरोनयने श्राविते सत्युत्तरार्धे इह तत्प्रत्यनीकतया मनोऽनुसारि पश्चाद् यमनं श्रावितं द्र. । एवं सति अनोः कप्र. मनः इत्येतेन कर्मपदेन पश्चाद् इत्यस्य क्रिवि. च यच्छन्ति इत्येतेन संबन्धः; वैतु. या ९,१६ यदन्विव सा. पश्चात् इत्येतत् पदं रश्मयः इत्येतेन योजयन्नपि मनोऽनुकूलमित्युक्त्याऽनोरिवार्थं परिसमापयन्नपि तदीयं पुनः प्रसवमिवेच्छन् अनुयच्छन्ति इत्यपि भाषते, GW. च यः अनुयच्छन्ति इति योगं समर्थयन् पश्चात् इत्येतद् अनोः अर्थे कप्र. इतीवाऽभिसंदध्यात् ।

[h]) तृतीयार्थे कप्र. इति सा. साध्वाह (तु. वें.) । अनु ... आयाहि इत्येवं योगं पश्यन् GW. चिन्त्यः स्यात् ।

[i]) सादृश्यार्थे कप्र. (द्रुह्युम् अनु इति संबन्धः) । प्रथमे पादे श्रूयमाणे श्रुत- इति वृद्ध- इति च कवष- इत्यस्य विप. असती व्यप. भवत इति कृत्वा वें. सा. आनुपूर्व्ये अव्य. इत्यातिष्ठेते । PW. GW. प्रमृ. च द्रुह्यु-कवषयोः सामानाधिकरण्यमिव पश्यन्तः अनु नि वृणक् इत्येतद्व्यवहितं क्रिप. गतीकृत्याऽनुप्रवेशयन्ति । तदेतत् सर्वं सार्थविमर्शं द्र. ।

[j]) पाठः (तु. पपा. प्रमृ. ग. इति)? *अनु-[(<√२*अन् [= √अन्त्, अन्द् 'बन्धने']) विप. (*बन्धु- [पैजवन-सुदास्-])] > अनुम् इति शोधः । शेषं वृधम् ऋ १,१६७, ४ टि. द्र. ।

[k]) कृष्टिकर्तृकसंनमनस्य सोमकर्तृकोर्ध्वीभावस्य च समानं देवताराधनमुद्दिश्य कृतत्वेन श्रावण एव मन्त्रस्वरसः (तु. वें. सा. ; वैतु. GW. अनु भुवन् इति योगमुशन चिन्त्यः) ।

४ª; ७७, ३; ८७, ७ᵇ; ८, १, १४ᶜ; २, ३३ᵈ; ४, ८ᵉ; १०; | २०ᶠ; ६, ३८ᵍʰ; ९, २; १०, ६; ११, ८; ४३, | २१ⁱ; १७, ५ʰ; १९, ३५; २०, ७; २१, १८; ३२, १९ᶦ;

ª) अनु…चख्यथुः इति संबन्धं वें. सा. प्रभृ. उद्युः । उपसृष्टधातुवाच्यभूतस्याऽन्वेषणविशिष्टदर्शनार्थस्य प्रसङ्गाऽभावात् कप्र. सतः अनोः सदृशार्थस्य च प्रासङ्गिकत्वात् न तथेति दिक् (तु. ऋ ९, ९७, ५)। यथा च √ख्या इत्यस्योपसृष्टस्यानुपसृष्टस्य च सतोऽकर्मकमपि वृत्तं भवति (तु. मा ११,१७² इत्यत्रत्यं टि.)।

ᵇ) गतिरिति वें. सा. PW. प्रभृ. च। तथा च सति व्रतानि इत्येतत् सकर्मकत्वेनाऽभीष्टस्याऽन्तर्भावितण्यर्थस्य अनु-ऋधत्->-धन्तः इति शत्रन्तस्य कर्मतया योजयितुमिष्यते। यथा चेदमाख्यातं न सकर्मकं न चाऽन्तर्भावितण्यर्थं भवितुमर्हेत् तथा बाहूवृच्य एवास्याऽपराः श्रुतयो विस्पष्टं दर्शयन्ति (तु. ऋ ६, २, ४; ३, २;८,४६,२३ यत्र ऋधद्-वार- वीत-वार- शब्दयोश्च विवेकोऽप्युक्तमेवार्थं द्रढयति)। एस्थि. मध्यमयोः पादयोर्हेतुहेतुमद्भावः द्र.।

ᶜ) 'अमन्महि (हि, इ) त् (यथा वयं) शूर ! ते महता राधसा स्तोमम् अनु सकृत् सु मुदीमहि' इत्येवमन्वयः स्वरतः। अनुः अत्र तृतीयार्थे कप्र. भवति। स्तोतॄणां स्तोमसहकृतानामैन्द्रेण महता राधसा निमित्तभूतेन वा साधनभूतेन वा (सिध्यमानस्य) मोदातिशयस्याऽन्तर्विच्छिन्नपर्यायराहित्याऽऽत्मकसकृद्भावविशिष्टस्याऽनुभवस्य प्राध्यर्थमानत्वेन समर्पणे तात्पर्यवती भगवती श्रुतिः द्र. (वैतु. वें. सा. प्रभृ. यैः पूर्वार्धेन वाक्यमेकं परिसमाप्योत्तरार्धेन तदसंबद्धमिव वाक्यान्तरं कर्तुं कृतोत्साहैः सद्भिर्बलात्कारेणेव अनु… मुदीमहि इति योगमुरीकुर्वाणैः अनु√मुद् = अनु √भू इतीव बाभाष्यते)। उक्तपूर्वेऽस्मदीयेऽन्वये सु इति अव्य. क्रिवि. मुदीमहि इत्यनेन क्रिप. संगच्छेतेति दिक्।

ᵈ) 'मघं हविर्लक्षणं धनं तद्वतो यजमानान् अनुमन्यनुमोदको भवति' इति प्रथमे कल्पे सा. गतित्वमाह। अत्र तावत् शसन्तस्य मघोनः इत्यस्य अनु…मन्दी इत्येवं कृताऽन्वयो दुर्घटश्चिन्त्यः। न च स्यान्नाम मघोनः इति षष्ठी किमतो नश्छिद्यत इति वाच्यम्। अनुपसृष्टस्य मन्दी इति शब्दस्य बाहूवृचे प्रसिद्धत्वात् (तु. ९, ५८, १ प्रभृ.)। उत्तरस्यामृचि वाजदावा मघोनाम् इत्युपस्थिताच्छ्रौतालिङ्गादिहापि बहुत्वविशिष्टमघवद्विषयताऽनुमानाच्च। मध्यमे कल्पे तावदसौ मन्दी स्तुत्यः इति नितान्तमसमर्थमर्थमिच्छन् वाक्यपूर्त्तावशक्तः 'तान् अनुगृह्णातीति शेषः' इत्यनपेक्षिताऽध्याहारमुपाश्रयति। ततोऽपि सन्तोषमनाप्नुवन्निव चरमे कल्पे 'यस्य मघोनः धनवतः इन्द्रस्य मन्दी स्तोता (अनु) अनुकूलो भवति' इत्युत्तमसंबद्धमनोरनुकूलार्थे प्रयोगं वाञ्छति। तेनाप्यथ प्रस्तुतमन्त्रावधिकामर्थपरिसमाप्तिमपश्यंश्च एष एतानि इत्युत्तरत्रैकवाक्यतामाह।

ᵉ) तु. सा. यः ऋ ३,३२,११ इति श्रुत्यन्तरसंवादनेन तृतीयार्थतामस्य कप्र. सतः प्रतिपेदे (तु. वें.; वैतु. GW. अनु…वावसे इति योजुकः)।

ᶠ) लक्षणे कप्र.। यत्तु सा. पश्चादर्थतामस्य पश्यन् यूथानि इत्यनेन कर्मणाऽस्य संबन्धं मन्वानश्च निर्…अजे इति क्रिप. अकर्मकमाह, तन्न (तु. निर्√अज्)।

ᵍ) इह पा. वर्ति ? वर्ति इति शोधः द्र. (इन्द्रमनुलक्ष्य द्यावापृथिव्यौ वर्तनशीले भवत इन्दवश्च वर्तनशीला भवन्ति यथाऽश्वमनुलक्ष्य तदनुसारितया चक्रं वर्तनशीलं भवत्येवं मन्त्रान्वयस्य सुश्लिष्टत्वात्)। एस्थि. √वृत्>वर्ति इत्यस्य वा लुप्तप्रत्ययतकारं वें. GW. प्रपु१ (वर्ति इति) त्-र्ति>र्ति इति यदन्ये प्रतिपद्यन्ते (तु. वें. सा. GW.)। तदसंगतम्। निदर्शनवाक्ये तिङन्तोपेक्षया कृदन्तस्य सतश्चक्रस्य वि॰. नेदीय इवाऽऽकाङ्क्षितत्वादित्यभिसन्धिः। एवं च तावदत्र मन्त्रे अनुः द्विः श्रूयमाणतया सकृच्चाऽऽक्षिप्यमाणतया कप्र. द्र.।

ʰ) सकलगात्राऽनुलक्षणस्य प्राधान्येन समर्पणे श्रुतिस्वारस्यप्रतीतेस्तत्र च लक्षणे कप्र. एव द्र. (तु. टि. शौ २०,४,२; वैतु. वें. सा GW. अनु…विधावतु इति योजुकाः)।

ⁱ) स्वधाः आहुवः चानुलक्ष्य यत्रैव तास्तत्रैवेत्यर्थे कप्र.। यत्तु सा. द्वितीयम् अनुं पूरणमाह। तन्न। आहुवः इत्येतेन द्विश्तस्याऽन्वयस्य सुवचतरत्वात्।

४१, ३[a]; ७[b]; १०; ४८, १३; ५८, २[c]; ६३, ५[d]; ६९, १८[e]; ८८, ५[f]; १०३, २; ९, २, ४[g]; २२, ६[h]; २९, १[i]; ५४, १; ६३, ६; ७०, ३[j]; ४[k]; ९२, ३[l]; ९७, ५[m];

[a]) लक्षणे कप्र. । 'तुस्य वरुणस्य व्रतुम् अनु तिस्त्र उषो वेनीरवर्धयन्' इत्यन्वयः । यत्तु. वें. सा. च तिस्त्र उषः इति द्वि३ इनीवाभिसन्धाय कालात्यन्त-संयोगार्थतयैव व्याचक्षाते । तच्चिन्त्यम् । तिसृभ्यः (पा ६, १, १६६) इत्युक्तदिशा तिस्रः इत्येतद् रूपम् प्र३ स्यात् । एतत्-समानाधिकरणं सद् उषः इत्येतदपि च तथेत्यभिसन्धेर् ( उषसः>उषः इत्येवं सकारलोपश्च संजात इत्यपरो विशेष इह समवधेयः । न तु क्वापि उष्- इति भिन्नं प्राति. स्यादिति । तथा सति जसि अन्तोदात्तानुपपत्तेरिति दिक् ) । उक्ते चान्वये वेनीः इति द्वि३ रूपम् (वैतु. सा. प्र३ रूपम् इति प्रतिपन्नः (यथा चैतद् रूपम् √वी>वय [न>] नी- >वेनी- इत्यस्य प्राति. भवति न च पराभिमतस्य √वेन् इत्येतन्निष्पन्नस्याऽन्तोदात्तस्य सतः सरूप-कल्पस्यान्वस्य प्राति. इत्येतद् विस्तरः यद्र. ) । एस्थि. उषस्त्रिकोपलक्षिताः सर्वेऽपि काला वरुणव्रतानुसारिणः सन्तः वेनीः नाम नदीः वर्धयन्ति इति तत्तन्मन्त्रवर्णप्रसिद्धेः स्रोत्यानां वरुणाज्ञानुसारित्वे तात्पर्यं द्र. ।

[b]) इत्थंभूताख्यान इह कप्र. । वरुणव्रताधीना देवा इत्यर्थः । व्रतस्य देवकर्तृकानुवर्तनक्रियायाः कर्मीभावेन विवक्षितत्वेऽनोर्गतित्वं वा वत्त्यं तत्प्रयोग-सामर्थ्याच्च योग्यक्रियाऽध्याहारो वक्तव्यः (तु. वें. सा. GRI. प्रमृ.) । उभयोः कल्पयोरियानेत्र भेदो भवति यत् कर्मप्रवचनीयकल्पे देवानां वरुणव्रताधीनतामुखेन गतिकल्पे च तेषां तद्व्रताऽनुगमनाऽऽख्यानमुखेन वरुणः स्तूयते । प्रथमे तद्व्रताऽनुसारित्वं फलत्वेन कैमुतिकं द्वितीये प्रधानतया शाब्दस्तन्निर्देश इति दिक् ।

[c]) लक्षणे कप्र. (तु. ऋ ८, ११,८; ४३, २१) । यत्तु GW. MW. च अनुप्रभूतः इत्येकं पदमित्याहतुः । तदसत् । स्वरद्वयोपपत्तिविरहात् ।

[d]) क्रतुम् इति द्वि. युक्तो लक्षणे कप्र. । ते इत्यस्य चोत्तरार्धे संबन्धः । क्रिवि. अव्य. इति सा. आह । तदीयेऽन्वये अनूषत इत्यनेन क्रिप. गतिभावेन संबन्धवचनं साधीयः स्यादिति ।

[e]) एकतरत्र पश्चादर्थे अव्य. क्रिवि. ( वैतु. सा. GW. अनु···आशत इत्येवं योजुकौ । एस्थि. ष. अन्वय आपद्येत न त्वसौ सुयोप इति चिन्त्यत्वं द्र.) । अन्यत्र लक्षणे कप्र. द्र. (तु. सा.) ।

[f]) स्वधाम् इति द्वि. युक्तः कप्र. । अनु···ववक्षिथ इत्येवं योग इति कृत्वा वें. सा. अनु √वह् इत्यस्य रूपम् आहतुः । तन्न । अकर्मकस्य √*वक्ष् (=√उक्ष् 'वृद्धौ') इत्यस्याऽनुप्रसृष्टस्येह संगततरत्वादिति दिक् (तु. GW. ) ।

[g]) त्वा इति द्वि. युक्तः कप्र. ( तु. सा. ; वैतु. वें. GW. प्रमृ. अनु···अर्षन्ति इति गतिरिति) ।

[h]) प्रवृतः (द्वि३) इत्येतदनुगतः कप्र. (तु. ऋ ६, १७, १२ प्रमृ. ; वैतु. वें. सा. [यस्य प्रवृतः इति प्र३, अनु···आशत इत्युपसर्गवती क्रिया चेति चिन्त्योऽन्वयः । पूर्वमन्त्रानुवर्तितबहुत्वविशिष्टसोमातिरिक्तकर्त्रन्तरानुपपत्तेरिति दिक्) ।

[i]) लक्षणे कप्र. अनुप्रभूषतः इति द्वैस्वर्येऽप्युत्तरेण शत्रन्तेनैकपदतां ब्रुवन्तः GW. प्रमृ. चिन्त्याः ।

[j]) उत्तरार्धर्चे-दिग्-विशिष्टाः सन्तः केतव उभय-लोकप्रसिद्धाः सन्तु इत्यस्मिन् मन्त्रस्वारस्ये निर्जागल्यमाने जनुर्द्वित्वस्य प्राधान्येन शुश्रावयिषितत्वात् तत्साधकः कप्र. द्र. (तु. सा. ; वैतु. वें. PW. प्रमृ. च अनु···सन्तु इति) ।

[k]) लक्षणे कप्र. (तु. टि. प्र···पश्यते) ।

[l]) सप्तम्यर्थे कप्र. द्र. (तु. नापू. सप्त. सकक्षा श्रुतिः । एवं तु. ऋ १, ९८, १ ; १८६, ११ ; ३, १६, ४; ५, ३७, १ ; ९, १११, ३ ; १०, ७५, ३ प्रमृ. यत्र √यत् इत्यस्य वृत्तम् अकर्मकं सत् तृ. वा सप्त. वा सहकृतं श्रूयेत) । एस्थि. अनु···यतते इति योग-मिच्छवः सा. प्रमृ. चिन्त्याः स्युः । अपरं च । वें. सा. अनु √यत् इत्यस्य सकर्मकतामभिप्रयन्तौ कर्मपद-वाच्यस्याऽनुगमनरूपे यतने यदस्य वृत्तिमाहतुस्तद-समर्थनिव द्र. । अनोः यतनक्रियार्थानिनुरञ्जकत्वात् तं प्रति गतिभावाभावाच्चोक्तायाः क्रियायाः कर्मपदवाच्यानु-गमनसप्रयोजनतायाम् अनोः लक्षणार्थवाचकत्वेन पर्यवसानाच्चेति दिक् ।

[m]) धाम इति इन्द्रम् इति च पर्यायेण कर्मकारकतां नयन् यत् सा. अनुम् उपसर्गं भावयन्नप्युभयत्र तथा

३२[a]; १०३, ५; १०९, ७[b]; १११, ३[c]; १०, | २, ३[d]; ६[e]; ७; ११, ३; १४, १[f]; २[f], | १२[g]; १७, ११[vh]; १८, १[i]; २७, ५; ३७, ५; ४०,

न करोतीत्यर्धजरतीयं तन्मतेनापि नितरामजोष्यम् ।

[a]) गतित्वमनुरुन्धान इव सा. (तु. MM.) 'अभिक्रन्दत् पुनः पुनः शब्दायते' इति चेदभणत्, तदासौ चिन्त्यः । एवं हि सति पुन्थाम् इति कर्मपदमनन्वितमिवापद्येत । अन्तर्भावितप्रधानकर्मणः क्यङन्तस्य √शब्दाय इत्यस्य कर्मान्तरापेक्षाभावात् । अतस्तदर्पितक्रियाया अधिकरणलक्षणतया अनुना कप्र. द्वितीयान्तं पुन्थाम् इति पदं समन्वितं स्यात् (तु. वें. GW.) ।

[b]) पूर्व्यः (<पूर्वी-) इति द्वि३ इति कृत्वा तदन्वितः कप्र. (तु. GW. गत्यभावः ; वैतु. वें. सा. अनु···पुवस्व इति योजुकौ) । [c]) लक्षणे कप्र. द्र. ।

[d]) देवानां मार्ग उपाश्रायि । तत्र किं लक्ष्यमिति । उच्यते, यच्छक्नवाम (=यावती शक्तिर्भवति) तदनु (तावतीं शक्तिमनुलक्ष्य = यथाशक्ति) प्रवोढुम् (=प्रकर्षेण क्रमितुं चलितुं = साफल्यं प्राप्तुम्) इति । एवं तावदस्मिन् अन्वये प्र√वह् इत्यस्याकर्मकतया प्रयोगः (तु. ऋ ५, ३०, ३; ४४, ८; ८, ४६, २६ प्रभृ.) । प्रवोढुम् इत्यनेन (भावप्रधानेन नाम्नेव सता द्वि१) लक्ष्यभूतेन अनोः अन्वय इतीवाभिप्रयन् भा. भवति (तु. तै १, १, १४, ३) । अस्यापेक्षया तावद् यच्छक्नवाम तत् प्रवोढुम् अनु (शक्नवाम) इत्येवं सकर्मकस्य अनु√शक् इत्यस्य प्रयोगतः साधीयानन्वयः संभवेत् । यत्त्वसौ तदनु (=तं पन्थानमनु) इति लिङ्गव्यत्ययं विकल्पयति तत् संभवत्युक्तप्रकारके वाक्ययोजनान्तरे नाऽऽद्रियेत । वें. सा. अनुक्रमार्थे अनुम् अव्य. (प्रवोढुम् इत्येतत्-संबद्धं) क्रिवि. चेच्छतः । तदपि विमृश्यम् । यत्तु GW. प्रभृ. अनुप्रवोढुम् इति योगमाहुस्तदसत् । एकस्मिन् पदेऽपलक्षणस्वरद्वयाऽनुपपत्तेः । ननु लक्षणस्य लक्ष्यानुविधायित्वोपगमाद् अत्रत्यं द्वैस्वर्यमनुलक्ष्य लक्षणान्तरं क्रियेतेति चेत् । न । सति संभव उपपत्त्यन्तरस्य सामान्यलक्षणापवादाऽनौचित्यादिति दिक् ।

[e]) लक्षणे कप्र. (वैतु. वें., सा. [पक्षे] अनु···आयजस्व इति मन्वानौ) ।

[f]) अत्र पूर्वेषां पितॄणां स्वाः पथ्या अनु (=स्वैः पथिभिः [तृतीयार्थे कप्र.]) परायणं यत्र इति सप्तम्यर्थेन पदेनाधिकरणमुखेन श्रावितं भवति । अनयैव दिशा परायणमार्गविवेकेन परायणाधिकरणनिर्देशः ऋ १०, १४, ७ इत्यत्र विस्पष्टः कृतो भवति । अत एव कारणाद् ऋ १०, १४, १ इत्यत्र प्रवतो महीरनु इत्यत्र सप्तम्यर्थपर्यवसानकलक्षणः अनुः वक्तव्यः । प्रवत्सु महीषु परेयिवांसमिति यमस्तुतौ तात्पर्यम् (वैतु. उद्गी. प्रत्यर्थे कप्र.) । एवं स्थिते समानाधिकरणे प्रवतो महीः इति पदे व्यधिकरणतया व्याचक्षाणः अनुं च गतितया योजयितुकामः सा. चिन्त्यः । एवम् ऋ १०, १४, २ इति मन्त्रेऽपि सा. सप्तमीतृतीययोर्मध्येऽव्यवस्थया भ्रान्तचित्त एव अनोः मन्त्रस्थं संबन्धमपश्यन्नध्याहारमुखेन नवीनं वाक्यमुपकल्पयति । ऋ १०, १४, ७ इत्यत्र त्वधिकरणविवेकस्य निगदसिद्धत्वात् सा. अपि साधु भाष्यमाह ।

[g]) जनान् इति युक्तः कप्र. (तु. सा. ; वैतु. वें. GW. अनु···चरतः इति योजुकौ) ।

[h]) प्रथमान् इति च यून् इति च समानाधिकरणे पदे अन्यथा विवृण्वन्तौ वें. सा. चिन्त्यौ । तद्विस्तरस्तु वैश. द्र. । तार्तीयीकपादस्थश्च अनुः कैश्चिदुत्तरत्र शत्रन्ते कृत्य् अनुगमयितुमुपलिप्सितं भवति । तन्न । स्वरविरोधादेव । पूर्वोक्तदिशाऽत्र कर्तृभिन्नकारकान्तराऽनपेक्षया भावस्वरूपस्य प्रधानस्य क्रियार्थस्य समर्पणमात्रेणाऽऽत्मवती श्रुतिर्भवति । अतः प्रधानकर्मतयाऽनाकाङ्क्षितत्वादत्र योनिशब्दः क्रियालक्षणाऽधिकरणाऽन्यतरार्थपर्यवसायितया तद्वचनसमर्थेन अनुना कर्मप्रवचनीयेन योगाद् द्वितीयायां श्रावितो भवति । अथ तुरीये पादे सा. अकारणमेव चैत्तीमव्यवस्थितिमुपागतो विकल्पभूयिष्ठं भाष्यमभाषत । शातपथेनौपसंहारिकेणोद्धारेण(७,४,१,२०) तु सप्तम्यर्थपर्यवसायित्वदिशा अनोः कर्मप्रवचनीयत्वस्यैव प्रदर्शितत्वाद् वचनव्यत्ययाद्यनार्थप्रयासपुरस्कृताऽनुजुहोमीत्याद्यनेक-विकल्प-विकल्पकर्दमकलिलायमानोऽसौ न कस्य दयनीयः स्यात् ।

[i]) तु. टि. ऋ १०, १४, १; २; ७ यत्रोक्तदिशाऽत्रापि तृतीयार्थे कप्र. । परेण पथा परेहि दूरं गच्छेत्यर्थः । तद्दूरगमनाधिकरणभूतदेशविशेषार्थश्चेह तुरीयपादस्थयाऽस्मदीयप्रजादिनिवासाधिकरणभूताऽस्मत्-

९; १०[a]; ४५, ११; ५१, ६[b]; ५६, ३[२०]; ६१, २१[d]; ६८, १२[e]; ७२, ३; ५; ९१, ७; ९७, १९; १०३, ६[२१]; १०५, २?[g]; ११५, ६[h]; १२२, २[i]; १२४, ९[j]; १२५, ७[k]; १३५, ४[l]; १४२,

संनिहितप्रस्तुतदेशव्यतिरेचनमुख्यया प्रार्थनया संकेत्यते। अनुपरेहि इति योगमिच्छवस्तु GW. MW. प्रभृ. सौवरीमनुपपत्तिमधिकृत्याऽनुयोक्तव्या भवेयुः (तु. सा.)।

[a]) लक्षणे कप्र.। यत्तु उद्गी. वें. सा. GW. प्रभृ. च अनु···दीधियुः इति क्रियायोगमाहुस्तच्चिन्त्यम्।

[b]) अध्वानम् इत्येतदनुबद्धः कप्र.। यथा कश्चिद् रथी मार्गप्रस्थितः सन् कस्यचिदन्यस्य नियोगधुरीकुर्याद् अध्वानं प्राप्यैतदप्यन्वाचयेनेव संपादयिष्यामीति, तथाऽग्नेस्ते पूर्वे भ्रातरो देवान्तरोद्दिष्टहविर्वहनात्मकं नियोगधुरीकृतवन्त इत्यर्थः। एस्थि. तृतीयार्थे वा स्यात् सप्तम्यर्थे वा (वैतु. उद्गी. वें. सा. PW. प्रभृ. अन्वावरीवुः इति द्व्युपसृष्टमाख्यातं स्यादिति कृत्वा व्यर्थमवलक्षणं द्वैस्वर्यम् अभिलाषुकाः)।

[c]) प्रथमा···सत्या···धर्म (=धर्माणि) अनु इत्येकतरत्र पुत्म अनु इत्यन्यतरत्र यथाश्रुतमन्वयः। सा. तु विहायैनमृजीयांसमन्वयं गाः इत्यनेन क्रिप. गतित्वेन योगमपश्यत। तस्य मन्ददर्शनस्यैवैतत् फलं यत् साधनतया श्राव्यमाणयोः धर्मपरमनोः (तु. ऋ १, १६४, ४३; ५०; ६, ३, ७; ८, ८, २३ प्रभृ.) साध्याऽनुप्रवेशः समजनीति दिक्।

[d]) कन्यायाः···उपमातिम्···अनु इति संबन्धे सादृश्येऽर्थे कप्र. (वैतु. वें. सा. GW. ये अनु···परेयुः [<अनु परा√इ] इत्यातिष्ठन्ते)।

[e]) पूर्वीः इत्यनेनाऽभिसंबद्धः कप्र. (तु. उद्गी.; वैतु. PW. प्रभृ. अन्वानोनवीति इति योगं ब्रुवाणाः द्वैस्वर्यं प्रत्यनुयोक्तव्याः स्युः)।

[f]) अत्र लक्षणे कप्र. (तु. अनुपदमेव मन्त्रे श्रूयमाणम् अनु संरभध्वम् इति। यत्रेन्द्रस्य प्रामुख्येनाऽऽदर्शीकृत्य क्षिप्रावयिचितत्वात् तल्लक्षणः कप्र. भवति; वैतु. वें. सा. PW. GW. प्रभृ. च येषाम् अनुवीरयध्वम् इति अनुसंरभध्वम् इति च योगावभीष्टाविव भवतः। मै. त्वेवंविधेषु स्थलेषु सामान्यतः प्रथमं कप्र. अपि निहततया लक्षयन्ती गतिभावं प्रापयन्ती च प्रतीयते)।

[g]) तु. अनु√वी>अनु···वेः इत्यत्रत्यं सस्थ. टि.।

[h]) अस्य मन्त्रस्य 'युः···वरम्···अनु···तृषु··· च्यवानः···अनुद्रे···चिद्···धृषता···धन्वना···इद् (अविष्यति तस्मै=) अविष्यते (वाजिन्तमत्वादिविशिष्टाय) जातवेदसे सुविन्द्य (स्तुतिपरो भवेति शेषः)' इत्येवमन्वयः स्यात्तत्र च वरम् इत्यनेनाऽन्वितो लक्षणार्थः कप्र. अनुः इति सरलः पन्थाः (वैतु. सा. LR. Gri. यन्मतेन अनु√च्यु> ϕअनुच्युवान- इत्येकं समस्तं प्राति. भवति। एवं तु. ORN. यदीयविमर्शविस्तरानुविमर्शः वैश. अनुसन्धेयः)।

[i]) अनु···अजनयन् इति क्रिययाऽन्वयं ब्रुवाणाः वें. PW. प्रभृ. चिन्त्याः। देवानां (विश्व-) जननव्यापारस्याऽग्नेस्तादृशव्यापारात्मकं व्रतम् अनुलक्ष्याऽभिनिर्वर्तुकत्वेन समर्पणे श्रुतिस्वारस्यप्रतीतेर्लक्षणाऽर्थो गतित्वे सति समासाङ्गीभावाद् गुणतां मा गादिति कृत्वा कप्र. इत्यभिसन्धेः (तु. सा.)। एस्थि. क्रिप. भावसामान्ये प्रयुक्तत्वात् सकर्मकस्य सतोऽपि कर्मनिराकाङ्क्षत्वं द्र.। अथवा समुचितं कर्माऽऽक्षिप्येत (तु. सा.)।

[j]) उत्तरेण कृता शासनजन्तेन चर्चूर्यमाणम् इत्यनेन गतित्वमुखेनैकपद्यमिच्छन्तः GW. MW. प्रभृ. सौवर्या अनुपपत्तेर्विषये चोद्याः भवेयुः (तु. सा.)।

[k]) भुवना इति अधिकरणानुलक्षणः कप्र. (तु. ऋ १, १८७, ४; १०, ९७, ७; १९ GW.; वैतु. PW. MW. अनु···वितिष्ठे इति युञ्जानौ)।

[l]) यः कुमार-मानसोपज्ञो रथः नापू. मन्त्रेऽश्रावि यद्विषये च तदितरेषां विप्राणां प्रवृत्त्यभाव इह समकेति, तम् अनुलक्ष्य (तदाधारेणेत्यर्थः) इतः अग्रे साम तथाऽनभिप्लवां संप्रवृत्तिमलब्ध, यथा नावि आहितं सत् किञ्चिद्वस्तु मध्येसागरमपि सुरक्षितं भवेदिति श्रुतिस्वरसे प्रतीयमानेऽपि यत् सा. GW. प्रभृ. सर्वे व्याख्यातारः अनुप्रावर्तत इति द्विस्वरं द्व्युपसर्गं च योगमनुमन्वीरंस्तत्राऽऽस्थाऽभावः साऽर्थः स्यात्। वें. सम्···अनुप्रा॰ इति योजुको विमृश्यः।

७[a]; १४५, ६[b]; १४९, ३; १५९, २[c]; १६८, २[d]; खि २, ४, १०[e]; १०, ३; १४, १०; ३, १५, १; २६?[f]; १८, १[g]; ५, ४, ४; ११; ६, ३, १[h]; खिसा १५, १०[i]; मा १, २०[a]; २, १५[ij]; २६[k]; २७[k]; †३, १६; ५२[a]; ४, २८[l]; ५, ९[m]; २९†; ६, १२†[n]; ७, १२†[o]; ८, १९[p]; ३७[q]; ४०†; ९, १४[2]†; १०, १९[r]; ११, ६†; १२[s]; १७[4s]; †; १२, ३[t]†; ५[4u]; २८†; ९३†;

a) लक्षणे कप्र. द्र. ।

b) अनुप्र॰॰॰धावतु इति योगं ब्रुवाणाः PW. GW. प्रभृ. चिन्त्याः । प्राधान्येन विवक्षितस्य लक्षणार्थस्य तथात्वे गुणताप्रसङ्गादेकपद्ये सति द्विस्वर्यानुपपत्तेश्च (गतिद्वयं समस्तं सदेकपिण्डीभूतमेकस्वरं च स्यादित्यभिसन्धिर्भवति [तु. W. शौ ३,१८,६])।

c) सपा. पै २,४१,२ अप इति पाभे. ।

d) वातस्य इति षष्ठ्या सह अनु कप्र. युयोजयिषू सर्वथोत्तन्त्रौ वे. सा. उपेक्ष्यौ भवतः । द्वितीयान्तेन वि-ष्ठाः इत्यनेन पदेनास्याऽन्वयः द्र. (तु. GW.)।

e) पाभे. अधि काठ १६,१५ द्र. ।

f) पाठः खण्डितोऽतो विवेको दुःशकः ।

g) तु. टि अनु ऋ ८,५८,२ ।

h) सप्तम्यर्थे कप्र. द्र. । सपा. मागृ १, ३, १ अथो यथेमं, हिगृ १,१७,४ अथैते, आगृ ३,६,८ इमे ये, शौ ७, ६९,१ पं ३,१३,६ माश १४,९,४,५ बृउ ६,४,५ शांश्रौ ८,१०,१ पुनः इति पाभे. ।

i) सपा. वनस्पतीन् अनु (शुप्रा ३,४१ च) >मै २, ७,१५ वनस्पतीनाम् इति पाभे. ।

j) अनूज्जेशम् इति द्व्युपसृष्टं द्विस्वरं च योगमुशन्तौ PW. MW. च चिन्त्यौ भवतः । अनुः लक्षणे कप्र. द्र. । तथाऽन्वस्य स्वारसिकत्वात् ।

k) सूर्यस्याऽऽवृतमनु (=उद्दिश्य) आवर्ते इति वाक्यार्थस्य सुस्पष्टत्वाल् लक्षणार्थे कप्र. (वैतु. यस्था. अन्वावर्त्ते इति तै. काठ. शौ. पै. सौवरः पाभे. यतस् तत्र अनोः उपसर्गता स्पष्टा भवति । सूर्यस्याऽऽवृतः कर्मतया विवक्षितत्वे सति अन्वा√वृत् इत्येतस्य सकर्मकता चेति दिक्) । सपा. अन्वावर्त्ते (माश १,९,३,१७; २० च) <>अन्वावर्ते (शांआ ४, ८; ९ कौउ २, ९ शांश्रौ १, ६, ५ प्रभृ. च) <> मंत्रा १, ६, १९ कौगृ २, २, १२ गोगृ २,१०, २३ अन्वावर्तस्व इति पाभे. ।

l) अमृतान् इत्येतत्संबद्धो लक्षणे वाऽऽनन्तर्यार्थे वा कप्र. द्र. । =सपा. माश ३,३,३,१४ तैआ ४,४२,५ आश्रौ १,३,२३ आपमं २,५,११ । शौ ३,३१,११ हिगृ २,१७, ११ विभे. ।

m) तु. उ. म. च यावनु √ह्व इह्वाऽऽक्षेप्यो भवति । वस्तुतस्तु 'त्वया (=अग्निना द्वार्भूतेन)' इति युक्तः तृ. कप्र. एव स्यात् ।

n) सपा. का ६,३,१ उप इति पाभे. ।

o) पाभे. अधि काठ ४,३ द्र. ।

p) तृतीयार्थे कप्र. द्र. ।

q) पाभे. अधि पै १९,४३,७ द्र. ।

r) लक्षणार्थे समन्विते सत्यपि अनुरीयमाणाः इत्यैकपद्यावच्छेदेन द्विस्वरं योगमनुमन्यमानौ PW. MW. च चिन्त्यौ द्र. ।

s) सा. तै ४, १, २, २, म. च व्यवहितेन अख्यत् इत्यनेन क्रिप. गतित्वेन योगमाहतुः । तन्न । अनूपसृष्टधातुवाच्यार्थस्य प्रकरणाभावादिति यावत् (तु. टि. ऋ ७, ७०, ४)। प्रथमयोर्द्वयोः पादयोश्चतुर्थे च पादे लक्षणार्थस्तृतीये च पादे सदृशार्थः कप्र. (तु. ऋ ५, ८१, २ यत्र सवितृ-संबन्धेन समानं वर्णनं भवति) । ननु √ख्या सकर्मकोऽकर्मको वेति । उभयमिति । कथमिति । उच्यते । यदा कर्मविशेषनिरपेक्षं सामान्येन दर्शनप्रकाशनाद्यर्थो भवति तदाऽयमकर्मकः (तु. ऋ १, ४६, १०; १२३, २; ४, १३, १; १४, १; १९, ९; २४, ८; १०, १२७, १ प्रभृ. शौ ७,८२,५ प्रभृ. च । एषु स्थलेषु क्वचित् क्वचित् प्रतिः अनोः स्थाने श्रूयते । तत्र यदि प्रतिः कप्र. न स्यात्तर्हि प्रासङ्गिकार्थाद् विपरीतस्याऽर्थस्य प्रतीतिः स्यात् प्रतिख्यानात्मकस्य । न च तदुपयुज्येतेति यथा प्रतिः तथा अनुः प्रकरणसामान्ये कप्र. एव स्यादित्यभिसन्धिः) ।

t) पाभे. अनु ऋ ५,८१,२ द्र. ।

u) कप्र. (तु. टि. तै १, ६, ५, २; वैतु. मै २, ७, ८ यत्राऽनुगतत्वाद्यर्थैर्विक्रमणक्रियाया एकपिण्डीभावेनेव विवक्षायाः संभाव्यमानत्वाद् अनोः गतिभावस्तदर्थाऽनुप्राणितक्रियायाः सकर्मकत्वं च भवति) ।

१३, ५[४]†; ६[a]; ७[b]; ९†; १७, ३८[२]; ६६[c]; १९, ४०[c,d]; ५४†[c]; २०, ४९†[e]; २७, १६; २९, १९[४]†; ४३,†; ३२, ४; ३३, ३२†; ३५, ७†; ३७, १८[f]; का १, ७, ४; १०, ५[g]; २, ४, १[२h]; ६, ५[i]; ७[i]; ७, ५[j]; ३, ३, ६†; ७, २†; ४, ९, ५[j]; ५, ३, २[k]; ७, ५†; ७, ६, १†[l]; ८, ११, २; १५, १†; ९, ३, ५[m]; १०, ३, ७[२]†; ११, ६, ४[n]; १२, १, ६†; २, १; ६[४o]; †; १३, १, ३†; ६[४p]; २, ११†; ६, १९†; १४, १, ५[४]†; ६[a]; ७[b]; ९†; १८, ४, ६[२]†; ६, २[c]; २१, ३, ११[c,d]; ४, ४†; २२. ५. ३†[e]; २९. २, ६; ३१, २, १०†; ३, ८[४]†; ३२, ३, ३†; ३५, ३, ४; ४, ६†; ३७. ३, ५[f]; तै १, १, ६, १[c]; १०, ३[c]; १४, ३†; २, ६, १[२q,r]; ८, १[l]; १४, १†; ४[२]†; ३, १, २†; ७, १[२s]; ८, २[t]; ४, ९, १†[n]; ४४, ३[u,m]; ५, १, ३¶; २, २¶; ३, २[v]; ५¶[c]; ५, १†; ७, १†; ८, ३¶; १०, ४[w]; ६, ४, १[५]; २[l]; ५, २[४x]; ¶७, १, १[y]; ६[z]; ४, २[al]; ५, १[४c];

a) पाभे. अुधि काठ १६,१५ द्र. ।

b) पाभे. अुनु खिसा १५,१० द्र। c) लक्षणे कप्र. द्र. ।

d) =सपा. तैब्रा १, ४, ८, १ । शांश्रौ १५, १५, ६ अभि इति पाभे. । e) यज्ञम् इति द्वि. युक्तः कप्र. ।

f) वाम् इति द्वि. युक्तः कप्र. (तु. सा. [तैआ.]) । अनु वाम् (तैआ ४, ७, १ च)>सपा. मै ३,९,६ मुधुमान् इति पाभे. ।

g) सप्तम्यर्थे कप्र. [तु. पूर्वस्मिन् पादे पशुषु प्रविष्टः इति; वैतु. सा. अनु ... वितस्थे इति द्व्युपसृष्टमाख्यातमिच्छन् (तथा संभवत्यपि वि-ष्ठाम् इत्यत्राऽनुव्याप्यत्वमभिप्रेतमिति कृत्वा कालाध्वनोः [पा २, ३, ५] इति द्वि. द्र. । सा. तु 'अनुसृत्य' इति भाषमाणः कर्मणि द्वि. इतीवाभिप्रैति)] ।

h) तु. टि. अनु मा २, १५[२] ।

i) तु. टि. अनु मा २, २६ ।

j) तु. टि. अनु मा ४, २८ ।

k) तु. टि. अनु मा ५, ९ ।

l) पाभे. अधि काठ ४,३ द्र. ।

m) तृतीयार्थे कप्र. द्र. । n) तु. टि. अनु मा १०,१९ ।

o) तु. टि. अनु मा ११,१७[४] ।

p) तु. टि. अनु मा १२,५[४] ।

q) तृतीयार्थे वा लक्षणार्थे वा कप्र. द्र. ।

r) अनु, प्राणन्तु, अनु, प्राणिहि इत्यस्य स्थाने सपा. मा ४, २५ प्रमृ. अनुप्राणन्तु, अनुप्राणिहि इति, मै १,२,५ पाहि इति च पाभे. ।

s) लक्षणे कप्र. (तु. भा. सा. च ; वैतु. MW. गतिरिति त्रुवंश्चिन्त्यः) ।

t) सपा. मा. ६, १२ का ६, ३, १ माश ३,८, २, ३ उप इति पाभे. ।

u) आनन्तर्ये वा (तु. भा. सा. च) लक्षणे वा कप्र. द्र. । प्रथमे कल्पे वपोर्धर्मस्य च दिवश्चाऽऽस्थानक्रियासामान्याऽपेक्षया तत्पूर्ववर्तिन्या देवगणकर्तृकाया क्रियाया अपेक्षयाऽऽनन्तर्यं द्र. (वैतु. भा. सा. च वसुधर्मविषयस्याऽऽस्थानस्यापेक्षया द्युविषयस्याऽऽस्थानस्याऽऽनन्तर्य्यमिति) । द्वितीये कल्पे वसुधर्ममनुलक्ष्येति संबन्धः (तु. शौ ७,१०२,४ पाभे.) ।

v) अनु, दध्वसे > मै १,७,१ प्रमृ. अनुदध्वसे (तु. टि. अनुदध्वसे) इति ।

w) लक्षणार्थे कप्र. (वैतु. PW. K. प्रमृ. अनुसंचरन्ति इत्यपलक्षणद्विस्वरं योगमसत्यप्यनिवार्यत्वेऽनुमन्यमानाः) ।

x) लक्षणे कप्र. । पृथिव्यन्तरिक्षद्युदिशां विक्रमणाधिकरणतया लक्ष्यत्वेनाऽनुश्रूयमाणत्वात् (तु. K.; वैतु. भा. यः पश्चादर्थे कप्र. इच्छन् वि √क्रम् इत्येतम् आत्म. सन्तं सकर्मकतां प्रापयिष्यन् भवति) ।

y) लक्षणे कप्र. (तु. भा. ; वैतु. K. अनुम् उपतिष्ठन्ते इत्येतेनाऽऽख्यातेनाऽनुगमयति) । पशूनां पाकयज्ञमनुलक्ष्योपस्थानस्य विवक्षितत्वात्तस्य च गतित्वे गौणतापत्तेः कप्र. एव साधीयानित्यभिप्रेमः ।

z) दक्षिणाया यत्तद्वैशेष्येण युक्तायाः पश्वन्तरसंक्रमणलक्ष्यत्वेन शिश्रावयिषितत्वात् तदर्थीयः कप्र. द्र. ।

a1) भा. सा. च लक्षण– (पा १, ४, ९०) इति कप्र. । तृतीयार्थे (पा १, ४, ८५) इति च K. । यथा तु MW. आनन्तर्यार्थे ग्राहयितुं गतित्वं संप्रधारयामास, नैतत् तथा संभवेत् । गतित्वं ह्युपगतः

३[a]; ६, ३[१]¶[b]; ७, | ५, १[१d]; १४, २¶[e]; | ५, १[g]; ६[h]; २,
२[c]; ८, ३[२]†; ८, | ¶२, १, ४, ५[f]; | १. ४[i]; ५[j]; ९,

अनुः यदा भवति, तदैतदुपसृष्टस्याऽऽख्यातस्य द्विधा प्रवृत्तिर्भवति । कस्यचिदपरकर्तृकस्य स्वजातीयस्य स्वाभिन्नस्य वा भावस्यापेक्षयैतद्वाच्यस्य भावस्य भौतिके वा दिक्कालादिलक्षिते बौद्धे वा चितिसंस्कारलक्षिते पश्चाद्भावित्वविशिष्टे सादृश्य-सामीप्याद्यर्थबोधने तात्पर्यमित्येकम् । प्राक्ताविशिष्टस्य भावस्य वा नामीभूतस्य वा तत्कर्तुर्वा तेनाऽनूपसृष्टेनाऽऽख्यातेन कर्मसंबन्धाद् उपसृष्टेस्तस्याः पूर्वमकर्मकस्यापि सतः सकर्मकता भवतीत्यपरम् । एवं च सत्यु अनुः चेद् उपसर्गः स्यात्तर्हि यजमानकर्तृका देवकर्मिका वा देवोज्जितिक्रमिका वा तदनुपातिन्युज्जितिरवगम्येत । देवाः पूर्वं विजयिनः सन्तो यजमानेन पश्चाज्जिता इत्यर्थः । न चेयमिष्टापत्तिः, तात्पर्यविरोधात् । देवकर्तृकेण विजयेन तत्साधनकस्य तदनुलक्षितस्य वा यजमानकर्तृकस्य विजयस्य प्राधान्येन विवक्षितत्वात् । देवविजयस्य पूर्वसिद्धत्वात् तत्प्राक्ता यजमानकर्तृकस्य विजयस्य च पश्चात् तद्द्वारा च सिद्धत्वात् तदनन्तरता स्वत एव सिद्धा सती शाब्दं वाचनं नापेक्षेत । एवं खलु कर्मप्रवचनीयवाद एवेह सुस्थितः । स एव च सौवरलक्षणानुकूलः (तु. टि. मा २, १५[२]) ।

[a]) लक्षणवचनः कप्र. न गतिः (वैतु. K. अनू[नु । उ]पयन्ति इति) । नाउ. मन्त्रे तु अनूपयुन्ति इति गतिर्न कप्र. इति स्वरविवेकेन विज्ञाप्यमानोऽसावुभयोः प्रयोगप्रकारयोर्विषये विवेचनीयः । तद् यत्र लक्षणाद्यर्थः कर्मकारकाद्यनुबद्धतया प्राधान्येन शिश्रावयिष्यते, तत्र तद्वाचकाः प्रातिस्विकस्वराः कप्र. प्रयुज्यन्ते । अथ यत्र त एव नि.. अर्थान्तरवाचकाः सन्त आख्याताऽङ्गभूतास्तदर्थविशेषणपरत्वेन शिश्रावयिष्यन्ते, तत्र त उपसर्गधर्मिण आख्यातस्वरभावाभावव्यवस्थितस्वरा भवन्तीति । अन्यथैतावता संनिकर्षेणाऽपार्थस्वरभेदश्रुतेरनुपपत्तेरिति दिक् ।

[b]) अनु-पर्यावर्तते इत्येवमत्र प्रथमोत्तमस्वरवत् द्व्युपसर्गयोगमिवाऽऽतस्थिवान् MW. (तदनु K. च) चिन्त्यः स्याल्लक्षणार्थस्य विस्पष्टं श्राव्यमाणत्वात् ।

[c]) तृतीयार्थे कप्र. इति K. । लक्षणेऽपि सुगमः (वैतु. भा. त्विह गतित्वमुशन् चिन्त्यः स्वराऽनुपपत्तेः) ।

=सपा. तैब्रा २, ७, १६, १ पागृ ३, १४, ६ आपमं २, २१, १७, । तां १, ७, ५, वाश्रौ ३, १, २, १ प्रमृ. अभि इति पाभे. ।

[d]) प्रथमो द्वितीयश्च अनू इत्थंभूतलक्षणे, तृतीयश्च लक्षण इति विवेकः (तु. ऋ १,८२,३; वैतु. भा. अनु···प्र···यासि इति योगे कृताऽऽस्थः चिन्त्यः) । वश-शब्देन तत्त्वतोऽपरिचयात् । अथाप्यसाविह मुधैव विकल्पग्रस्तः द्र. ।

[e]) गतिरिति भा. K. च । द्वैस्वर्यं त्वनिष्टं तथाऽऽपद्येतेति लक्षणे कप्र. एव द्र. (तु. टि. तै १,६,५,२) ।

[f]) जघनतः इत्यर्थे जघने (द्वि२) इत्यनेन संबद्धः कप्र. भवति । भा. K. च जघने इति स१ पश्यन्तौ अनूदैत् इति द्व्युपसृष्टत्वे सति द्विस्वरं योगं ब्रुवाणौ चिन्त्यौ, तन्मतेनैव पश्चादर्थस्य जघन-शब्देनोक्तत्वात् । प्रकरणे तन्मात्रतया संभवस्याऽन्वर्थस्य चारितार्थ्यभावं प्रति, सत्यैकपद्ये द्वैस्वर्यस्याऽपलक्षणतां च प्रति तौ चोद्यतां व्रजतः । ननु जघन- इति प्राति. पुं. श्रूयते (तु. ऋ १, २८, २ प्रमृ.) इति चेत् । सत्यमेतद् अंशत एव । न. अपि श्रुत्युपक्रमात् (तु. तैब्रा २, ४, २, ७ [यच्छाखासाम्याद् नेदिष्ठतया प्रामाण्यमर्हेत्]) । नन्वेवमपि मुपा. पपा. च प्रगृह्यत्वलक्षणाऽनुपलम्भश्चोद्यः स्यादिति चेत् । ओमिति ब्रूमः । अस्मद्व्याख्यानेऽस्यांशस्य प्रामादिकविकारतयाऽनभ्युपाये सति मृग्यसमाधानान्तरत्वादिति दिक् । अनु, उदैत् > सपा. मै २ ५ ३ अनूदैत् इति, काठ १३,४, अनूद्यन्तम् अमन्यत इति पाभे. ।

[g]) लक्षणे कप्र. । अनूदायन् इति गतित्वं मन्वानौ MW. K. च स्वराऽनुपपत्तेः चिन्त्यौ द्र. । अनु, उदायन् > सपा. काठ १३, ३ अनूदैत् इति, मै २,५, ३ उदैत् इति पाभे. ।

[h]) भा. K. चाऽत्र लक्षणार्थमपश्यन्तौ अनुसंतनोति इति रूपं प्रतिपन्नौ न्याय्येतरद्वैस्वर्यपक्षपातिनौ सन्तौ चिन्त्यौ ।

[i]) पश्चादर्थे अव्य. (तु. नाउ. स्थलं यत्र उपरिष्टात् इति प्रयुज्यते ; वैतु. MW. अनुनिर्वपेत् इति) ।

[j]) आनन्तर्यार्थबोधकम् अव्य. क्रिवि. संबन्धश्च (वैतु. मै २, १, १ यत्र समाने प्रकरणे अनुः पृथग् अव्य. क्रिवि. असन् नाउ. क्रिप. गतिभावेनाऽनुप्रविष्टो भवति

५[a]; ३, ३, १[२b]; ५, ३[c]; ७, १[d]; १२, २[d]; ४, २, १[२e]; २[f]; ४[f]; ८, १†; २[g]; ५, ३, २; ३; ४, २[२h]; ५, ३[h]; ६, २[२i]; ८, ७[j]; ६, ५, ६[k]; १०, ४[७l]; १२, २†; ¶३, १, ३, १[m]; ४, २$[n]; ८, ३[४]†; २, १, ३[o]; ४, ५[p]; ५, ५[२q]; ६[२r]; ६, १$[s]; ३, ६, ३[२t]; ७, १[२t]; २[t]; ४, ८, ३[u]; ६[v], ५, १,

⌊तु. सस्थ. टि. अनु-प्र √यम् 'दाने' > अनुप्रयच्छति⌋)।

[a]) प्रधानभूतां वाचमनुलक्ष्याऽन्या वाचः प्रवदन्तीति वाक्यार्थप्रतीतेः अनुः कप्र. (वैतु. MW. अनुप्रवदन्ति इत्यन्याय्यो योगः)।

[b]) लक्षणार्थस्य प्राधान्येन विवक्षितत्वाद् द्व्युपसृष्टिश्च तामनु द्विस्वरता चाऽनभीष्टा सुवारा द्र. । प्राक्स्वेवमेव विवृण्वत्स्वपि गतित्वमेवाऽनुमन्वानाः MW. K. प्रमृ. चिन्त्याः। अनूऽऐत्, अनु परैत् > सपा. मै २, १, ४[२] अन्वगच्छत् इति, काठ १५,२[२] अन्वागच्छन् इति पाभे. ।

[c]) आ √प्याय् इत्यस्य शुद्धस्याऽकर्मकत्वाद् भिन्नकर्तृकाऽऽप्यायनयोर्द्वयोर्मध्ये लक्षणलक्षितसंबन्धस्यैवोपपन्नत्वात् कप्र. एव सुवचः । अन्वाप्यायति > सपा. काठ ११, ३ अन्वाप्यायते मै २, २, ७ अन्वाप्यायते इति पाभे. ।

[d]) लक्षणे कप्र. । अन्यथादर्शी MW. चिन्त्यः । अनु, अपाक्रामत् > मै २, ३, ७ अन्वपाक्रामत् इति पाभे. ।

[e]) लक्षणे (हीने वा ⌊तु भा.⌋) कप्र. (वैतु. PW. प्रमृ. अनु-सम्-आ-रभामहै इति त्र्युपसृष्टं द्विस्वरं योगमनुमन्यमानाः सन्तश्चिन्त्यतामुपगताः। तथा हि सति गतिर्गतौ ⌊पा ८, १, ७०⌋ इत्युक्तदिशा निहतः स्याद् अनुः ⌊तु. नाउ. नि. सम् इति; एवमपि तु. टि. ऋ१०, १०३,६⌋)। [f]) अनोः कप्र. सप्तम्या योगः समवधेयः।

[g]) अन्तर् इत्यर्थेऽन्तर्भागानुलक्षणवचनः कप्र. (वैतु. अनु-वि √विश् मै २, ४, ७; ८ यत्राऽयं कर्मण्येव कारकान्तरसंबन्धस्याऽन्तर्भावादिव गुणभावाद् गतिभावं प्रापितो भवति)। [h]) पश्चादर्थे अव्य. द्र.।

[i]) सप्तम्यर्थपर्यवसानकः कप्र. द्र.।

[j]) एपू. टि. दिशा कप्र. द्र. (वैतु. PW. प्रमृ. अनुप्रापिपते इति योगम् आहुः। तन्मन्दम्। ऐकपद्ये स्वरद्वयस्याऽपलक्षणत्वात्)।

[k]) तु. तै २, ६, ५, ५ यथा तत्र प्रस्तरस्याऽऽहवनीये प्रहरणं श्रावितं भवति तथाऽत्र तत्सकक्षतया तदुत्तरविधितया च प्रस्तरस्य तदेकांशस्येत्यर्थे बर्हिरनु (बर्हिषि) प्रहरणं श्राव्यते। एवं चेह सप्तम्यर्थपर्यवसानो लक्षणे कप्र. एव वक्तव्यः। गतित्वाऽध्यवसानः MW. विस्पष्टेतरान्वयः K. च चिन्त्यौ भवेताम्।

[l]) हेतुवचनः कप्र. इति भा. अभिप्रैति । तथात्वं लक्षणवाचकताद्वारकमेवाऽनुवेदितव्यम्। पञ्चत्वसंख्यामनुलक्ष्य तत्पूर्तिहेतुना प्रायणवत्-समिष्टयजुः संकलनेनोदयनपञ्चकस्योक्तत्वात् । [m]) तु. टि. अनु तै २,१,५,६।

[n]) लक्षणे वा तृतीयार्थे वा कप्र.। यत्तु भा. ऐकपद्यमित्रोत्तरेण कर्मणि शानजन्तेन कृताऽभ्युवाह 'अनुरज्यमानाः' इत्येवं च व्याचचक्षे, तन्नोपपद्यते। प्रथमा खल्वापत्तिः सौवरी सुविदिता विमृशां भवति। कर्मणि प्रवृत्तिमतः पदस्य कर्तरि व्याख्यानं दुर्वचमित्यपरा। उपेक्षित-अनुपदः K. तूपेक्ष्यः। [o]) लक्षणे कप्र. द्र.।

[p]) यत्तु MW. अनुप्रसर्पन्ति इत्य् आख्यातिकं योगमाह। तदसत्। स्वरविरोधात्। अत एवंविधेषु लिङ्गान्तरैः सामान्येन गतितया वा कर्मप्रवचनीयतया वा सुवहेषु स्थलेषु स्वर एव विनिगमकः स्यात्। लक्षणाद्यर्थस्य प्राधान्ये द्वैपद्यं द्वैस्वर्यं च। तस्याऽऽख्यातान्तर्भावेण गौणत्वे ऐकपद्यमैकस्वर्यं चेति दिक्।

[q]) इत्थंभूतलक्षणे कप्र.। यथाऽनु विष्णुं भक्तस्तद्वदित्यर्थः। वस्तुतस्त्व् अनुगतत्वाऽऽदिबोधकाऽऽख्यातस्य गम्यत्वमिह द्र.। एवं च गर्भीकृताऽऽख्यातानुप्राणितार्थवचनसामर्थ्यमित्थंभूतलक्षणार्थ इति सुवचं भवति। [r]) हीने कप्र. इति भा. सुवचः।

[s]) हेत्वर्थानर्थान्तरभूते लक्षणे कप्र.।

[t]) नापू. टि. दिशा कप्र.। गतित्ववादी MW. चिन्त्यः।

[u]) इह द्वयोः कल्पनाऽऽख्यभावयोर्मध्ये प्रथमोक्तमनुलक्ष्य पश्चादुक्तस्य संभावितया श्रावितत्वाच्चाऽनुकल्पनाऽऽख्यस्योपसृष्टभावस्याऽप्रासङ्गिकत्वाच्च यथाकथमप्यभ्युपगमे सति लक्षणविषयभूतवाचकस्य द्वितीयान्तपदस्याऽन्वयविघातकत्वाच्च गतित्वपक्षपातिनी मतिरर्वाक्तनी (तु. PW. प्रमृ.) नाऽऽद्रियेतेति दिक्।

[v]) आनन्तर्ये गतित्वकर्मप्रवचनीयत्वव्यतिरिक्तं प्रातिस्विकाऽन्वययोग्यमव्ययमनुमन्तव्यमिति।

३[a]; ४[a]; २, ३[b]; ४[२b]; ६, २[c]; ३[१c,d]; ४, १, १, २†; २, १[a]; २[३e]; ३[e]†; ८, २[f]; १०, ४†; २, १, १[३g]; २[g]; २,४†; ६, ५; ८, २†; ३[५]†[h]; ९, ५[४]†; ३, १०, ३[1]; ११, १[२j]; ४[२]; ४, ४, ८†[k]; ६, ४, २[२]†; ५, १; ६, ३†; ७, ३[४]†; ¶५, १, १, ४[l]; २, ५; ३, १[a]; ७, ४[a]; ८, ६[a]; २, १, ३[२]; ३, ६; ५, ४[४m,n]; ६, १; ७, ३[o]; ८, ४[२p]; ७[q]; ९,

[a]) लक्षणे कप्र. द्र. ।

[b]) आनन्तर्यं इति भा., तृतीयार्थ इति K. । सप्तम्यर्थसामान्येऽथवा वक्तव्यः कप्र. अनुपदमोषध्यादिषु पश्वादीनां प्रतिष्ठापनात्मकाच्छ्रुतिलिङ्गात् । सर्वथाऽपि कर्मप्रवचनीयतामात्मनस्तु न जहातीति । अनु-सं√तन् इत्येवं वितथाऽनुमानीव प्रतीयमानः MW. चिन्त्य एव स्यात् ।

[c]) लक्षणे कप्र. (वैतु. भा. अनन्तरपर्यायं स्वतन्त्रम् अव्य. इति) ।

[d]) अनु, आतिष्ठत > सपा. काठ ३,९ अन्वातिष्ठथ इति, मै १,३,१ क २,१६ अन्वातिष्ठत इति पाभे. ।

[e]) लक्षणे कप्र. (तु. टि. मा १२,१७[४]; वैतु. सा. अनु··· आततान इति) ।

[f]) तु. टि. अनु√दद् > अनु··· ददन्ते ।

[g]) तु. टि. अनु मा १२,५[४]; वैतु. मै २, ७,८[४] अनु-वि√क्रम् > अनु-विक्रमस्व इति ।

[h]) पाभे. अधि काठ १६,१५ द्र. ।

[i]) स्वार्थप्रधानम् अव्य. । अनु, ध्यायन् > सपा. मा १४, ३० अनुध्यायन् इति पाभे. ।

[j]) इह अनुसंचरन्ती इति पदं ब्रुवाणः सा. चिन्त्यः । एकस्मिन् पदेऽनेकस्वरानुपपत्तेः । अतः सप्तम्यर्थपर्यवसानके योनिम् इति लक्षणे कप्र. प्रथमः अनुः । अथ ऋतस्य पन्थामनु इत्यत्र तृतीयार्थे वा लक्षणे वा द्वितीयः अनुः कप्र. एव । ऋतस्य मार्गेण वा मार्गमुद्दिश्य वाऽऽगमनमात्रस्योपसां विवक्षितत्वात् । कुतः । उच्यते । अनुपदं ज्योतिषा त्रयाणां घर्माणामन्वागमनस्य श्रूयमाणत्वात् । आगमनमेव अनु अन्वागमनस्योपपन्नत्वात् (तु. रेतः शौ ८, ९, १३) । एवमस्यां कण्डिकायां त्रयो अनवः भवन्ति । तेषां द्वौ कर्मप्रवचनीयावादिमौ चरमस्तु गतिरिति विवेकः । अन्यथैवाभिप्रयन्तौ सा. K. चोक्तदिशा चोद्यौ भवतः (तु. टि. सस्थ. अन्वा [नु-आ] √गा > अनु···आगुः) ।

[k]) इहेत्थंभूतलक्षणे वा हेत्वात्मकलक्षणे वा कप्र. द्र. । बाह्वृचे तु गतित्वमुपागतः (तु. ऋ.) । अनु, शुक्रशोचिषः > सपा. ऋ १, १२७, १ मा १५, ४७ का १६,५, २९ काठ २६, ११; ३९, १५ शौ २०, ६७, ३ अनुवृष्टि शोचिषा इति पाभे. ।

[l]) तृतीयार्थे वा हेत्वर्थतात्पर्यको वा कप्र. द्र. ।

[m]) लक्षणे कप्र. । अनुत्सृजति[२] इति अनुपर्यावर्तन्ते[२] इति च द्व्युपसृष्टं द्विस्वरं च योगं पश्यन्तौ PW. MW. चाऽयथार्थदर्शिनौ भवतः । नाउ. टि. अपि च द्र. ।

[n]) अनु, उत्सृजति > सपा. मै ३, २,४ अनूत्सृजन्ति इति, अनुपर्यावर्तन्ते इति च पाभे. द्र. ।

[o]) वैतु. तै ५, २, ७, २ यत्रत्याद् अनु-उप√धा इति योगादिहत्ये पृथक्कृताऽनुके प्रयोगे सूक्ष्मेक्षिकयाऽवश्यं विशेषः कश्चन भवति । तदपश्यन्तः MW. K. प्रभृ. चिन्त्याः ।

[p]) एकतरत्र गतिमदङ्गिरोभिः प्रसर्पतः पुरोडाशस्य केवलं गच्छन्तमनुगच्छति इत्याकारकः पौर्वापर्यात्मकोऽनुसार्यानुसरणविशिष्टः संबन्धो न भवति । किन्तु स्वर्गं यतोऽङ्गिरस उद्दिश्य (=तत्-सहभावप्राप्तये) स्वभावतश्चलितुमशक्नुवन्नपि कूर्मत्वमुपगच्छन् पुरोडाशः आत्मनः प्रसर्पणमकारयदिति तात्पर्यात् कूर्मीभूतस्य पुरोडाशस्योद्देशविशेषसाधनतामुपगतायाः प्रसर्पणक्रियायाः श्रावणे मन्त्रस्वारस्यात् कप्र. अनुः न गतिरित्यभिसन्धिः । अन्यत्र लक्षणे कप्र. (तु. टि. तै ६,५,११,१ ; वैतु. उभयत्र PW. प्रभृ. अनु-प्र√सृप् च अनु-परा√भू च) ।

[q]) तृतीयार्थे (पा १, ४, ८५) इति चोद्यमानाग्नेर्वेदिप्रवेशे करणं समर्पयितुमिष्टं द्र. । उलूखलमुपधेयमिति विधिर्भवति । नाभिर्हि तद् अग्नेश्चीयमानस्य भवति । तदुपधाने सति स्वनाभ्येवासावग्निर्वेदिं प्रविशति । तदनुपधाने स्वनाभिमपश्यन् यजमानस्य प्रामादुकस्य नाभ्या द्वाराऽसौ वेदिप्रवेशं कुर्वाणस्तं विहृणीयात् । मैवं भूदित्युपधेयमुलूखलमिति श्रुत्यर्थो भवति । अथवाऽधिकरणात्मकः सप्तम्यर्थोऽभिप्रेतः स्यात्तद्वचनश्च कप्र. द्र. (तु. मै ३, २, ७ काठ २०, ७ क ३१, ९ यत्र नाभि- इत्यस्य स१ श्रूयते) । उभयथाऽपि नाभिपदार्थस्य मुख्यलक्ष्यत्वेन समर्पणे सति स्पष्टे प्राकरणिके

५[a]; ३, १, ३[b]; ४, ७[c]; ५, २[d]; ७, ४[e]; ४, २, १; ६, २; ७, १$; ६[f]; १०, ३[g]; ५, २, १[f]; ५, २[h]; ७, ५[g]; १०, ६[g]; ६, ४, १[i]; ७, ४, ४$; ७, १$[j]; ९, २[k]; ¶६, १, ५, ३[l]; ४[२]; ८, १[m]; ९, ५[n]; ११, २$[o]; ३, ४, ७[p]; ५, ३$[q]; ७, १; ८, ४$[r]; ४, १, २[२]; २, ६[s]; ५, १[e]; ६, ३[t]; ७,

तात्पर्यं यदेतदपश्यन्तः केचिद् अनुप्रविशति इत्येकपदात्मकं द्विस्वरं योगं प्रतिपद्यन्ते (तु. MW. K.) तन्नाऽऽद्रियेतेति दिक् ।

[a]) तु. टि. अनु तै ५, २,५,४ । अनु, उत्सृजति > सपा. मै ३, २, ७ प्रमृ. अनूत्सृजति इति पाभे. ।

[b]) तृतीयार्थे कप्र. (तु. K. ; वैतु. भा. लक्षण इति) । अनु, आवरीवर्ति > सपा. मै ३, २, ९ अन्वावरीवर्ति इति पाभे. ।

[c]) अर्क्यम् (= अर्कभवं) साम शस्त्रं चाऽनुलक्ष्याऽर्कं तदाधारेण विधा विधीयत इत्येव श्रुतिस्वारस्यं स्यात् (तु. तै ४, ३, ८, ९ च तदुपरि सा. भाष्यं च [K. टि. च]; वैतु. MW. K. च गतितया योजयन्तौ चिन्त्यौ भवतः) ।

[d]) प्रणुदितान् भ्रातृव्यान् उद्दिश्येत्येवंप्रकारकेऽर्थे कप्र. द्र. । अनु, प्रहरति > सपा. काठ २१, २ क ३१, १७ अनुविसृजति इति, मै ३, २, १० प्रहरति इति पाभे. ।

[e]) तृतीयार्थे कप्र. ।

[f]) लक्षणे प्रकरणस्य मुख्यं तात्पर्यमिति कृत्वा तदुद्वलनप्रयोजनः कप्र. (वैतु. भा. PW. प्रमृ. अनुप्राविशत् इति । ऐकपद्ये सति द्वैस्वर्यानुपपत्तेश्चिन्त्याः) ।

[g]) लक्षणे कप्र. ।

[h]) पश्चादर्थे अव्य. वा लक्षणार्थे कप्र. वा । प्रथमे कल्पे प्रथमायाः स्वयमातृण्णाया उपधानं कृत्वा (पश्चात्) प्राणनक्रियां कुर्यादित्यन्वयः स्यात् । द्वितीये कल्पे प्रथमां स्वयमातृण्णामुपधीयमानामनुलक्ष्य प्राण्यादिति संबन्धः । एवं चाऽन्यतरार्थकोऽनुरुत्तरयोर् उपधानयोरप्यनुवर्तयितव्यो भवति । ननु अनुप्राण्यात् इत्येका ह्युपसृष्टा क्रिया स्यादिति । नेति । कथम् । यावता सकक्षे उत्तरे व्यन्यात् इति च अपान्यात् इति चोभे अपि क्रिप. अद्व्युपसृष्टे सती प्राण्यात् इति क्रियाऽपि तदन्व् अद्व्यपसृष्टेत्युपक्षिप्तामिति । अन्यथात्व ऐकपद्ये सति द्वैस्वरी नोपपद्येत ।

[i]) अनु, प्रजायन्ते > सपा. काठ २२, ६ प्रमृ. अनुप्रजायन्ते इति पाभे. ।

[j]) अनु, प्रेहि > सपा. मा १८, ५८ का २०, ४,१ माश ९,५,१,४५ अनुप्रेत इति पाभे. ।

[k]) लक्षणे कप्र. । यत्राग्निर्भवति तत्रैव पशव उपतिष्ठन्त इत्यर्थः । अनूपतिष्ठन्ते इति सकर्मको द्व्युपसृष्टो योग इति यद् भा. च K. चोष्टस्तन्न । तदभिप्रेतस्य पश्चादर्थस्य प्रकरणेऽनभिप्रेतत्वाद् ऐकपद्ये सति द्वैस्वर्यस्याऽनुपपत्तेश्च (वैतु. मै ३, २,३; ७; ९,२; ४, ७,९ यत्र लक्षणार्थस्याऽप्राकरणिकत्वात् साकल्यार्थस्य च स्वारसिकत्वादिहाऽसंगतः पराभिप्रायः संगतो भवति) ।

[l]) तु. टि. अनु तै ३,४,८,३ ।

[m]) लक्षणे कप्र. । निष्क्रमणक्रिया पदषट्कपरिमितत्वस्यैवाऽर्थस्य न त्विहाऽनुनिष्क्रमणार्थस्य प्राधान्येन विवक्षितत्वात् । अत एव अनौ पृथक् स्वरोऽप्यत्रैव ज्ञापको भवेत् (वैतु. भा. MW. K. प्रमृ. चिन्त्या गतित्ववादिनः [तु. टि. अनु-नि √क्रम् > अनुनिक्रामति इति]) ।

[n]) सप्तम्यर्थे कप्र. (तु. ततः किञ्चिदिव प्राक् श्रूयमाणं सर्वासु ... उप इति ; वैतु. भा. प्रमृ. अनुसंचरति इति योगमनुजानानाश्चिन्त्याः स्युः । अपलक्षणद्वैस्वर्यापत्तेः) ।

[o]) अन्तरिक्षमुद्दिश्य वाऽन्तरिक्षेण वाऽयनस्य विवक्षितत्वसंभवाल्लक्षणे वा तृतीयार्थे वा कप्र. ।

[p]) आनन्तर्यार्थे स्वार्थप्रधानम् अव्य. ।

[q]) छन्दोभिरेवैनं प्रजनयतीत्यानुपदिकाल्लिङ्गात् तृतीयार्थे कप्र. इति सिद्धमिव । वितथवादी MW. चिन्त्यः ।

[r]) पाभे. अनु तै १,३,८,२ द्र. ।

[s]) लक्षणे कप्र. । न त्वनुपदम् अनन्ववचार- इति शब्दश्रवणादिहापि अनु-अव √चर् इति भ्रमः स्यात् । इह लक्षणार्थस्यैव विवक्षितत्वात् । तस्मिन् शब्दे च हेतुमानिति वाऽऽनुषङ्गिक इति वा अनोः अर्थः ।

[t]) यतः प्राणो न्यृतस्तत एवाऽपानोऽपि न्यृच्छेत् इत्यस्यार्थस्य विवक्षातो लक्षणे कप्र. इत्येव युक्तम् । अतः K. अत्र वैस्पष्ट्यमर्हेत् ।

१[a]; १०, ४[b]; ५, ३, १; ३[२c]; ८, १[३b]; ३[d]; १०, १[e]; ११, १[f]; २[३g]; ६, ४, २[h]; ६, १[२g]; ¶७, १, १, ५[२]; ५, ५[i]; ६, ८[j]; ७, ४[k]; २, ४, १[l]; ७, १[२D]; ८, २; ४; ५; ३, ७, २; ४, ४, १[m]; ८, ३[१]; ९, १[n]; ११, ४[३l]; ५, ६, २[२o]; २५, २¶[e]; मै १, १, ७[e]; २, ६[p]; ११†; १५[q]; १६[r]; ३, ११†[s]; ३३†; ३८[b]; ३९[t]; ४, ७[u]; ५, १†; ५[२]†; ६†; ६, २; ८, ५¶[u]; ९[५v]; †¶; ९, ६¶[w]; १०, ३†; १७[२]¶[x]; ११, २[२]†; २, १, १०¶[y]; २, २[२]¶; १०; ४, ७†; ५, ३¶[y]; ७[२]¶[z];

[a]) 'वाचमनु वाचा तया सहायभूतया' इति कृत्वा तृतीयार्थे कप्र. द्र. ( वैतु. K. प्रभृ. अनुप्रयन्ति इति योगं मन्वानाः चिन्त्याः) ।

[b]) तृतीयार्थे कप्र. ।

[c]) गतित्वकर्मप्रवचनीयत्वाऽन्यतरसद्भावापेक्षया स्वार्थ-प्रधानम् अव्य. इत्येव साधीयः द्र. । अनु, प्रपद्येत[२] इति सतः पाठस्य स्थाने सपा. मै ४, ६, ७ अभिप्रपद्यते, अभीयात् इति, काठ २८, २ क ४४, २ अभ्यायुकः स्यात् इति च पाभे. ।

[d]) सप्तम्यर्थे कप्र. ।

[e]) लक्षणे कप्र. ।

[f]) लक्षणार्थस्यैव प्राकरणिकत्वाद् अनुः अत्र कप्र. भवति । परा√भू इत्यस्य चाऽकर्मकं वृत्तं भवति ( वैतु. MW. यः अनु-परा√भू इति कल्पयन् सकर्मकं क्रिप. इच्छति) ।

[g]) हेत्वात्मके तृतीयार्थे कप्र. (तु. भा.; वैतु. PW. प्रभृ. अनु···परा [आ वा] भवन्ति इति) ।

[h]) तु. टि. अनु तै ५,७,९,२ ।

[i]) अनुक्रमार्थेऽव्ययमित्यभिप्रैति भा. । अथापि खलु अधि-परि-वत् (तु. पा १, ४, ९३) अनुप्रयुक्तवि-भक्त्यर्थाऽनुवादकतामात्रेण सार्थकोऽप्यनर्थक इव स्याद् अन्यथा सिद्धेः ।

[j]) लक्षणे कप्र. । एनमनुलक्ष्याऽस्य विषय इति यावत् ( वैतु. भा. आनन्तर्यार्थे अव्य. इति ) ।

[k]) तु. टि. अनु तै १,७,६,३ ।

[l]) तु. टि. अनु तै ३,४,८,३ ।

[m]) प्रजापतिकर्तृकस्तुतिप्रयोगाऽभावे देवान्तरकर्तृक-तदनुसारित्वप्रयोजितस्तुत्यनुप्रयोगाऽसंभवाच्चाऽपलक्षण-द्वैस्वर्यप्रसङ्गाच्च गतिभावेन अनुः उत्तरां प्र-पूर्वां क्रियां नानुप्रवेशयितव्य इति ।

[n]) तृतीयार्थे कप्र. । तत्र सत्रे केशवपनं सशिखं कुर्या-दिति विधेरभिप्रेतत्वात् । अतः सशिख-विशिख-वपनवि-वेकाऽननुदर्शी K. चिन्त्यः ।

[o]) एकतरत्र तृतीयार्थे कप्र. (वैतु. MW. अनुप्राणन्ति इत्येवं योगमुशंश्चिन्त्यः) ।

[p]) तु. टि. अनु मा ४,२८ ।

[q]) लक्षणे वा तृतीयार्थे वा कप्र. ।

[r]) पाभे. अनु तै १,३,८,२ टि. द्र. ।

[s]) पाभे. अधि काठ ४, ३ टि. द्र. ।

[t]) पश्चादर्थे अव्य. द्र. ।

[u]) तु. टि. अनु मा २,२६ । अनु, पर्यावर्तते > सपा. काठ ३२,५ अन्वावर्तते इति पाभे. ।

[v]) तु. टि. मा ११, १२; १७[४] । अन्यत्र 'यज्ञमनुलक्ष्य दम्पती अघ्राताम्' इत्येवं प्रकरणसंगत्या कप्र. द्र. (वैतु. MW. अनु···अघ्राताम् इति) ।

[w]) अनु, मन्येत>सपा. काठ ९,१४ अनु, स्यात् इति अनु, भवति इति च पाभे. ।

[x]) एकतरत्र तान् अपिपद्यमानान् अन्वपिपद्यते इत्यत्र तावद् अनुः गतिर्गतौ (पा ८,१,७०) इति गतिलक्षणं निपातमनुभवन्नपि सजातीयप्रयोगान्तरसाम्येन सस्वरः कप्र. स्यादित्यपेक्षा बलवतीव भवति । कदाचिन्मूलतो विद्यमानः स्वरः प्रमादाच्च्युतिं गमित इतीव चोत्प्रेक्ष्यते । अन्यतरत्र अनुपदमेवोपरिष्टात् तान् प्रजायमानान् अनु प्रजायते यत्र अनुः इति पृथक् कप्र. प्रजायते इति च पृथक् क्रिप. भवति । सपा. काठ ३६,११ अनुप्रजायते इति च पाभे. ।

[y]) तु. टि. अनु तै १,७,४,२ ।

[z]) एकतरत्र यत्तु मुपा. अनुवर्षति इत्येवमुपसृष्टमा-ख्यातं शिश्रावयिषितं भवति तदसङ्गतत्वाच्चिन्त्यं द्र. । अन्यतरत्र अनु, प्रजायन्ते > सपा. काठ ११,२; १३,८ अनुप्रजायन्ते इति पाभे. ।

¶अनु √ध्यै, >ध्या, अनुध्यायति ते ३,१,३, १; अनु···ध्यायति काठ ६,४;८[a]; क ४,३;७; अनुध्यायन्ति काठ ३०,९.

अनु-ध्या[b]- -ध्याः शौ ७, ११९, २; पै २०,१७,६.

¶अनु-ध्यायिन्[c]- -यिनम् मै १, ८,४; -यी मै १,६,४; ५; ११; ८,५. [°यिन्- अन्°].

अनुध्यायिनी- -नीः मै ३, ६, ६.

अनु √ध्वस्, अनुदध्वसे[d] मै १, ७, १; काठ ८,१४; क ८,२.

†अनु √नश् (व्याप्तौ) अनु··· आनट्[e] ऋ १, १६३,[७; १०, ७, २]; मा २९, १८; का ३१, ३, ७; तै ४, ६, ७, ३; काठ ४६,३.

अनु √नह्

¶अनु-नद्ध- -द्धः मै ४,५,७.

¶अनु-नद्धि[f]- -द्धयै मै ३, ९, ४; काठ ३०,५.

¶अनु-नि √क्रम्, अनुनिक्रामति[g] काठ २४,४[२].

अनु √निक्ष्, अनुनिक्षन्ति शौ ९, १३,१५; पै १६,७५,५.

अनु-नि √धा > ¶अनुनि-हित- -ताः मै ४,६, ७.

अनु-नि √भञ्ज् > ?अनुनि-भञ्जन[h]- -नम् खि ५, १५, ११; शौ २०,१३१,२.

¶अनु-नि √युज्, अनुनियुनक्ति काठ १०,११; ११,१; १३, ३; २१, १०[1]; २९, ९[ii]; १०[२]; क ४६,३[१].

अनु-निर् √दह्, अनुनिर्दह शौ ९,२,९; पै १६,७६,८.

अनु-निर् √द्रु, अनुनिर्द्रव पै १५, २३,८.

¶अनु-निर् √वप्, अनुनिर्वपति काठ ८, ८; १० ; १०, १; क ७,३; ६; अनुनिरवपन्[j] काठ ८, १३; क ८,१; अनुनिर्वपेत् मै १, ६,८; काठ ८, ८; १०[२]; ११,५; क ७,३; ६[१].

अनुनिरु(र्-उ)प्य[k]- -प्यम् काठ ८,८[२]; -प्याणि क ७,३[२].

अनुनिर्-वाप्य[l]- -प्यः तै २, ५, ३, १;४, १; -प्यम् तै २, ५, ३,१.

¶अनु-नि √(सि>)षिच्

अनुनि-षिञ्चत्- -ञ्चन् काठ ३६,४[m].

¶अनु-नि (स्>)ष् √क्रम्

अनुनिष्-क्रम्य मे १,६,१०.

अनुनि-हित- अनु-नि √धा द्र.

अनु √नी, अनु···नयः ऋ ४, ३०, १९.

†अनुनेषि ऋ १, ९१, १; ६, ४७, ८; मा १९, ५२; का २१, ४, २; तै २, ६,१२, १; मै ४, १०, ६; काठ २१, १४; शौ १९, १५, ४ ; पै ३, ३५, ४; १९,४६,४; अनुनेषथ>था ऋ ५, ५४, ६; अनु···नेषथ>था ऋ ८,४७,११.

a) अनुम् अगति मन्यमानः SIM. उपेक्ष्यो भवति ।

b) =चिन्ता- । गस. उप. स्त्रियां भावे अङ् प्र. (पा ३, ३,१०६)। ततः टापि कृत्-स्वरः प्रकृत्या ।

c) गस. णिन्यन्ते कृत्-स्वरः प्रकृत्या ।

d) सपा. तै १,५,३,२ अनुदध्वसे इति पाभे. भवति । तेन तत्र कप्र. अनुः इति कृत्वा पृथिवीम् इत्यनेन नापू. अस्य संबन्धः शाखाभेदेन व्यवस्थेयः । तद् यथा । मै. प्रभृ. अनु √ध्वस् इति सकर्मको धातुर्भवति । तै. तु √ध्वस् इत्यकर्मको धातुरुपसृष्टो भूत्वा सकर्मकतां नोरीकरोति ।

e) आडागमः (तु. वि √वृ>वि···आवः) ।

f) भावे क्तिन्नन्ते गतिस्वरः (पा ६,२,५०)।

g) पाभे. अनु मे ३,७,६ द्र. ।

h) पाठः? शंपा. °नि° इति स्वरः प्रादर्शि । तत्र यनि. प्रथमः शोधः गत्युत्तरकृत्-प्रकृतिस्वरः (पा ६,२,१३९ [तु. खि.])। यच्चोभयत्र (खि. च शौ. च) अनु° इत्येवं सुपा. भवति, तदसाधु स्यात् । पूर्वोत्तरवाक्यसाध्वन्वयार्थं लक्षणार्थस्य कप्र. इहाऽवसरः द्र. । ततश्च अनुः इति नाउ. रूपाद् वियुज्य पृथक् श्राव्यतामित्युभयत्र द्वितीयः शोधः द्र. । यत्तु RW. अनोः स्थाने √कृ>कर्त इति शोध-माहतुस्तस्य तावतैव चाऽनवसरत्वं भवतीति किमु वक्तव्यम् ।

i) सपा. एकतरत्र पाभे. यक्र. मै ३, ३, १०; ४,७,८ अनुक्राम्, °काः टि. द्र. । अन्यतरत्र सपा. तै ५, ४,७, ७ अनुबध्नाति इति, मै. [गतपूर्वयोः स्थ.] नियुनक्ति इति च पाभे. ।

j) सपा. तै १,७,३,३ अन्वाहरन्त इति पाभे. ।

k) गस. ण्यति प्राप्ते क्यप् प्र. वा उसं. (पा ३, १, १२६ [तु. नाउ.]) संप्रसारणं च द्र. ।

l) गस. ण्यदन्ते तित्-स्वरः प्रकृत्या ।

m) सपा. मै १,१०,९ अनुषिञ्चन् इति, तैब्रा १,६, ३,९ विषिञ्चन् इति च पाभे. ।

अनु···नीयते पै ६,६,६.

अनु√नु>नोनु, अन्वनोनवुः ऋ १,८०,९.

अनु-नोनुवत्- -वतः ऋ ८, ९२, ३३.

अनु(न्-उ)न्मदित[a]- -तः शौ ६, ११९, १-४; पै[b] ५, १७, ६;७.

¶अनु(न्-उ)न्माद[a,c]- -दाय तै ५, ५,१,२; ७,३,१०,४; मै ३,१, १०[2]; काठ १९,८.

¶अनु(न्-उ)न्मुक्त[a,d]- -क्तः मै ३, ७, ८; -क्तम् मै ४, ६, २[e]; -क्ताः मै ३,९,७.

?¶अनु(न्-उ)पक्रामत्[f]- -मन्तः, -मन्तौ[f] क ५,४.

अनु(न्-उ)पक्षित[a]- -तम् ऋ ३, १३, ७; १०, १०१, ५; मै ४, ११, २; काठ २, १५; -तौ[g] शौ ६, ७८,२; पै १९,१६,१०.

¶अनु(न्-उ)पगत- -तम् काठ ११,२[h].

¶अनु(न्-उ)पग्रथ्य[a,i] तै ६, १, १०,४.

¶अनु(न्-उ)पजीवनीय[j]- -यः तै ५,४,४,३; -यानि तै ५, १, ६,२.

¶अनुपजीवनीय-तम[k]- -मः मै ३, १,३[l]; ५.

अनु√पत् (गतौ), ?अनुपातयति[m] पै ५,३३, ७[n]; अनुपातय शौ ६.१३४,३; पै ५,३३,६.

अनु-पथ[o]- -थाः ऋ ५, ५२, १०.

अनु√पद्, ¶अनुपद्यते मै ३, १, ९; काठ ३०, ४; क ४६, ७; अनुपद्यताम् शौ ६, २६, २; ¶अन्वपद्यत मै ४, ८, १[2]; ¶अनुपद्येत तै ७,१,४,३.

अनु-पद्[p]- -पत् मा १५, ८; का १६, २, ५; -पदे मा १५, ८; का १६,२,५.

अनु-पदस्(:) काठ ७,८.

¶अनु(न्-उ)पदस्यत्[a,q]- -स्यन्[r] तै ५, २, ९, २[r]; क ३१, ९; -स्यतः[s] पै ३,२५,८;९.

अनु(न्-उ)पदस्वत्[t]- -स्वत् काठ २०,७[r]; -स्वतः शौ ४,११,९; १२.

अनुपदस्वती[u]- -तीम् शौ २, ३६, ५[v]; ७,८५, २; पै २,२१,५.

¶अनु(न्-उ)पदासु(क>)का[w]- -का तै ६,१,७,८;७,३,३,२.

¶अनु(न्-उ)पद्रष्टृ[a]- -ष्टा मै ४, ६,९; काठ २८,६; क ४४,६.

¶अनु(न्-उ)पयामगृहीत[a]- -तः, -तम् मै ४,५,५.

¶अनु-परा√गम्, अनुपरागच्छति अनुपरागच्छेत् मै १,८,९.

¶अनु-परा√पत्, अनुपरापतति[x] काठ २६,३; क ४१,१.

---

[a]) तस. नञ्-स्वरः।

[b]) तु. शौ.; वैतु. मूको. BKA. अनु Renou ⌊वाक् ५,७६⌋ अनुन्मुदितः इति पाठश्चिन्त्यः स्वोपज्ञार्थ-विरोधात्।

[c]) उप. उद्√मद्+भावे घञ् प्र.।

[d]) उप. उद्√मुच्+क्तः। मुपा. °नु° इति स्वर-क्षेपः।

[e]) सपा. काठ २७, ५ क ४२, ५ अविमुक्तम् इति पाभे.।

[f]) पाठः? अन(न्-अ)पक्रा° इति शोधः (तु. सपा. काठ ७,५)।

[g]) सपा. आपमं १,८,७ अनपेक्षितौ इति पाभे.।

[h]) पाभे. अनभिगतम् मै २,२,७ द्र.।

[i]) उप. उप√ग्रथ्+ल्यप्।

[j]) तु. टि. अनवदानीय-।

[k]) तमपः पित्वान्निघाते स्वरेऽविशेषः।

[l]) सपा. काठ १९, २ जीविततमः इति, क २९, ८ जीवितृतमः इति पाभे.।

[m]) प्रकरणतः °यन् इति वा °यामि इति वा शोधः द्र.।

[n]) सपा. शौ ६,१३५,१ आददे इति पाभे.।

[o]) विप. (⌊अनुकूलमार्ग-⌋ मरुत्- ⌊तु. सा. GW. प्रमृ.; वैतु. वें. नाप. इति⌋)।

[p]) विप. (इष्टका-)। गस. क्विबन्ते कृत्-स्वरः प्रकृत्या (पा ६,२,१३९)।

[q]) उप. <उप√दस्।

[r]) सपा. अनुपदस्यत् < > अनुपदस्वत् इति पाभे.।

[s]) तु. मूको. BKA. Renou ⌊वाक् ५,७६⌋; वैतु. शौ. पाभे. अनुसृत्य र. °स्वतः इति?

[t]) विप. (⌊क्षयरहित-⌋ अन्न-, अनडुहो-दोह-)। (म>)वतुपो भत्वे (पा १, ४, १९) नित्त्वान्निघाते स्वरेऽविशेषः।

[u]) विप. (⌊क्षयरहिता-⌋ नौ-, रयि-⌊स्त्री.⌋)।

[v]) सपा. मंत्रा २,५,१४ अपरिवादिनीम् इति पाभे.।

[w]) विप. (⌊क्षयरहिता-⌋ वाच्-)। सस्व. कृते अ-क्षोधुक- द्र.। उप. उप√दस्+उकञ् प्र.।

[x]) सपा. मै ३,९,३ अन्वपक्रामति इति पाभे.।

¶अनु-परा √हा(त्यागे) > अनुपरा-हाय[a] मै १,६,१२.

¶अनु-परि √क्रम् > अनुपरि-क्रामम्[b] तै ५,४,३,४[२]; ५,१०, ६; मै ४,३,४.

¶अनु-परि √चर् > अनुपरि-चारम्[b] तै ५, ४, ५,३; काठ १२, १; २०, ५; क ३१,७.

¶अनु-परि √लिख्, अनुपरिलिखति मै ३,७,७.

¶अनु-परि √वृत् > वर्ति, अनुपरिवर्तयेयुः मै १,६,६.

¶अनु-परि √षि(<सि)च्, अनुपरिषिञ्चति मै ३,९,३

¶अनु-परि √हृ > अनुपरि-हारम्[b] तै ५, ३, १, ३; १०, १; ४; काठ २०,८; १०; क ३१, १०; १२.

अनु-परी (रि √इ), अनुपरियन्ति शौ १५,१७,८.

¶अनु-परे(रा √इ), अनुपरैति मै ४, १,८; काठ ३१,६.

¶अनु-पर्या(रि-आ) √वृत् > वर्ति, अनुपर्यावर्तन्ते मै ३,२,४. अनुपर्यावर्तयति मै ३,९,३.

अनुपर्या-वर्तमान- -नम् मै ३, १०,१.

¶अनु(न्-उ)पलाभ[c,d]- -भाय तै ६, ३,२,१; २.

अनु-पलाल- पलाल°.

अनु √पश्, ¶अनुपश्यति तै २. ५. ६, १; ६, २, १; ६,१, ५, २[e]; ३[२]; अनुपश्यति मा ४०, ६; का ४०, १, ६; मै १, ५, १२; अनुपश्य शौ १८, ४, ३; ¶अन्वपश्यत् तै ५, १, ४, ३; मै २, ३, ४$[f]; ३, १, १; ३; ४, ८, ३[g]; काठ ११, ७$[f]. १९,२; क २९,८; अन्वपश्यत तै ५, १, ४, ४¶; †अनु···अपश्यत् ऋ १, १६४, ९; शौ ९, १४, ९; पै १६, ६६, ९; ¶अन्वपश्यन् तै २, ५, ११, ३[२]; ६,३,७,१;२; मै १,५, १२; ३, ७, १[३]; काठ ७, १०; ३७, १६[१]; क ५, ९; पै १३, ५, १९$; अनुपश्येत ऋ १०, ११७,५; अनुपश्येत् काठ ३७, १६.

अनु-पश्यत्- -श्यतः मा ४०, ७; का ४०,१,७.

अनु-पश्यमान- -नः, -ना: मै २, १३ २२; काठ ४०,१२.

अनु(न्-उ)पसेचन[h]- -नः शौ ११, ३,२४; पै १६,५४,१०.

अनु-पस्पशान- अनु √स्पश् द्र.

¶अनु(न्-उ)पहूत[c]- -तः काठ ११, १[१]; -तेन मै २,४,१; काठ ११, १;१२,१०.

¶अनु(न्-उ)पहूयमान[c]- -नः मै २, २,१३[१].

अनु √पा(रक्षणे), अनुपाहि पै २, ८०,१.

¶अनु(न्-उ)पाक्त[j]- -क्तः तै २, ६,३,३[२].

*अनु √पालि[k] > अनु-पालय(त्>)न्ती[l]- -न्ती शौ १८,३,१.

अनु √पिश्, अनु···पिपेश शौ १४, १.६०[m]; पै १८,६,८.

अनु √पुष्, अनुपुष्यास्म[n], अनु-(पुष्यास्म)[n] मा २६,१९; का २८,११,१.

अनु √पू, अनु···पवन्ति पै १४,१, १७.

†अनु-पूर्व[o]- -र्वम् ऋ १, ११७, ३;

---

a) गस. ल्यबन्ते कृत्-स्वरः प्रकृत्या ।

b) णमुलन्तम् । सस्व. कृते नापू. टि. द्र. ।

c) तस. नञ्-स्वरः ।

d) उप. उप √लभ् + घञ् प्र. ।

e) सपा. काठ २३, ८ अनुसमपश्यताम् इति, मै ३, ७,१ अनु···समपश्यन् इति पाभे. ।

f) सपा तै २,३.१०,२ पुर्यपश्यत् इति पाभे. ।

g) सपा. काठ २८, ४ क ४४, ४ अन्वविन्दत् इति पाभे. ।

h) विप. (ओदन-) । बस. अन्तोदात्तः । उप. उपसेचन- (क्षीराज्यदध्यादि-पदार्थ-) । करणे ल्युट् प्र. ।

i) सपा. अनुपहूतः <> अनुपहूयमानः <> तै २, ३,२,६;६,५,११,२ अभीपद्दा इति, मै २,४,१ काठ १२, १० प्रासुहा इति पाभे. ।

j) विप. ( ⌊अञ्जन-रहित-⌋ अक्ष-, पुरोडाश-) । तस. नञ्-स्वरः । उप. <उप √अञ्ज् ।

k) व्यु. कृते तु. टि. √पा(रक्षणे) > पा- > पा-ल- > √पालि ।

l) गस. शत्रन्ते कृत्-स्वरः प्रकृत्या ( पा ६, २, १३९) ।

m) अनु मध्यतः इतीव योगं पश्यन् कप्र. अनुः इति कृत्वा यद् W. व्याचष्टे तन्न । तसि-प्रत्ययान्तेनोक्तस्य योगस्याऽयुक्तत्वात् ।

n) सपा तैत्रा ३,७,१०,२ आपश्रौ ९, १४, १ अनुराध्याम, अनु (राध्याम)[n] इति पाभे. ।

o) अस. साधारणः समासस्वरः । वा. किवि. द्र. ।

१०, १८, ५; ६; १३१, २; मा १०, ३२; १९, ६; २३, ३८$; का ११, १०, २; २१, १,५; २५, ७, ६$; तै १, ८, २१, १,५, २, ११, २; ७, ४, १०,१¶; मै १, ११,४; २, ३, ८; काठ १२, ९; १४, ३; ३४, १¶;३७ १८; शौ १२ २, २४; २५;२०,१२५,२; पै १७, ३२, ४;५.

अनुपूर्व-व(त्स>)त्सा[a]- -त्साम् शौ ९,५,२९.

अनु √(पॄ>)पृ, अनु···पृणन्ति[b] ऋ ८,४९,३; खि ३.१,३.

¶अनु(न्-उ)पेयमान,ना[c'd]- -ना काठ ११,३; -नाः मै २, २,७; -नानि काठ ११,३.

¶अनु(न्-उ)पोप्त[c'e]- -प्ते तै ६, ५, २, २; मै ४, ६, ६; काठ २८,१.

¶अनु(न्-उ)पोष्य[c'f] तै ३, ३,८, ३[g].

अनु-प्र √गा, अनुप्रगेष्म पै १६, ९२,६[h].

अनु-प्र √चित्, अनु···प्र···चेतयते[i] ऋ ९ ८६,४२.

¶अनु-प्र √जन् >जा, अनुप्रजायते मै ३, २, ९; काठ १०, ३; २०, १०; १२; २६, ७; ३६, ११[j]; क ३१, १२; १४; ४१, ५; अनुप्रजायन्ते मै १. १०,७;१३[२]; ४,५,१[२]; ६, ३[२]; काठ ६, ५; ११, २[k]; १३,८[k]; २२, ६[l]; २६, १; २७, २[१]; २८, २[l]; १०[८]; ३४, १[२]; ३६, २; ७[२]; क ४, ४$; ३४, १[l]; ४०, ४;४२,२[१]; ४३,२[l]; ४५, १[८]; अनुप्रजायन्ते मै २, ३, ७; ३,९,५.

अनु-प्र √ज्ञा,>जा,जिज्ञास, ¶अनुप्रजानात् काठ २३,८[२]; क ३६, ५[२]; ¶अनुप्रजानीयात्[m] काठ २६,६; क ४१,४.

अनुप्रज्ञेषम्[n] पै ३,३८,९; १६, ९८,७.

¶अनुप्राजिज्ञासन्त काठ २१, २;२३,८; क ३१,१७; ३६,५.

?अनुप्रज्ञपु पै ६,२२,१२.

¶अनु-प्रति √(स्था>)ष्ठा> तिष्ठ, अनुप्रतितिष्ठति[o] मै ३, १,५;३,१०;४,४; पै १७, २९, ९; अनुप्रतितिष्ठन्ति मै १,१०, ७; काठ ३६,१.

अनु √प्रथ्, अनुप्रथताम् तै ३, ३, १०, २; अनुप्रथन्ताम् मा ८, ३०; का ९,५,३; काठ १३,९.

¶अनु-प्र √दा(दाने) >अनुप्रदातृ[p]- -ता तै २,२,१,४; मै २, १,१[२]; काठ ९.१७[२].

अनु-प्र √पत्(गतौ)>पाति, ?अनुप्रपातय[q] पै ६, २२, १७; १९,३६,१७; ४७,८;२०, ५२, १०.

¶अनु-प्र √पद्, अनुप्रपद्येत तै ६, ५,३,३[r].

¶अनु-प्र √पा(पाने), अनुप्रपिबन्त मै १, १०, १८; काठ ३६, १३.

¶अनु-प्र √यम्(दाने)>च्छ्, अनुप्रयच्छति मै २, १, १[२s]; काठ ९,१७[२].

¶अनु-प्र √या, अनुप्रयान्ति काठ ९,

---

a) विप. (धेनु-)। बस. पूप. प्रकृतिस्वरम् (पा६,२,१)।
b) अनुपूर्तिश्च सरसो रचनानुपातिनी भवतीति द्र. ।
c) तस. नञ्-स्वरः । d) उप. <उप √ई (गतौ)।
e) उप. उप √वप् + क्तः प्र. ।
f) उप. उप √उष् (दाहे) >ओषि + क्त्वा > ल्यप् प्र. (तु. भा. K.) ।
g) सपा. गोब्रा २ ४.८ अनुपोष्य इति पाभे. ।
h) पाभे. अनुगच्छेम शौ ११,१,३६ द्र. ।
i) तु. वें. सा.; वैतु. PW. प्रभृ. अनुः कप्र. इतीवाऽऽतिष्ठमानाश्चिन्त्याः । द्युभिः इति हि तृ३ सत् कप्र. विनैव तद्योगजिजनयिषितार्थवाचकं स्यादिति कृत्वाऽन्यथा प्रसिद्धस्येव तादृशस्य योगस्याऽपार्थत्वात् ।
j) पाभे. अनु मै १,१०,१७ द्र. ।
k) पाभे. अनु मै २,५,७ द्र. ।
l) पाभे. अनु तै ५, ६,४,१ द्र. ।
m) सपा. मै ३,९,४; ४, ७, ५ अन्वारोक्ष्यन्ति इति पाभे. ।
n) सपा. शौ ९,५,१६ प्रज्ञेषम् इति पाभे. ।
o) यथेहाऽऽक्षेपविषयत्वं भवति तथा अनु मै ३, १, ५ इत्यत्रत्ये टि. उत्तरे कल्पे निदर्श्यमानं द्र. ।
p) गस. तृजन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,१६३;२,१३९)।
q) 'प्रपततो मृगान्' इत्यभिसंधाय अनोः गतित्वमास्थायि । अरण्योपलक्षणाऽधिकरणार्थविवक्षायां तु लक्ष्यमात्रे तात्पर्याद् अनुः कप्र. द्र. ।
r) सपा. मै ४, ६, ७ अभिप्रपद्यते, अभिप्रपद्यते इति, काठ २८,२[२] क ४५, २[२] अभिप्रपद्येयाताम् इति पाभे. । s) तु. टि. अनु तै २,२,१,५ ।

१७[२a]; क ४८,१५.

?अनुप्र-याण[b]- -णम् शौ ७, ७७, ६‡.

¶अनुप्र-याय[c] काठ ३५, १७; क ४८,१५.

अनु-प्र √युज्, अनुप्रयुङ्क्षे[d] शौ ११, २,१३; पै १६, १०५, ३; अनुप्रयुङ्क्ताम् शौ १२,१,४०; पै १७,४,८.

अनु-प्र √वह् > ‡अनुप्रवोढुम्[e] शौ १९, ५९,३; पै १९,४७,६.

अनु-प्र √विश्, अनुप्रविशतु पै ८,२०, ४; अनु ... प्रविश[f] शौ ६, ११२, २; पै १९, ३३, १२; ¶अनुप्राविशत् मै ३, ४, ८; काठ २२, ७; ३६, १[g]; क ३५, १; पै १६, ८६, २[h]; अनुप्राविशताम् मै २, ५, ९¶; अनुप्राविशन्[i] पै १६ ८६, ९; १०; ८७, १; २; ४; ७; ८८, ४-६; अनुप्राविशथाः शौ १०, १०, २२; पै १६, १०९,२.

अनुप्र-विष्ट- -ष्टा पै १, १०६, २; -ष्टाः शौ ४, २.६, ५‡[j]; पै ५,६,१.

¶अनु-प्र √वृत् > वर्ति, अनु ... प्रवर्तयन्ति तै ३,१, ३,१; ६.३, २,३.

अनु-प्र √सृ > सारि, अनु ... प्रासारयन्त[k] ऋ १०,५६,५.

अनु-प्र √सृज्, अनुप्रसृज्यते पै १६, १३५,१०[l].

¶अनु-प्र √हृ, अनुप्रहरति काठ ६, ८[२]; २५,५; क ४, ७[२]; ३९, २; अनुप्रहरेत् मै १,८,७.

अनु-प्रा (प्र √अ)ण्, ¶अनुप्राणन्ति मै ३, ९, ३; अनुप्राणन्तु[m] मा ४, २५; का ४, ८, ४; मै १, २,५; ३,७, ४; ४ २,५; काठ २. ६; २४, ५; क १, १९; ३७, ६; पै २०.४, ६; अनुप्राण मै ४,२,५; अनुप्राणिहि[m] मा ४,२५; का ४,८, ४; काठ २.६; पै २०,४,६[n].

¶अनु-प्रा (प्र √अ)स्(क्षेपणे), अनुप्रास्यति मै ३, १०, १[२].

?अनुप्रास्य[o] पै १५,१२,११.

¶अनु √प्री, अनुप्रीणाति मै ३, ९,८[p].

अनु-प्रे (प्र √इ [गतौ]), अनुप्रायाथ मै ३,७, १

---

a) तु. टि. अनु (काठ ३५,१७[२]) यदन्वापातिके सत्यपि प्रकरण-साम्ये किञ्चित् सूक्ष्मतरमन्तरमुपजीव्य वाक्ययोजने परस्परं वेभिद्येते ।

b) गस. ल्युडन्ते कृत्-स्वरः प्रकृत्या । वस्तुतस्त्व-पपाठ इवायं भवति । यनि. गतिभावेऽनोरर्थाऽऽसंगत्यात् । सवितृकर्तृकविराजनक्रियया तत्कर्मीभूभूषितस्योषसः प्रयाणस्यैव संबन्धविशेषाऽभावात् । अनुपूर्वत्वे सति तस्य निरर्थकस्येव सतो नितरामेव संबन्धाऽभाव इत्यभिसन्धिः । एस्थि. अनु प्रयाणम् इत्याकारके पदद्वयात्मके पाठे मूको. च सा. च समर्थ्यमानेऽप्यथ बाह्वृचे मूले (५, ८१, २) विद्यमानेऽपि यत् शंपा. RW. च तथा नाऽपाठि तत्र हेतुर्मृग्यो भवति (तु W. टि. च तत्संवादी तदीयोऽनुवादश्च) । न चापि अस. स्यादिति कृत्वा समाधानं संभवति । तथात्वे समासस्वरः स्यान्न तु यनि. उप. प्रकृतिस्वरम् इत्यलम् । पामे. अनु ऋ ५,८१,२ द्र. ।

c) गस. ल्यबन्ते कृत्-स्वरः प्रकृत्या ।

d) सपा. काय २१५:१४ प्रयुङ्क्ते इति पामे. ।

e) तुमुनि प्र. तादौ (पा ६, २, ५०) इत्युक्तः स्वरः । सपा. ऋ १०,२,३ प्रसु. अनु । प्रवोढुम् इति पामे. ।

f) तु. सा.; वैतु. WI. अनुः कप्र. इति ?

g) सपा. मै १,१०,५ प्राविशत् इति पामे. ।

h) पामे. अनु शौ ११,१०,११ द्र. ।

i) पामे. अनु शौ ११,१०,१९ द्र. ।

j) सपा. ऋ १०,९७,१९ अनु ... विष्ठिताः इति पामे. ।

k) यदिह वें. सा. च कप्र. अनुः प्रजाः इत्येतदनु-बद्ध इतीव वदन्तौ प्र √सारि इत्यस्य स्वाभाविकीं कर्मपराकाङ्क्षां, वाह्यपराक्षेपेण विपूरयिषेतां न च अनुं यनि. गतितां नीत्वा प्रजाः इति पदं समस्तायाः क्रियायाः कर्म भावयेतां तच् चिन्त्यं द्र. (तु. PW. GW. MW.) ।

l) °जज्य° इति पुनरुक्तविकृतः मूको. भवति । अनुविषिच्यते सपा. शौ ८, १५, ४ इत्येतदनु अनु-प्रषिच्यते इति यद् मुपा. भवति तत् संस्कर्तुः साहसमात्रम् । मूको अहेतुको विरोध इत्येको हेतुः । पत्वं चाऽपलक्षण-मित्यपर इति ।   m) पामे. अनु ते १,२,६,१ द्र. ।

n) अनु प्राणिहि इति द्विपदः पाठः? यनि. शोधः (तु. सस्थ अनुप्राणन्तु, सपा. पूर्वाणि स्थलानि च) ।

o) अनुप्रास्यवान् इति मुपा.? तत्र °स्यै° इति शोधमनुसंधाय [गस. ल्यबन्तं] °स्य इत्येकम्, (√इ >१एव->) एवान् (द्वि३) इत्यपरं च पदं स्यादिति संभाव्यते ।

p) सपा. क ४१,७ अन्वाप्रीणाति इति पामे. ।

अनुप्रयुन्ति मै ३, ७, १[2]¶; पै १, ७८, १[a]; अनुप्रेमः शौ ५,७,३; पै ७,९,४; ¶अनुप्रे हि[b] मै ४, ९, ७; अनुप्रे ।[c] मा १८, ५८[d]; का २०, ४, १

अनुप्रेयतुः शौ १९,४४,१०; पै १५,३,१०.

अनु-प्लव[e]- -वम् पै ७ ७,४

अनु √बध्, बन्ध्, ¶अनुबध्नाति तै ५, ४, ७, ७[f]; ६,६,५, ३; अनुबध्नन्ति शौ ५,१९,१२.

¶अनुबध्यते[g] काठ २९, ४; क ४५,५; ¶अनुबध्यन्ते मै ३, ९,७.

ϕअनु-बद्बधा(नँ>)ना[h]- -नाः ऋ ४,२२,७.

¶अनु, >नू-बध्या[i]- -न्ध्या तै २, २, ९, ७;५, ५, ४; ५; मै ३, १०, ५[j]; ४. ८, ५; ६; काठ १०, १; २९, १; ४[1]; क ४५, २; ५[1]; -न्ध्याः तै ५, ६, २२, १; काठ २९, ४; ५०, २; क ४५,५; -न्ध्याम् मै २, १,७.

अनु √बुध्, ¶अनुबुध्यते काठ ६, ६; क ४ ५; अनु ... बुध्यन्ताम् पै २०,५२,७; ¶अन्वबुध्यन्त काठ ३०.७; ¶अनुबुध्येत काठ १२,१०.

अनु अबुत्सत शौ १२,४,१; पै १७,१६,१.

अनु-बुद्ध- -द्धम् शौ ४, २४, ६; १० १,१९; पै ४,३९, ६; १६. ३६ ९.

अनु √ब्रू, अनुब्रुवे खि ४, ८. ४; अनुब्रूहि तै २, २, ११, ०[2]¶; ६. ३, ५, ३[2]; ४; ७,१; १०, ३¶; ११, ४, मै १. ४, ११; २ ३, ७[k]; ४, ५, ३; ९, ९; काठ १२, ५[l]; २७. ३; क ४२, ३; ¶अन्वब्रवीत मै ४, ६, ४; ¶अन्वब्रुवन् काठ १३, ३; ¶अनुब्रवीत् काठ ११, १०, ¶अनुब्रूयात् तै २, ५, १०, १[2]; २[2]; ३[4],४[4]; ६,१, ४, ४; मै १, ९ ८;३,२,२[k]; ८, १०[l]; ४. ५, ३[5]; काठ १०, ११; ११,५;१२,४[2m]; २३,५[3n],२५, ३[1]; २६ ८[50]; क ३६,२[1n];३८, ६[1]; ४१,६[50].

¶अनु-ब्रुवत्- -वतः[p] मै ४, ५, २; -वन् तै ६, २. ६, १; मै ३, ८, ४;७; काठ ३४,२.

अनु-ब्रुवाण- -णः ऋ ५,४४,१३.

अनु √भा, ¶अनुभाति मै १, ८, ७; काठ ६,६; क ४,५; अनुभासि ऋ ३,६,७[q].

¶अनु √भिद् > अनु-भिद्य काठ १२, १[r].

अनु √भू, अनु ... भवतः ऋ १०, १४७,१[s]; ¶अन्वभवत् तै ७, ३,१४.१[t].

¶अनु ... भूयासम् काठ ३५. १५; अनुभूत ऋ ३, ३२, ११; अनु ... भूत ऋ १,१७३. ८[u]; अनु ... भुवन ऋ १, ५२,

---

[a]) खण्डितः मूको. इति कृत्वाऽऽनुमानिकः मुपा. द्र. ।

[b]) पपा. अनु । प्र । इहि इति । कप्र. अनुः इति विवेकः ।

[c]) पाभे. अनु तै ५ ७,७,१ द्र. ।

[d]) तु. पपा. सात. ; तु. निसा. अनु प्रेत इति द्वे पदे इति ?

[e]) विप. । गस. उप. वर्तरि अच् प्र. ।

[f]) पाभे. अनुनियुक्ति काठ २१,१० द्र. ।

[g]) सपा. तै ६,६,७,३ आलभन्ते इति पाभे. ।

[h]) विप. (स्वसृ-) । गस. कानजन्ते कृत्-स्वरः प्रकृत्या । शेषं सस्थ. टि. अनुः द्र. ।

[i]) गस. ण्यदन्ते कृत्-स्वरः प्रकृत्या (पा ६, १,१८५;२, १३९) ।

[j]) एतदन्तेषु स्थ. पूप. ह्रस्व उकारोऽन्यत्र दीर्घः उसं. (पा ६ ३,११६) ।

[k]) सपा. काठ १९,१२ अनुमन्त्रयेत इति पाभे. ।

[l]) सपा. काठ २६,१ क ४०,४ संचरेत् इति पाभे. ।

[m]) सपा. तै २,४,११,१ अन्वाह इति पाभे. ।

[n]) द्विः सपा. मै ३,६,८ अनूच्य इति पाभे. ।

[o]) सपा. मै ३ ९,५ अनूच्या इति अन्वाह इति च पाभे. ।

[p]) शत्रन्ते विभक्ति-स्वरः (पा ६,१,१७३) ।

[q]) वैतु. वें. अनुः कप्र. इति ?

[r]) सपा. तै २,३,१३,३ आविद्धम् इति, मै २,३,१ विकृत्य इति च पाभे. ।

[s]) सपा. कौ १,३७१ जै १,३९, २ अनु ... भावताम् इति पाभे. ।

[t]) सपा. काठ ३५, १५ प्रभृ. अन्वाभवत् इति पाभे. ।

[u]) स्तोतृषु प्रीतिबुद्धिं कुर्वतीन्द्रे गवा (वाचा) विश्वानि जोष्याण्यनुभूतान्येवेत्यभिप्रायवती श्रुतिः द्र. । अनुः अव्य. क्रिवि. पश्चादर्थ इति वें., अनुक्रमार्थ इति सा. इत्येवं भिन्नाऽन्वयं पक्षान्तरं भवति । तदनु वाक्ययोजना-द्वयेऽपि परस्परमन्तरमनुसंधेयम् ।

११.

**अनु √भृ**, अनु…भरामि मा २, १७; का २, ४, ५; तै १, १, १३, २; मै ४, १, १४; काठ १, १२; क १, १२; अनु…अभरत ऋ ९, ७२, ३[a].

¶अनुबिभर्ति काठ १९, १०; क ३०, ८; ¶अनुबिभ्रति मै ३, ४, ३[1]; काठ ३७, ११; ¶अनुबिभृताम् काठ ३६, १०; ¶अन्वबिभृताम् मै १, १०, १६.

¶**अनु-भर्तृ**[b]- -र्तारः काठ ३७, ११[1].

**अनु-भर्त्री**[c]- -र्त्री ऋ १, ८८, ६.

**अनु-भृत**- -तम् ऋ १०, ६१, ५.

**अनु-मत्**[d]- -मान् मै १, २, १५; ३, ९, ६.

**अनु-मत**-, **अनु-मति**- अनु √मन् द्र.

**अनु √मद्**, †अनु…मदति[e] ऋ ८, १५, ९; कौ २, ९९७; शौ २०, १०६, ३; अनु…मदति ऋ ४, ३८, ३; †अनुमदन्ति ऋ १, १७३, ७; ३, ४७, ४; १०, १२०, ४; मा ३३, ६३; का ३२, ५, ९; शौ ५, २, ४; २०, १०७, ७; पै ६, १, ४; २०, ६, ३; †अनु…मदन्ति ऋ १, १६२, ७[f]; ३, ३४, ८; ४, १७, ५; १०, ७३, ८; मा २५, ३०[f]; का २७, १२, ७[f]; तै ४, ६, ८, ३[f]; मै ३, १६, १[f]; शौ २०, ११, ८; †अनु…मदन्ति ऋ १, १८४, ४; १०, १२०, १; मा ३३, ८०; का ३२, ६, ११; कौ २, ८३३; जै ४, ५, ५; शौ ५, २, १; २०, १०७, ४; पै ६, १, १; †अनु…मदामसि ऋ ९, ११०, २; कौ १, ४३२; २, ७१६; जै १, ४२, ६; ३, ५९, ८; †अनु…मदन् ऋ ६, १८, १४; मै ४, १२, ३; काठ ८, १६; अनु…मदतु, अनु[2](मदतु) काठ ३७, ९[g]; अनु…मदताम् ऋ १, १२१, ११; अनुमदन्तु मा २७, ८; का २९, १, ८; तै ३, ३, २, २; ४, १, ७, ४; ६, ४, ५‡[h]; मै २, १२, ५; ४, ९, २; काठ १८, १६; क २९, ४; शौ ७, १७, १; ३६, १[i]; अनु…मदन्तु ऋ ६, ७५, १८[h]; मा ६, २०; १७, ४९†; का ६, ४, ५; १८, ४, १७†; तै १, ३, १०, १; ६, ३, ११, ३; मै १, २, १७, काठ ३, ७; ४६, ४‡[i]; क २, १४; कौ २, १२२०†; शौ ७, १२३, १†; †अनु-मद>दा ऋ १०, ६३, ३[j]; अनुमदात् मै ४, १२, १‡[j]; अनुमदाम ऋ १, १०२, ३; अनु…अमदन्त मै ४, १४, १३; अन्वमदन् खि ५, ५, २; अनु…अमदन् ऋ १, ५२, ९; ७, १८, १२; †अनु…अमदन् ऋ १, [५२, १५; १०३, ७ (७, १८, १२)]; १०२, १; ९, ८६, २४; मा ३३, २९; का ३२, २, १२; अनु (अमदन्) ऋ १, १०३, ७; †अनुमदेम ऋ १, ९१, २१; १०, ६७, ९; मा ३४, २०; का ३३, १, १४; मै ४, १४, १; शौ २०, ९१, ९; अनु…मदेम ऋ ५, ३६, २[k].

† अनु…अमादिषुः ऋ ९, ८, ४; कौ २, ५३१; जै ३, ४१, ७.

---

a) वैतु. PW. GW. च यथा जोषम् इत्येतदनुवद्धं कप्र. अनुम् आहुस्तथा निराकाङ्क्षं वाक्यं न पूर्येत सकर्मकत्वाद् √भृ इत्यस्येत्यभिसन्धेः ।

b) गस. तृन्नन्ते कृत्-स्वरः प्रकृत्या (पा ६, १, १६३; २, १३९) । c) विप. (वाणी-) । स्त्रियां ङीप् प्र. ।

d) =अनुमति-युक्त- (तु. माश्रौ ५, २, १३, १ ऊह-प्रक्रियया अनुमन्तौ, अनुमन्तः इति [वैप४ कृतः शोधः नेष्टः]) ।

e) तु. वें. सा.; वैतु. सा. [पक्षे], Gri. लक्षणं कप्र. इति मन्वानौ चिन्त्यौ भवतः । मारुतस्य शर्धसो मदितृत्वरया-ऽपेक्षया मदयितृत्वेनोपवर्णनस्य योग्यतरत्वात् ।

f) सपा. अनु…मदन्ति <>अनु…मदन्तु इति पाभे. ।

g) =सपा. तैब्रा २, ७, ८, १; २; १६, २ । पै ४, ३, ५ अनु…अवतु. अनु (अवतु)[2] इति, ऐआ ५, १, १ अनु (आवीत्)[3] इति पाभे. ।

h) सपा. अनुमदन्तु <>अनु…मदन्तु इति पाभे. ।

i) पाभे. अनु…जुषन्ताम् पै २०, ८, ९ द्र. ।

j) सपा. °मदा <>°दात् इति पाभे. ।

k) 'त्वा त्वामनु त्वया सह' इति वा. अनुः कप्र. इति सा. । तच्चिन्त्यम् । तथा सति तदभिप्रेतस्याऽन्वयस्यैव दुःसाधत्वात् । तथा हि 'गीर्भिः… हिन्वन् हिन्वन्तस्त्वां प्रीणयन्तः सन्तो मदेम' इति वदता तेन विस्मर्यते यथा त्वेत्यस्य कप्र. योगे सति क्षीणशक्तेः पुनः 'हिन्वन्तः' इति शब्दस्य कर्मतयोपलम्भो न संभवतीति । तदभावे च 'त्वया सह

अनु-मदित- विप्र°.

†अनु-मद्यमान- -नः ऋ ७, ६३. ३;१०,९८, ८; मै ४, ११, २; काठ २,१५.

†अनु-माद्य,द्या[a]- -द्यः ऋ ६,३४, २;९, २४,४; ६; ७६,१;१०७, ११; कौ १, ५५८; २, ३१५; ३१६; ५७८ ; १०४० ; जै १, ५७, ५; ३, २६, १; ३; ४७, ४; -द्यस्य ऋ ७, ६, १; कौ १,७८; जै १,८,६; -द्या शौ १४, १, ४७ ; पै १८, ५, ४; -द्यासः ऋ १,११५, ३; मै ४, १०,२.

अनु-मध्यम[b]- -माः पै २० २४, १०.

अनु√मन्, अनुमन्यते मा २३, ३१; का २५, ६, ११; ¶तै २. ३, १,२; ¶अनु···मन्यते तै ३, ४, ९,१; २, अनुमन्ये ऋ ६, ५२, १; अनु···मन्यासै[c] मा ३४,८; का ३३, १, ३; तै ३, ३, ११, ४; मै ३, १६, ४; काठ १३, १६; अनुमन्यताम् खि २,११,१; तै ३,१,४, १¶, ३, ११, ४; काठ ३०, ८[२]; ३७, ९; शौ ४, ८,१; ५, २८, ११; ७,२१, ३; १८, ३, ६९; ४ २६; ४३; पै २, ५९, ९; ३,३२,१; ४,२,१; ५,४०, २; १९, ५४, १; २० ४, १; अनु···मन्यताम् मा ५, ६[d]; का ५,२,४[d]; मै १,२,७[d]; १५; ३, ७,६;९, ६; अनु···मन्यताम् खिसा ३. ३; मा ४, २०; ६.९; ३४ ९; का ४, ६,४; ६, २, ३; तै १, २, ४, २; १०, २[d]; ३, ३, ११, ३[e]; ६,१,७, ७; २,२,४; मै ३, १६,४[e]; ४, १३,४; काठ २,५; ३,५; १६, २१; २४, ३; २६, ८; क १, १७; २, १२; ३७, ४; ४१,६; शौ ७,२१,१[e]; पै ५, ११, १[२]; ४०,२[२]; अनु (मन्यताम् ) मा ५, ६; का ५, २, ४, तै १, २, १०, २; ४. ४,१२,५; ७,१५, ५; ६, १, ७, ७; मै १,२, ७; १५; ३, ७, ६; ९,६; १६, ५; ४, ९, १०; १२, ६; काठ २४, ३; २६, ८ ; क ३७, ४; ४१, ६; पै ५,४०,२; अनु[२] (मन्यताम् ) मा ४, २०; ६, ९; का ४, ६, ४; ६, २, ३; तै १, २, ४, २; मै १, २,४; १५;४, ९, १०; १३, ४; काठ २, ५; ३, ५; १६, २१; क १, १७; २, १२; अनुमन्यन्ताम् तै ३, १, ८, ३; शौ १, ३५, ४; ८, २, २१; ९,४, २०; पै ५, ३७,८; १६, ५, १; २५, १० ; अनु-मन्यस्व खि ३, १५, ३; तै २, ३,१, २;३,१,४, १¶; ३, ९,१; मै २, २, १; काठ ३५, १२; क ४८, १२; अनु··· मन्यस्व शौ ६, १३१, २; अनु[२]··· मन्यध्वम्[d] काठ २, २; क १, १४; अनु···अमन्यत ऋ ६,७२,३; †अनु···मन्यत ऋ ४, १७, १; मै ४, ११, ४;

---

गीर्भि···हिन्वन्तः' इत्याकारकस्य वाक्यस्याऽऽविर्भावो नामाऽपराऽऽपत्तिः । असंगतेरनभीष्टत्वादित्यर्थः । तद् यथा । √हि इत्यस्य सकर्मकत्वात् कर्मपदस्य चोक्त-दिशाऽनुपलम्भात् साकाङ्क्षत्वं दुर्वारम् । क्रियायाः कर्मकारकाऽभावे गीर्भिः इत्यस्य करणकारकस्यापि प्रयोगे प्रयोजनाऽभाव इवाऽऽपतति । साध्यसद्भाव एव साधकतमस्य करणस्यापेक्षितत्वात् । अथाऽयम-परोऽपि दोषो यद् उपमानोपमेयसकक्षत्वविघातो भव-तीति । तथाहि । उपमानवाक्ये कश्चिद् अर्वतो-ऽश्वान् गीर्भिर्हिन्वन् प्रेरयन्न् उक्तो भवति, तद-न्वेवोपमेयवाक्येऽपि कस्यचित् कर्तुः कस्यचित् कर्मण-श्चाऽवश्यंभावित्वं वक्तव्यम् । अनयाऽवश्यंभवि-तव्यतयेव बाधितः सा. च्युतसंस्कार इव त्वेति कर्मपदं पुनः पिपठिषुरिव भवति । अनोः गतित्वयोगे स्वन्वयः सुलभः सुश्लिष्टश्च भवति । तदुपमानवाक्यं तावद् 'यथा अर्वतो हिन्वन् तान् गीर्भिरनुमदेत्' इति । अथोपमेयवाक्यम् । 'तथा पुरुहूत राजन् विश्वे (वयं) गीर्भिस्त्वा अनु···मदेम' इति । क्रियायाश्चास्याः सकर्मकत्वनिदर्शनार्थं तु. ऋ १, १७३,७; ३,४७, ४;१०, १२०,४ ।

[a]) गस. उप. कृत्-स्वरः प्रकृत्या । उप. ण्यति प्र. आद्युदात्तत्वम् उसं. (पा ६,१,२१४) । [b]) विप । प्रास. ।

[c]) = सपा. आश्रौ ४, १२, २ शांश्रौ ९, २७, २ आग्निगृ २,१,५:७ या ११,३० । शौ ७,२१,२ अनु··· मंससे इति पाभे. ।

[d]) सपा. अनु···मन्यताम् (माश ३, ४,३, ९ गो २, २,३ बौश्रौ ६,१९ : ५ प्रमृ. च) <> अनु···मन्यताम् <> अनु ' मन्यध्वम् <> माश ३,६,३,२१ अनु··· अमंस्त इति पाभे. ।

[e]) सपा. पै २०,३,९ अनु··· यच्छताम् इति पाभे. ।

काठ ६ १०; ¶अन्वमन्येताम् मै २, १, ३[२]; काठ ३७, २[२]; अन्वमन्यन्त ऋ १, ११६, १७; ¶मै २,२,१०[२]; काठ ३७, ४¶[a]; ¶अनुमन्येत[b] काठ २४, २; क ३७,३.

अनु···मंसीष्ट ऋ ७ ३८, ६;

अनुमंसीरत ऋ १०, ३७, ५;

अनुमंसते ऋ ५, ४६, ४;

† अनु·····मंसते ऋ ८, ६२, ११[c]; काठ ४४,४; अनु····· मंसतै तै ७, ४, १५, १‡[c];

अनु···मंससे शौ ७, २१, २[d]; ६; पै २०, ३, १०; ४, ४;

अनु (मंससे) तै ४, ४, १२, ५; ७, १५, ५; मै ३, १६, ५; ४, १२, ६; काठ २२, १४; १५.

अन्वमंस्त पै १९, १२, ३[e];

अनु···अमंस्त, अनु (अमंस्त) मा ५, ४०; का ५, ९, ७;

¶अन्वमंसाताम् मै २, १, ३;

अनु···अमंसाताम्[f] मा ३८, १३; का ३८, २, ७; मै ४, ९, ९; अनु····· अमंसाथाम् मै ४ ९,१.

अनु-मत,ता[g]- -¶तः मै ३, ७, ६; ९, ६; -तम् ¶तै ६, २ १, १; ३, ११, ३; ¶मै ३, ७, ९; ४, ३, १; काठ १३, १६; १६, १२[h]; २४, ८¶; क २५, ३[h]; ३८, १¶; शौ ६,७१, २; ७, २१, ४; पै २०, ४, ५; -¶तया तै ६,१,७,७; -ता[h] मा १२, ७०; का १३, ५, ९; तै ४, २, ५, ६; मै २,७, १२; शौ ३, १७, ९; -ताम् मै ४, ९, २[i]; -तेन ¶काठ ३०,९.

¶अनुमत-वज्र[j]- -ज्रः मै २,१, ३; काठ ३७,२.

अनु-मति[k]- -तिः खि ३, १५, २; मा ३४, ९; तै ३, ३, ११, ३; ¶४, ९, १; २; ६[२]; ४, ४, १२, ५; ७, १५, ५; मै ३,१६, ४; ५; ४, ¶३, १[२]; ५[२]; ८; १२, ६; काठ १२, ८[२]¶; शौ १, १८,२; ६,११,३[e]; ७, २१, १; ५; ६; २५, १; पै २, १२, २[l]; १३,५, २१; २०,३, ९; ४, ३; ४; ६,१; १७, ९; -तिम् तै ३, ३, ११, ४; शौ ५, ७, ४; पै ४, ११, ३; ११, १, ६; २०, ३, ८; -०ते ऋ [(८, ४८,८); १०, ५९, ६]; खि ३, १५,३; शौ ६,१३१,२; ७,२१, ४; ६; -०ते खि २, ९, ३; मा ३४,८; का ३३, १, ३; तै ३, ३,११,३; ४.४, १२,५; ७, १५,६; मै ३,१६,४,५; ४, १२, ६; काठ १३, १६[२]; २२, १४; १५; ३५, १२; क ४८, १३; शौ २, २६, २[l]; ७, २१, ३; पै २०, ३, १०; ४, ३; ४; ५; -त्याः ऋ १०, १६७, ३; मै ४, ३, १¶; शौ ९, ४, १२; पै १६, २५,२; -त्यै मा २४,३२; २९,६०; का २६, ७, २; ३१, ५, १; तै ¶१, ८, १, १; ८,१; ५,५, १७,१; ¶७,५, १४, १; २२, १; मै ¶२.१, ३; ६,१[२]; ३, १४, १३; १५, १०; ११; ४,३, १; काठ १५,१; ३; ४५,१०; १९; ४७,७. [ °ति- सिनीवाली°].

¶अनु-मन्तृ- -न्तारौ काठ २४,३; २६,८; क ३७,४; ४१,६.

अनु-मन्यमान,ना- -नः[m] शौ ७, २१, ३; -ना[m] तै ३, ३, ११, ४; पै २०,४,१; -नौ शौ १४, २,४२[n].

---

a) सपा. तैब्रा २,७,५,१ प्रायच्छन् इति पाभे.।

b) विचेतश अनुमन्येत >सपा. मै ३, ७,४ विचिनुयात् इति पाभे.।

c) सपा. परस्परं पाभे.।

d) पाभे. अनु···मन्यासै मा ३४,८ द्र.।

e) सपा. अन्वमंस्त<>अनुमतिः इति पाभे.।

f) =सपा. माश १४,२,२,२६ तैआ ४,९, ३;५,८, ३ शांश्रौ ८,१५,१३ प्रमृ.। तैआ ४,९,३;५,८, ३ अनु··· मंसताम् इति पाभे.।

g) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

h) सपा. °तम् (तैआ ४,४,१ च)<>°ता (माश ७, २,२,१० च) इति पाभे.।

i) -तान् इति पाठः? यनि. शोधः (तु. पपा.)। सपा. तैआ ४, १,१ शुश्रूषेण्याम् इति पाभे.।

j) बस. पूप. प्रकृतिस्वरम् (पा ६, २, १)।

k) नाप. ([न्यूनेन्दुकला-] पौर्णमासी-; तदभिमानिनी- देवता-; देवपत्नी- इति या.[ ११, २९ ] प्रमृ.)। गस. क्तिन्नन्ते पूप. प्रकृतिस्वरम् (पा ६, २, ५०)।

l) सपा. अनुमतिः<>अनुमते इति पाभे.।

m) सपा. °नः<>°ना इति पाभे.।

n) सपा. पै १८, ११, १ इदं मन्यमानौ इति पाभे.।

अनु-मातृ[a]- -नः काठ ३७,२[b].

¶अनु √(मन्त्र- >)मान्त्र, अनुमन्त्र-यते काठ २५, ७; २८, १०; ३१, २[c]; क ३९, ५; ४५ १; ४७, २[c]; अनु···मन्त्रयते तै ५, १, ६, ४; काठ १९, ६; क ३०, ४; अनुमन्त्रयन्ते मै २, ३, ९[d]; काठ २५, ७; क ३९, ५; अन्वमन्त्रयत मै ४, ३,४; अनुमन्त्रयेत तै २, ६, ६, ४[e]; काठ १९, १२[f]; २५, ७[fe]; क ३९,५[fe].

अनु√मन्द्, अनु···अमन्दन् ऋ ३, ५१,९.

?अनुमस्त्वाभानो पै २०,४,२.

अनु√मा (माने), †अनु···ममे[g] ऋ १, ५७, ५; शौ २०, १५, ५; †अनु····ममिरे ऋ १, १६३, ८;७, २१, ७; मा २९, १९; का ३१,३,८; तै ४,६,७, ३; काठ ४६.३.

अनु-मेय[h]- -यः पै १,६७,४; -याः शौ ६,१३७,२.

अनु√मुञ्च्, अनुमुञ्चामि, अन्वमुञ्चत प २०,५७,८.

अनु√मृच्, अनुमृक्षीष्ट[i] ऋ १, १४७,४.

अनु√मृज्, ¶अनुमार्ष्टि मै ४, २, १०; क ४७,८; अनुमार्ज्मि मै ४, २, १०; अनुमार्ष्टु मा २, २४;८,१४; १६; का २, ६,१; ९, ३, २; तै १, ४, ४४, २; अनु···मार्ष्टु मै १, ३, ३८; ४, १४,१७; काठ ४, १२; क ३,१०; शौ ६.५३, ३; पै १९, ८, ३; २०, ३४, १; ¶अनुमृज्यात् मै ४,२,१०.

अनु-मृर्जान- -नः ऋ १०, १४२, ५.

अनु√मृश्, >मर्शि, ¶अनुमृशति मै ३,८,८.

¶अनुमर्शयन्ति काठ २५, ९; क ४०,२.

अनु-मृश्य ऋ १०,६८,५; तै ६,१, ३, ६¶[j]; शौ २०, १६,५†.

अनु√म्ना, अनु···मम्नाते[k] ऋ ७, ३१,७.

अनु√म्रुच्, म्लुच्

अनु-म्रोक[*l]- -क शौ २, २४, ३; पै २,४२,४.

अनु-म्लोच(त् >)न्ती[m]- -न्ती[n]

---

[a]) घञन्ते थाथादि-स्वरः (पा ६,२,१४४)।

[b]) सपा. तैब्रा २,७,३,३ °नाथ इति पाभे.।

[c]) सपा. मै ४,१,३ अभिमन्त्रयते इति पाभे.।

[d]) सपा. काठ १२,११ अभिमन्त्रयन्ते इति पाभे.।

[e]) सपा. मै ३,८,६ अभिमन्त्रयेत इति पाभे.।

[f]) पाभे. अनुब्रूयात् मै ३,२,२ द्र.।

[g]) यनि. योगो वा स्याद् हीने (पा १,४,८६) इत्युक्त-दिशा कप्र. अनुर्वा स्यादित्यत्रैवं संभाव्येत यद् बाह्वृचे तावद् द्वितीयकल्पानुसारिणी सती शाब्दी प्रवृत्तिः कालान्तरेण प्रथमकल्पात्मतया पर्यणंस्तेति। सा. यः खलु ऋ ७,२१,७ इत्यत्र द्वितीयमेव कल्पमादाय सम्यग् व्याचक्षाणोऽप्यन्यत्रोभयोरपि यनि. ऋ. स्थलयोरसाधु-पद्य इव संजायते। तथाहि। ऋ १, ५७, ५ इत्यत्र 'अन्वसंस्त' इत्येवं भाषमाणः किल अनु···मने इत्या-कारकमिव स्वकीयं मूलं पाठं संभावयेत्। एस्थि. च ऋ ७,२१,७ इत्यत्र भाष्य उक्तं भवति यथा ऋ १,५७, ५ इत्यत्र अनु···ममे इति श्रुतौ अनुः कप्र. भवतीति। तत एतदपि संभाव्येत यथा द्वयोरेतयोः स्थलयोर्भाष्ये भिन्नकर्तृके स्यातामिति। एवम् ऋ १,१६३,८ इत्यत्रत्ये भाष्येऽपि 'त्वा' इति पदं पूर्वतोऽनुश्राव्यैव तदनुबद्धः अनुः कप्र. उक्त इति च वीर्यम् इत्यनेन च पदेन अनाः न कोऽपि संबन्ध उक्त इति च प्रथममण्डलीयो भाष्यकृदन्यो-ऽन्यश्च सप्तममण्डलीय इत्येतां संभावनां भूयोऽपि पुष्णीयाताम्।

[h]) गस. यदन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,२१३;२, १३९)।

[i]) <√मृज् इति यदाह सा. तद् विमृश्यम्।

[j]) सपा. काठ २३,४ अनुहाय इति, क ३६,१ अववृज्य इति च पाभे.।

[k]) 'अनुमन्येते' इति भाषमाणः सा. यनि. रूपम् <अनु√मन् इत्युपक्षिपेत् (तु. GW. √मन् >मम्न्)। मूलतः √म्ना इत्यस्य √मन् इत्यनेन संबन्धाभ्युपाये सत्यपि यथा वृत्तिविशेषवैशिष्ट्यमवश्यमुपादेयं तथा यस्था. संकेतितं द्र.। प्रकृते चोक्तवृत्तविशेष-प्रयाजितेऽनुमनन-मात्रात् पृथगिव भूतेऽभ्यास-सातत्य लक्षणे तात्पर्योपदर्शनात् सा. प्रभृ. भाष्यं चिन्त्यमिति किमु वक्तव्यम्।

[l]) = यातुधानाधपति-विशेष-। गस. कृत्-स्वरः प्रकृत्या (पा ६,२,१३९)। उप. कर्तरि घः प्र. उसं. (पा ३,३, ११८)।

[m]) = अप्सरो-विशेष-।

[n]) = सपा. माश ८, ६,१,१८। मै २, ८,१० म्लो-चन्ती इति पाभे.।

मा १५,१७; का १६,४,५; तै ४,४, ३, २; काठ १७, ९; क २६,८.

¶अनु√यज्, अनुयजति तै ६, ३, ११, ६; मै १, १०, ९; ४. ६, ७; ९²; ७, १²; ४²; काठ २७, ५; २८, ८; ३६, ४; क ४२, ५; ४४,८; अनुयजेत् मै ४, ६, ७; ७,१; ४; काठ २८, ८; क ४४,८.

अनु, > नू-याज[a]- -जः ऋ १०, १८२, २; मै ४, ६. ९¶; -जाः ऋ १०,५१, ९; ¶तै २, ६, १,६; ६,१,५, ४²;३, ११ ६; ¶मै १, १०,८; ३,७, ९²; ९, ८²; १०, ४; ४, ७, २; ¶काठ १२,२; २३,९; २४, ८; २५, १²; २६, ९²; ३६, २; ९;१४; ¶क ३६, ६; ३८, १; ४²; ४१, ७²; शौ १, ३०, ४; पै १, १४,४; -जान् ऋ १०, ५१, ८; मा १९. १९; का २१, २,८; ¶तै २, ६,९, ४; ६, १, ५,४;३,११, ६²; ¶मै १, १०, १५; ३, ७, २; ४, ८, ५; -¶जानाम् मै १. ७,४; ९,५; काठ ९, १;१४; क ८. ४; ४१, ७; -¶जेषु तै २,६, ९,४; मै १,१०,९²; काठ ३४,१६; ३६, ३²; -जैः क ४१, ७¶; -जौ तै ६ ६, ३, ३²¶ [°ज- अन्°, प्रयाज°].

¶अनुयाज-त्व- -त्वम् क ४१,७

¶अनु, >नूयाज-वत्[b]- -वत् तै ६, १, ५, ३; ५²; मै ३, ७, २³; -वती काठ २३, ९; क ३६,६.

अनुयाजा(ज-अ)ह्न- -ह्ने पै १६, ५२,३[c].

अनु√यम्, >च्छ्(यमने), अनुयच्छतु ऋ ४,५७,७[d].

अनु…येमाते ऋ [(३, ३१, १७),४,४८, ३]; अनुयेमुः ऋ ६,२१,६.

१अनु-युच्छमान, ना- -ना ऋ १, १२३, १३; -नाः ऋ १, १०९ ३.

अनु-यत- -तम् ऋ ५, ४१, १३

अनु√यम्,>च्छ्(दाने), अनुयच्छे[e] काठ ३९, १०; अनु…यच्छताम् पै २०,३,९[f].

२ϕअनु-युच्छमान- -नाः ऋ ७, ५६,१३[g]; मै ४,१४,१८†.

अनु√या, †अनुयाति ऋ ६, ६, २; १२, ५; तै १, ३, १४, ४; अनु…यासि ऋ ३,१,१७.

¶अनु-यावर[h]- -राः काठ ३४,९.

?अनु-या[i]- -या[i] मा १५ ६; का १६, २,२.

?अनुयाताम्[j] पै १९,४८,१९.

अनु-यातु- √अन्(प्राणने) द्र.

अनु√रक्ष्, अनुरक्ष पै १६,७३,३.

ϕअनु-रक्षमाण- -णा ऋ ५,६२,५[k] -णौ ऋ ५,६९,१.

---

a) =[प्रधानयागाऽनन्तरभाविन्- त्रिरनुष्ठीयमान-] यज्ञाङ्ग-भेद-। गस. घञन्ते कुत्वाभावः, थाथादि-स्वरः (पा ७, ३,६२;६, २,१४४)। °नू° इति तै. पाठः स च बाहुलकात् द्र. (पा ६,३,१३२)।

b) हस्व- (पा ६,१,१७६) इति प्राप्तस्य मतुपः स्वरस्य न गोश्वन्- (पा ६,१,१८२) इति बाधे स्वरेऽविशेषः।

c) अनुर् याजाह्ने इति पाठः? यनि. शोधः।

d) सपा. शौ ३,१७,४ अभिरक्षतु, पै २,२२,५ मह्यं रक्षतु इति च पामे.।

e) सग. तै ४,३,११,३ अन्विच्छे इति पामे.।

f). पामे. अनु…मन्यताम् शौ ७, २१,१ द्र.।

g) यथा विद्युतो वृष्टिप्रदानतो विशेषेण रोचन्त एवं मरुत आयुधवन्तः सन्तः स्वधावाः अनुदानार्थं तान्यायुधानि प्रयुज्य शोभेरन्निति श्रुतिस्वरसः द्र. (तु. वें सा.; वैतु. GW. प्रमृ. अनुः इत्यस्य गत्यभाव इति मन्वानाः)।

h) विप. (मास-)। गस. उप. शुद्धाद्धातोः वरच् प्र. (पा ३,२,१७५)।

i) पाठः? अनु-त्रा- (भावे अङ् प्र.) > -त्रया (तृ१ [तु. प्रत्राय मै २,८.८ टि.]) इति शोधः। सपा. तै ३, ५, ७, ३ वैताश्रौ २२, ४ अनुत्रा इति, मै २,८, ८ ?अनुत्राय इति, तां १,९,८ अन्वा (=अनु-वा इति MW.) इति पामे.।

j) शोधः मातरिश्वा सस्थ. टि. द्र.।

k) शुद्धाद्धातो शतरि निष्पन्नं सद् वर्धत् इति द्वि१ वृर्धिः इत्येतत्समान धिकरणं भवति। तदेव <अनु √वृध्> वर्धि इति प्रतिपिपादयिषुर्यत् सा. 'अनुवर्धयन्तौ मित्रावरुणौ' इत्याकारकं संबन्धमाह तत् नितरामुपेक्ष्यम्। यथा च GW. MW. च अनु १ इह कप. आहतुस्, तथा रक्षमाणा इत्यस्य कर्मसाकाङ्क्षत्वमन्यथा पूरणीयं स्यात्। वरमेव ततोऽयं यनि. सरलः स्वन्वितो योगो येन दाशत्व्यामसकृद् रक्षणवर्धनसजातीयक्रियायाः कर्मतया श्राविर्तं मध्यस्वरम् अमृति- इति पदं मित्रावरुणकर्तृकाऽनुरक्षण-

?अनुरत्त[a] पै ४,२७,१.

अनु√रभ्, अनु···रभस्व[b] शौ ९,५,२.

अनु√रम्, अनुरमन्तु पै ८, १८, ३.

†अनु√राज्, अनुराजति ऋ २,४३, १;९,९६,१८; कौ २,५२६; जै ३,४१,२.

अनु√राध्, अनुराध्यास्म शौ १९, १५, २; पै ३, ३५, २; २०, २४,६.

१अ(नु>)नू-राध[c]- -धस् शौ १९,१५,२; पै ३, ३५,२; २०, २४,६.

२अनु, >नू-राध, धा[d]- -धा शौ १९, ७, ३; -धाः तै ४, ४, १०, २; मै २, १३, २०[e]; काठ ८, १५¶; ३९, १३; क ८, ३¶; -¶धासु मै १, ७, २[f]; क ८, ३; -¶धेषु काठ ८,१५.

अनु√री, अनुरीयते ऋ १, ८५,३.

अनु√रुध्, †अनुरुध्यसे ऋ ८, ४३, ९; मा १२, ३६; का १३,३,७; तै ४, २,३, ३; ११, ३; मै २,७,१०; काठ १६,१०; क २५,१.

अनु, >नू-रुध्[g]- -नुरुधम् मा ३०,९; का ३४, २,१; -नूरुत् ऋ ३,५५,५.

अनु-रोधन[h]- -नम् शौ ६, १०२, ३; पै १९ १४,३.

अनु√रुह्, अनुरोहते ऋ २, ५, ⌊४; ८, १३, ६⌋[i]; अनुरोहति काठ ३८, १३‡[i]; अन्वरोहन् शौ १८, ३, ४०‡[j]; ¶अन्वरोहन् काठ ३७, १४; अन्वरोहम् ऋ १०,१३,३[j]. अनु···अरुहत् ऋ १,१४१, ५.

अनु, >नू-रोह[k]- -हः तै ४, ४, १,३; काठ १७,७;३७,१७; क २६,६; -हम्, -हाय, -हेण मै २,८,८.

अनु-रूप[l]- -पः मा १९, २४; का २१, २, १३; -¶पम् मै ३, १, ४[2]; काठ १९, ३; क ३०, १; -¶पाः तै ५, १, २, ६; ३, १; काठ १९, ३[2]; क ३०, १[2]; -¶पाभ्याम् तै ५, १, २, ६;३, १; काठ १९,३; क ३०,१; -पाय तै ७,३, १८,१; काठ ४३, ८; -¶पेण मै ३, १, ६;४,१;७.

¶अनुरूप-त्व- -त्वाय तै ५, ५,१, २; मै ३,४,७.

?अनुरोतिः[m] पै ९,३,१३.

---

क्रियायाः कर्मतया निर्निवितं भवतीति (तु. ऋ ५, ६९, १; ७,३८,२)।

[a]) पाठः? अनु । रन्+ते (>*रंस्त इति वा *रन्त इति वा) इति त्रिपदात्मकः शोधः द्र. (तु. ?रुन्)।

[b]) पाभे. अनु···द्रवस्व पै १६,१००,३ द्र.।

[c]) भावे घञ् प्र.। थाथादि-स्वरः पूप. दीर्घत्वञ्च (पा ६, २, १४४; ३, १२२)। वा. क्रिवि. (वैतु. सा. य इन्द्रस्य विप. इति कृत्वा कर्मणि प्र. इति भाषते)।

[d]) =नक्षत्र-विशेष-। 'अनु (गत-) राधाम्' इति कृत्वा प्रास. अन्तोदात्तः (पा ६, २,१८९)। इहापि नापू. रूपे इव उप. धात्वर्थ एव प्रधानः स्यादित्यपि श्रुत्या संकेत्यते (तु. मै १, ७, २; काठ ८, १५)। नक्षत्रीयं व्यप स्त्री च न. च (तु. विशाखं नक्षत्रम् मै २, १३, २०; काठ ३९, १३) भवति। शौ. एकवचच पूप. अदीर्घत्वच्च। अन्यत्र सर्वत्र (यनि. याजुषीषु शाखासु) बहुवच्च पूप. दीर्घवच्च इत्येवं निगमा भवन्तीति विवेकः।

[e]) पपा. ⌊तु. संटि.⌋ °धा (१प्र) इति।

[f]) अनु° इति यद् सुपा. पूप. दीर्घान्तं न प्रादर्शि, तच् चिन्त्यम्। मूको. दीर्घान्तसाक्ष्यस्यापि सद्भावात् सकक्ष-श्रुत्यन्तर-संवादार्थं दीर्घान्तत्वस्याऽपेक्षितत्वाच्च।

[g]) गस. क्विपि कृत्-स्वरः प्रकृत्या। दाशतय्यां पूप. दीर्घत्वम् उसं. (पा ६, ३,११६)।

[h]) उप. भावे ल्युट् प्र.।

[i]) सपा. अनुरोहते <> अनुरोहति <> वैश्रौ १८, १३:१ °हसे इति पाभे.।

[j]) सपा. °रोहन् <> °रोहम् इति पाभे.।

[k]) सस्व. कृते तु. टि. १अनु, >नू-राध-। मै. काठ. च पूप. दीर्घत्वम् उसं. (पा ६,३,१२२)।

[l]) विप., नाप. (⌊स्तोत्रियाऽनन्तरं पठ्यमान-⌋ तृच-विशेष-, प्रगाथ-विशेष-⌊तु. ऐब्रा ३,२४ आश्रौ ५,१०,१८; ७,२,७⌋)। प्रास. पूप. प्रकृतिस्वरम् (पा ६,२,२)। -पम् इति द्वि१ सद् वा. क्रिवि. द्र.।

[m]) पाठः? अनरातिः इति शोधः (तु. नापूपू. मन्त्राः)।

¶अनु √लम्ब्, अन्वलम्बत मै ३, ६,७[a].

अनु-लोम[b]- -¶मम तै ३. ५, १. ३[२];४;६.१,१,५; -मौ खि २, १२,१.

अनु(न-उ)ल्बण[c]- -णम् ऋ १०,५३, ६; तै ३,४, २, २†; ३, ६¶; काठ १३, ११†; १२[२]¶; -णेन ऋ ८,२५,९;खि ५,७,४,७.

अनु √वच्, ¶अनुवाच[d] तै ५, ६,६.३; काठ २८, ४; क ४४,४. ¶अनूच्यते तै ७, १, ५, ५[e]; मै ३ १०. १; ¶अनूच्यत तै २,५, ८, ४; काठ १०. ५; ११; ¶अनूच्यंत तै २, ५, २, ५; ¶अनूच्यन्ते काठ ९,१;१२, ४[e]. क ८,४.

¶अनु-वक्ष्यत्- -क्ष्यन् तै १, ६, १०.४.

अनु-वचन[f]- काठपुष्पि ४३. [°न-अलिवन्द° इन्द्र°, जीमूत°, पन्था°. पेव°. मेष°, १रोहित°, १शाद°, १सित°, सोम°].

अनुवाक[g]- ऋपुष्पि, तैपुष्पि, काठपुष्पि, कौपुष्पि, पपुष्पि; -के पै २, २०, ३[h]; -कैः शौ १९, २२, १. [°क- प्रथम°, प्रातर्°, याज्या°].

¶अनु-वा(क्य >)क्या[i]- -क्या मै २. १. ८; काठ १०, १०; ११[2j]; १२, ५[२]; -क्याः मै २, २,८; ३. ७, २[2k]. ८,१[2k]; काठ १०. १०[२]; ११, १०; २३, ९[2k]; क ३६, ६[2k]; -क्याम् काठ ८. १०; क ७,६; -क्यायाः मै २. ३. ७; काठ १२, ५; -क्यायै मै १, ४, ११; काठ १८. १९[l]; क २९,७[l]; -क्ये काठ ३६,१३. [°क्य. क्या- २अरण्ये°, पुरस्°, ३याज्या°].

¶अनु-वाच्[m]- -वाचः मै ४, ५,३.

अनू(नु-उ)क्त. क्ता- -क्तम् खि ४. ८,४[n]; -¶क्ता मै ३, १, ९; ८, ३[२]; ४. ४. ६, ९; ७,८; -क्ते[o] काठ २८, ३; क ४४ ३.

अनू(नु-ऊ)चान[p]- -नः ऋ ८,५८, १; खि ३,१८, २; -नम् मै १, ९,७¶.

¶अनू(नु-उ)च्य तै २, १, २, ८; ५, ७, ४; ११. ३; ६, २. २[१]; १०, ४: ३, ४, १०, ४; ५, ३, ३, १[q]; ६, ३, ७, १; मै १, ८. ३; २, १, ९[२]; २, ८[१]; ३, ७[६]; ३, ६, ८[4q]; ९, २; काठ ९. १६; १०, १०[६]; ११[१]; १२,५[६];२०,१३; क ३१.१५

¶अनू(नु-उ)च्य. च्या[r]- -च्यम् तै २, ५, ११, १: -च्या[s] मै ३, ९, ५; -च्यानि तै २, ४, ११,१.

¶अनू(नु-उ)च्यमान ना- -नाप्त मै ३,८,७; काठ ९, १४; -ने

---

a) सपा. काठ २३,३ क ३५,९ अन्वेष्टत इति पाभे. ।

b) प्रास. समापान्तः अच् प्र. चित्-स्वरश्च (पा ५, ४, ७५; ६, १, १६३)। सामान्येन विप. सद् यत्र सामर्थ्यात् क्रिवि. भवति तत्र द्वि१ भवतीति यथायथं द्र. ।

c) विप. (।अनतिरिक्त-। अयस्-, ।अदुरमह-। चक्षस्-तेजस्-) । बस अन्तोदात्तः ।

d) अम्नु° (भि-अ°) इति परा. शोध्यः ।

e) सपा. मै २,४,५ प्रयुज्यन्ते इति पाभे. ।

f) =अनुवाक- ।

g) =ग्रन्थ-भाग-विशेष- । कर्मणि घञ् प्र. । पुंस्त्वं कुत्वं च (पा २,४,२९;७,३,५२) ।

h) ?अनुवाके इति मुपा.? यनि. शोधः ।

i) =(अध्वर्युणा आश्रावय इत्युच्चारणानन्तरं होत्रा पठ्यमान-) आहवनीय-मन्त्र- । गस. कृत्-स्वरः (पा ६,२, १३९) । उप. ण्यदन्ते तित्-स्वरः ।

j) एकतरत्र सपा. तै २,२,११,४ मै २.१.८ याज्यानुवाक्ये इति, अन्यतरत्र तै २.२,११,५ मै २,१,८ च पुरोनुवाक्या इति पाभे. ।

k) सपा. तै ६, १,५,५; २, ३, ४ पुरोनुवाक्याः इति पाभे. ।

l) सपा. तै ५.१,१,१ पुरोनुवाक्यायै इति पाभे. ।

m) =(देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि इत्याकारक-) अनुवचन- । कर्मणि प्र. ।

n) सपा. खिसा ३१ ४ नोक्तम् इति पाभे. ।

o) सपा. मै ४,६,८ न ऋते इति पाभे. ?

p) विप. (ब्राह्मण-) । गस. कानजन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,१६३;२,१३९) ।

q) पाभे. अनुब्रुयात् काठ २३ ५ द्र. ।

r) गस. क्यबन्ते कृत्-स्वरः प्रकृत्या (पा ६, २,१३९) ।

s) पाभे. अनुब्रुयात् काठ २६,८ द्र. । मुपा. स्वरभ्रंशः स्यादिति कृत्वा नानूच्या इति स्वर-द्वयवत्तया शोधः द्र. ।

तै २,२,५,७;११,१; काठ १०, ११.

अनु√वञ्च् >अनु-वञ्चत्- -ञ्चते तै ७,४, २२, १; काठ ४५,१.

अनु-वत्सर[a]- -रः काठ ४०, ६; -राः पै १७, २९, १५; -राय काठ १३, १५; -रे काठ ३९,६.

अनुवत्सरी(य>)या[b]- -या काठ १३,१५.

अनु√वद्, ¶अनुवदति मै १, ११, ६; काठ १४, ६ ; १९, ३: ४; क ३०, १; २; अनु···वदति ऋ २,१३,२.

अनु-वन[c]- -नन् खि ३,१५,१०.

अनु√वन्द्, अनु···ववन्द मै २,७, १०‡[d].

अनु√वप्, अनुवपेत शौ १२, २, ५०; पै १७.३४,११. अनूप्यन्ते पै १६,१११,१४.

अनु-वर्तयत्-, अनु-वर्ति- अनु √वृत् द्र.

¶अनु-वर्त्मन्[e]- -र्त्म मै ३.३, १०; काठ ११, १ ; २१, १०[2]; -र्त्मनः काठ ११,१; -र्त्मना काठ २१, १०; -ऽर्त्मनिः मा १७,८६[f]; का १८. ७, ७[f]; तै ४, ६, ५ ६[f]; मै २,११, १[f]; ३, ३, १० ; काठ १८, ६[f]; २१. १०; क २८. ६[f]: शौ ३, ८,६[f];६ ९४.२[f]; पै १९. १०, १३; -र्त्मानम् तै २,२, ५, ७; ११.२[g];५,४, ७,७; -र्त्मानौ मै ३.३, १०.

अनु-वर्षत्- अनु √वृष् द्र.

†अनु√वश्, अनुवष्टि[h] ऋ १, १२७,१; मा १५,४७; का १६, ५.२९; काठ २६,११;३९,१५; शौ २०,६७,३.

¶अनु-वषट् √कृ, अनुवषट्करोति[i], अनुवषट्कुर्यात् तै ६, ५, ६, ५;७,१;८,५[2]; काठ २७.५; क ४२.५.

अनु √वस् (आच्छादने), अनुवस्ते शौ ११, ६, १०[j]; १३. ३, ११; †अनुवस्ताम्[k] ऋ ६, ७५, १८; खि ३, ११, १; मा १७, ४९ ; का १८, ४, १७; कौ २, १२२०; शौ ७, १२३,१.

अनु√वह्, †अनूहिरे[l] ऋ १०,१५, ८; मा १९,५१.

¶अनु-वाहु[m]- -हुः मै १ ५,१३.

---

a) = प्रभवादि-षष्टि-संवत्सराणां पञ्चशः पञ्चशो विभागेन वाच्यात्मक-चतुर्थवत्सरविशेष- (तु. सा. तां १७, १३,१७)। प्रास. अनोः (पा ६,२,१८९) इत्यन्तोदात्तः।

b) छ>ईयः प्र. (पा ५,१,९१)।

c) प्रास. पूप. प्रकृतिस्वरम् (पा ६,२,२[तु. उद्-न-, सु-वन-])।

d) पाभे. अनु····गृणाति ऋ १, १४७,२ द्र.।

e) विप., नाप.। प्रास. वा बस. वा भवति। यत्र न. श्रुतिर्भवति तत्र पूर्वः, यत्र चाऽन्यथा तत्रोत्तर इति विवेकः। उभयत्रापि पूप. प्रकृतिस्वरं भवति (पा ६, २, १; २)। यस्तु अनोर- (पा ६, २,१८९) इत्यन्तोदात्तोऽनुशिष्टो भवतीह तत्प्रवृत्त्यभावः सर्वशाखासाधारणः उसं.।

f) पाभे. अनु पै १९,१०,१४ द्र.।

g) सपा. मै २, १, ९; ५, ८ अविशादिनोम् इति पाभे.।

h) √वश् इत्यस्याऽकर्मकमिव वृत्तं भावयितुमिच्छू PW. MW. च कत. अनुः इति प्रतिपद्यमानो विमृश्यौ द्र.। पाभे. अनु तै ४, ४,४,८ द्र.। Benfey [BB ७, ३०१] WAG १, ५३a *अन्वष्टि [तु. वै. प्रमृ.] इति।

i) अत्र यत् पपा. नानु° इत्यत्र नु इति च अनु° इति चोदात्तयोरेकादेश इव प्रादर्शि। तन्न। उदात्तानुदात्तयोरेकादेशेऽपि परिणामेऽविशेषात्। अन्यथैकपद्ये स्वरद्वयमापद्येत। उक्तप्रकारेण च स्वरलक्षणस्य संगतिसंभवेऽप्यैकपद्ये मुपा. अलक्षितमपि स्वरद्वयमभ्युपेयम्, एतज्जातीयेभ्यो निदर्शनेभ्यश्च तत् समर्थनीयमित्याग्रहश्चेत्तर्ह्यसावन्याय्यः साध्यसमाव्यभिचरितश्च (तु. पपा. तै ६,५ ८,५ यत्र युन्तानुवषट्कुर्यात् इत्यस्य युत्। नु। अनु° इत्येवम् अनोः अनुदात्तत्वविशिष्टः पदविभागो भवति)।

j) सपा. पै १६ २१,१० अनूयास्ते इति पाभे.।

k) सपा. तै ४, ६, ४, ५ अभिवस्ताम् इति पाभे.।

l) तु. ऋ १,१२०,११; वै. सा. GW. प्रमृ.; वैतु. Baunack [KZ ३५,५०२] <√ऊह् 'आदर' इति? सपा. शौ १८,३,४६ ?अनूजहिरे (<अनु√हा [गतौ]) इति पाभे.। शोधस्य कृते तु तत्रत्यं टि. द्र.।

m) नाप. ([अनुवोढव्य-] भोजनादिसंभार-, पाथेय-)। गस. कर्मणि घञन्ते थाथादि-स्वरः।

अनु√वा, †अनुवा॑ति ऋ १, १४८, ४a; ७, ३, २]; ४, ४०, ३; मा ९, १५; १५, ६२b; का १०, ३, ८; १६, ७, ५; तै १, ७,८,३; ४, ४,३, ३; मै १, ११, २; २, ८, १४; काठ १२, १३²¶; १३, १४; १७, १०; क २६, ९; कौ २, ५७०; जै ३,४६.५; शौ १२,१,५१$; पै १२, ६, १$; अनुवाति ऋ ४,७,१०; १०, १०२,४; पै १७.५,९; ¶अनुवातु तै ५, ५, ७,३¹;४².

?अनु-व्र॒°- -वाय मै २,८,८d.

अनु-वा॒e- -वा॑d तै ३, ५, २,३; ४, ४, १. १; ५ ३, ६,१¶; काठ१७,७;३७,१७f; क २६,६.

अनु-वाक्-, अनु-वाक्या॑-, अनु-वाच्- अनु √वच् द्र.

अनु-वि √क्रम्, अनुवि॒क्रमते शौ ९, ७, १२; अनुवि॒क्रमस्वg मै २, ७,८¹h.

अनु-वि √चल्, अनुव्य॑(वि-अ) चलत् शौ १५, १४, १; ३; ५; ७;९;११; १३; १५-१७,१९; २१; २३; अनुव्य॑चलन् शौ १५,२,२;१०; १६;२२; ६, ३; ५; ८;११; १४; १७;२०; २५; ९,२.

अनु √विद् (ज्ञाने), †अनुवे॑द ऋ १०. १७. ५; मै ४, १४,१६; काठ २९, १; क ४५, २; शौ ७, १०, २; अनुवे॒र ऋ १,

a) कप्र. अनुः इति सा.। अथाऽर्थे कियान् भेदः? उच्यते। शोचिषः अनुलक्षकतया वा तदनुगततया वा वातस्य वानमेकं भवति; यत्र शोचिषः कर्मणः क्रियया साक्षात् संबन्धाभावः। तस्य कप्र. द्वारा वानस्य वानक्रियायां लक्षणसाहचर्यानुकूल्यादि-विशेषणाऽऽधान-निमित्तभावेन चारितार्थ्यं भवति। गतित्वे तु गर्भी-कृतलक्षणाद्युक्तार्थ-विशेषणाया अनुवानक्रियायाः साक्षादिव तत् कर्म प्राधान्येन निर्देशवत् सदीप्सि-तनमत्वेन विषयो भवति। अत एव कप्र. योगे कर्मणा विप्रकृष्टसंबन्धाद् याऽकर्मिका क्रिया भवति सैव सगतिकतायां कर्मणोऽतीव संनिकृष्टत्वात् सक-र्मिका भवति। उभयथा सभवे काऽत्र गतिरिति उच्यते। अत्र हि वातः कस्यां दिशि किं कुर्वन् वा वाती-त्यत्राऽनभिप्रायवती सती श्रुतिः प्रस्तुतमन्त्रदेवताया अग्नेस्तच्छोचिरनुवानेन (स्ववानेन तत्समर्थीकरणेन तत्-प्रोद्गलनेनेत्यर्थाद्) वानेऽपि तत्सायुज्यं वितनोतीति संकेतेन तत्स्तुतिपरैव भवति। अस्य प्रतिपिपादयिषि-तस्य चाऽर्थस्य गतित्वेनैव अनोः साधीयसो निर्वाहात् तथात्वमेव तस्य भवतु। यथा चैतदेवमेव साध्विति तच्छिरस्काऽपरा बाह्वृच्येव श्रुतिः स्वयमुपदर्शयति (तु. ऋ ४,७,१०)।

b) अनु √वा इत्यस्य सकर्मकत्वे स्थिते (तु. ऋ १. १४८, ४) 'अस्याग्नेः वातः अनुवाति' इति यद् उ. आह तदसुवचम्। यच्च तस्योपरि म. 'वातो वायुरस्याग्नेरनुवाति अग्निमनुलक्ष्य प्रसरति' इत्याह तदपि तथैव निःसारम्। प्रधानकर्माऽभावे तत्कर्मत्वेनान्वितोऽग्नेरन्वादेशमात्रेण षष्ठीस्थेन सकर्मि-कायाः क्रियायाः कर्माऽऽकाङ्क्षापूर्त्यसंभवात्। तस्य शोचिः इति प्रधानकर्मणश्चाऽग्निसमानाधिकरणतद्-विशेषणतया व्याख्यानकौशलादाभ्यामहो महती खल्वा-त्मीया वैदुषी प्रदर्शिता। यच्च चिताव्यत्ययस्थयैव म. अनुपदं कप्र. अनुः इति तदन्वितं शोचिः इत्येतच्च कर्मपदमिति पक्षान्तरमवतारयति, तस्या-ऽऽलोचनमुक्ते बाह्वृचे नापू. टि. वृत्तमिति नेह पुनरुच्यते।

c) गस. उप. कः प्र. थाथादि-स्वरश्च। सुपा. तु. विकृत इवाऽऽभाति (तु. मा १५ ६ यदन्व् इहापि नाउ. तृ१*अनुवया इति शोधः स्यात् [तु. प्र √वा > प्र-व्र-])।

d) पाभे. ?अनु-व्रा- > -या मा १५, ६ द्र.।

e) गस. उप. स्त्रियां भावे अङ् प्र.। कृत्-स्वरः प्रकृत्या (पा ६,१,१६२;२,१३९)।

f) अनु-वा॒। असि इति पदद्वयमजानानः अनु-वासि इति चैकं पदं संकेतयमानः SI. नितरां भ्रान्त इव।

g) तु. टि. अनु मा १२, ५ का १३, १, ६ तै १, ६, ५, २ यदनु शाखाभेदप्रवर्त्तकानामृषीणां विवक्षा-भेदप्रतीतेः शब्दतः समानास्वपि श्रुतिषु भिन्नाः पद-विभागा अनुकल्प्येरन्।

h) सपा. तै १,६,५,२⁴ शौ १०, ५, २५-२८ पै १६, १३१, १-४ बौश्रौ ३,२१ : २ च अनु विक्रमे इति, मा १२, ५⁴ प्रभृ. अनु विक्रमस्व <> मा २, २५¹ प्रभृ. माश १, ९, ३, १०¹; १२¹ शांश्रौ ४, १२, २-५ माश्रौ १, ४, ३, ११¹ वाश्रौ १, १, ४, २२¹ च व्यक्रंस्त इति पाभे.।

१६४, १८[a]; पै १६, ६७, ८;
अनुविदुः ऋ ७, ३३, ७;
अनु···विदुः ऋ १, ३४, २;
अनु···अवेदम् ऋ ४,२७,१.
अनु-विद्वस्[b]- -द्वान् काठ[c] ७, १४; ८, ३ १८, ४; ३४, १९; क ६, ८[c]; शौ १२, २, ३८; ५२; पै १७, ३३, ८; ३४, १०.
अनु-वेद- दुर्°.
अनु √ विद् (लाभे), अनु···विदे ऋ १,१३२,३.
¶अनुविन्दति तै २, ५, ३, ६; अन्वविन्दन् ऋ १०, १०९, ५; ¶तै १, ५, ९, ७; ५,१,२, २[d],७, १, ६, १; ¶मै १,८, २; ¶काठ २५, ७; २८, ४[e]; ३१, १४; ¶क ३९, ५; ४४, ४[e]; शौ २, २७, २; ५, १४, १; १७, ५; पै २, १६, २; ७, १, १; ९, १५, ५†; १०, ७, ९; १८, १५, ४[f]; अन्वविन्दत् ऋ २, १२, ११; शौ १९, २७, ९; २०, ३४, ११†; पै १३, ७, ११†;
अन्वविन्दन् ऋ ४, ५८, ४; ५, ११,६; ४०,९; ७, ७६, ४; १०, ७१, ३; † मा १५, २८; १७, ९२; †का १६, ५, ९; १९, १, ६; ¶तै २,५, ३, ६; ६, ६, २;९,४; ४, ४, ४, ३†; ६,२,८,४; ११, १; मै २, १३, ७†; ३, ८, ८ ¶; काठ २५, ९; २६, १[d]; ३१, १२; ३२, ६; ३९, १४; ४०, ७†; ¶क ४०, २; ४[d]; ४७, ११; †कौ २, २५८; †जै ३, २२, ५; शौ १३, १, ४?[f,g]; ७; पै ४, ३३,६;७,६,१;८,१३,४†; १५ ७; १७,१,३; १८,१५, ७;
अन्वविन्दन् शौ ४, २३, ६; ३५, २; अनु···अविन्दन् ऋ ३, ९,४; †अन्वविन्दः ऋ ८, ९६, १६; कौ १, ३२६; जै १, ३४, ४; शौ २०, १३७, १०; अनु···अविन्दः ऋ १,६,५; कौ २,२०२; जै ३,१८,९; शौ २०, ७०,१.
अन्वविदाम शौ १०,१,१९; पै १६,३६,९.
अनुविद्यते शौ १९,५०,४; पै ९,३,५;१४,४,१४.
अनु-वित्त[h]- -त्तः ऋ ४ १८,१.
¶अनु-वित्ति[i]- -त्त्यै तै ५, १, २,२; काठ २५, २;६; ९; ३१, १२;३२,६[?]; क ३८,५; ३९,३; ४०,२;४७,११.
¶अनु-विद्य काठ २५,७;९; २६,१, क ३९,५;४०,२;४.
¶अनु-वि √ धा, अनुविधीयते[j] मै ३, २,४,१०.
अनु-वि √ नश् (अदर्शने), >नाशि, अनु···विनश्य[k] शौ ६, ११३; २; अनुव्यनश्यन् मै १, ६, ६¶.
अनुविनाशयति[l] काठ ११, ४.
अनु-वि √ मृज्, अनु···विमृड्ढि[m] शौ ११, १, ३१; पै १६, ९२,१.

[a]) सपा. शौ ९,१४,१८ वेद इति पाभे.।
[b]) गस.। कृत्-स्वरः प्रकृत्या।
[c]) =सपा. तैब्रा ३,११,५ १। मै १,६,२ ?नु विद्वान् इति पाभे.।
[d]) सपा. अन्वविन्दत् <> अन्वविन्दन् इति पाभे.।
[e]) पाभे. अन्वपश्यत् मै ४,८,३ द्र.।
[f]) सपा. अन्वविन्दत् <> अन्वविन्दन् <> तैब्रा २,५,२,१ अविदत् इति पाभे.।
[g]) पाठः ? (तु. पाभे., अन्वविन्दत् इति WI. च)।
[h]) कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।
[i]) क्तिन्नन्ते पूप. प्रकृतिस्वरम् (पा ६,२,५०)।
[j]) पाभे. अनु काठ २०,३ द्र.।
[k]) वैतु. WI. यत्र कप्र. अनुः इत्युक्तं भवति। तदपि विमृश्यम्। नशीफेनानां विनाशक्रिययाऽधिकरण-संबन्धस्य विवक्षितत्वादसौ संबन्धः प्रधानभावेन समर्पयितुमिष्ट उत वा गुणभावेनेयेतद् विवेकाधीनत्वादत्रापेक्षितस्य निर्णयस्य। इहाऽनवस्थाय यत्र कुत्राऽपि विनाशोऽभिप्रेत इत्याशयेन यनि. द्र. (तु MW.)। सा इह अनु (?नि) विविक्ष्व इतीव श्रावयन् यद् व्याचष्टे तदाऽऽकारादेव यथावदनुसंधाय तस्य प्रथमस्य गतेः स्वरूपतः परिच्छेदः कर्त्तव्यः। सपा. पै १९, ३३, १२ ?अव··· विनश्य इति पाभे.।
[l]) अत्र अनुः सप्तम्यर्थानुवादी गतिर्वा यनि. साकल्याद्यर्थ इति भूयोऽपि विमर्शपदवीमारोप्यम्। उभयथा संभवात् सौवरमात्रविनिगमकान्तरस्य चाऽनुपलब्धेरिति दिक्। पाभे. अधि मै २,२,३ द्र.।
[m]) W. अनुः इतीव कप्र. मन्यते यदनु वि √ मृज् इत्यस्याऽकर्मकवृत्तस्य मृग्यत्वं द्र.।

अनु-वि✓विश्, अनुविविशन्तु काठ ११, ९; अनुविविशत[a] मै २, ४,७;८.

अनु-वि✓वृत्>वर्ति, अनुव्यवर्तयन्त शौ १५,७,२.

?अनु✓विश्, अनुविश्यताम्[b] पै १६,९,१०.

अनु-वि✓(सि>)षिच्, अनुविषिच्यते शौ ८,१५,४[c].

¶अनु-वि✓(स्था>)ष्ठा>तिष्ठ, अनुवितिष्ठते मै २,५,२.

¶अनु-वि✓सृज्, अनुविसृजति[d] काठ २१,२; क ३१,१७.

अनुवि-सृज्य काठ ३०,१; ३४,३; क ४६,४.

¶अनु-वि✓हृ, अनुविहरति मै २, ५,२.

¶अनु✓वी, अनुवेति मै ३, ८, ९; अनुवेतु[e] पै ९, १८, ४; ?अनु···वेः[f] ऋ १०,१०५,२.

अनु-वी(वि✓इ), अनुव्यायन्[g] मा १४, ३०; का १५, ९, ४; मै २, ८, ६; काठ १७, ५; क २६,४.

अनु-वी(वि✓ई)क्ष्, अनुवीक्षस्व[h] मा १३,३०; का १४, ३,४; मै २,७,१६.

अनु✓वृज्, >अनु,>नू-वृज्[i]- -वृग्भ्याम् तै ५,७,२३,१; काठ ५३,१३; -वृजौ शौ ९,४, १२; पै १६,२५,२.

अनु✓वृत्,>वर्ति, अनुवर्तते ऋ ५, ६१, ४; १०, ३७, ३; अनुवर्तते शौ १२, २, ३७; अनुवर्तेत पै १७, २५, ६†; ३३, ७; ¶अनुवर्तताम् शौ ११, ११, २१; अन्ववर्तत[2], अन्ववर्तत मै ४,३,४¶.

अनुवावृते कौ १, ३७२; जै १, ३९, ३; शौ ७, २२, १; पै २०, ५, २; अनु···वावृतुः ऋ ४, ३०, २; †अनु···अवृत्सत ऋ [५, ५५, १-९]; तै २, ४, ८, २; मै २, ४, ७[j]; काठ ११, ९; ३०, ४; क ४६,७[k].

अनुवर्तयामहै पै १९, ४१,९; अनुवर्तयामसि खि ३, १५, १९; अनुवर्तयतु पै १९,४१,८.

अनु-वर्तयत्[l]- -यन् शौ ११, १०, १८.

अनु-वर्ति[m]- -र्तयः पै २, ७५,४[1]; ५[3]; -र्तिः पै २, ७५, १[3]-३[1]; -र्तिम् पै २,७५,१-५.

अनु-वर्ति(न्>)नी- -नीम् पै २०, १९,८.

अनु(नु>)नू-वृत्- -वृत्[n] मै २, ८, ८; काठ १७, ७; ३७, १७; क २६, ६; -वृता मै २, ८, ८; -वृते[o] मै २, ८, ८; काठ १७, ७; ३७, १७; क २६,६.

अनु✓वृध्>φअनु-वृधत्[l]- -धत् ऋ ५,६२,५.

अनु✓वृष्>अनु-वर्षत्[l]- -र्षते तै ७,५,११,२; काठ ४५,२.

†अनु✓वेन्, अनुवेनते ऋ १०, १३५,१; अन्ववेनत ऋ ४,१८, ११; तै ३, २, ११, ३; मै ४, १२,५.

अनु-वेनत्[l]- -नन्तम् ऋ १०, १३५,२.

---

[a]) तु. टि. अनु तै २,४,८,२।

[b]) कैयादिको विप्रयोगार्थीयो ✓विष् अभिप्रेतः स्यादिति कृत्वा तदनुसारी शोधः द्र. सपा. (तु. [नि ✓हा त्यागे>] नि···हीयताम् [ऋ ७, १०४, १० शौ ८, ४, १०] इति पामे.)।

[c]) पामे. अनुप्रसृज्यते पै १६,१३८,१० द्र.।

[d]) पामे. अनु तै ५,२,५,२ द्र.।

[e]) मुपा. प्रश्नचिह्नमर्थं द्र.। यस्थि. संगतिसंभवात्।

[f]) पाठः? एवं किल सा. योगमाह। PW. प्रभृ. तु कप्र. पृथग्, वि->वेः इति धा च पृथगित्याहुः।

[g]) पामे. अनु तै ४,२,१०,२ द्र.।

[h]) सपा. काठ ३९, ३ अभिविपश्य इति पामे.।

[i]) =शरीरावयव-भेद-। काठ. पूप. ह्रस्वः पाठः।

गस. क्विबन्ते कृत्-स्वरः प्रकृत्या (पा ६, २, १३९)। भा. तु <अनु✓वृत्>ज् इति।

[j]) शुभम्>शुभे इति पामे. सत्यनन्वित इवाऽर्थतः अनुः द्र.।

[k]) °त्सत् पाठः? यनि. शोधः द्र.।

[l]) गस. शत्रन्ते कृत्-स्वरः प्रकृत्या (पा ६, २, १३९)।

[m]) गस. उप. कर्तरि इन् प्र. (पाउ ४,११९)।

[n]) सपा. मा १५, ९ का १६, २, ६ तै ४, ४, १,३ विवृत् इति, तां १, १०, ९ वैताश्रौ २६, ८ अनुवृत् इति च पामे.।

[o]) सपा. मा १५, ९ का १६, २, ६ विवृते इति, तां १, १०, ९ वैताश्रौ २६, ८ अनुवृते इति च पामे.।

१[a]; ५, ४[b]; ९, ७[c]; २९, १२[d]; ३३, २[e]; ३[f]; ४१, ८[d]; ४४, ५[g]; ५१, ५[h]; ६[h]; ७[h]; ६५, ३; ८६, २[i]; ६, ५, ७[j]; ७, २[b]; ४[b]; ९, ५[k]; १०, ५[l]; १६, ४४; १७, ८[m]; १८, ९[a]; १३[a]; १९, ३[n]; ९[o]; २१, १०[a]; १२[p]; २२, १[q]; २[q]; ३४, ४[r]; ३६, ५[s]; ३७, ३[t]; ३८, ३[b]; ४४, १७[u]; ४५, २५[b], ४९,

[a]) लक्षणे कप्र. [वैतु. सा. GW. प्रभृ. अभिप्र √मन्द् इति (तु. ऋ १,५१,१२; ८,१२,१७;५४,२;६०,४ प्रभृ. यतः √मन्द् इत्यस्याऽकर्मकं वृत्तं परिपोषमियात् )] ।

[b]) लक्षणे कप्र. (तु. टि. ऋ १,११,२;८;५१,१) ।

[c]) लक्षणे कप्र. (वैतु. सा. अभि···आभर इति) ।

[d]) लक्षणे कप्र. (तु. टि. ऋ १,५१,१) ।

[e]) जनान् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभिप्र···सक्षि इति) ।

[f]) स्वार्थप्रधानम् अव्य. । '(ये) अब्रह्मता (=अधर्मपरतया) अभि (=भी-राहित्येन) अस्मत्तोऽयुक्ताः (=वियुक्ताः) असन्, ते नव ते (=तव)' इति वा. (वैतु. GW. कर्मसाकाङ्क्षत्वे सत्यपि अभि···असन् इति) ।

[g]) लक्षणे कप्र. (तु. वें. सा.) ।

[h]) प्रयः इति द्वि. युक्तः कप्र. (तु. ऋ १, ४५, ८ प्रभृ. PW. GW. प्रभृ. च; वैतु. सा. अभि···यन्ति इति) ।

[i]) चर्षणीः इति द्वि. युक्तः कप्र. (वैतु. सा. 'रक्षत' क्रियापदमध्याहारुकः) ।

[j]) स्वार्थप्रधानम् अव्य. इति मतं भवति (तु. सा.; वैतु. म. [मा १८,७४] अभि···अश्याम इति, उ. GW. अभिवाजयन्तः इति । अन्त्यस्तु कल्पः स्वरतो दुष्टः द्र.) ।

[k]) अभिवियन्ति इति योगं PW. प्रभृ. आहुः, तन्न । कथं लक्षणविषयभूतस्य प्राधान्येन विवक्षायामभिः कप्र. स्यादित्यत्र निगमस्याऽस्य विशेषेण विनिगमकत्वदर्शनात् । तथाह्यत्रैकविशेषणप्रदानेन लक्ष्यभूतस्य क्रतोस्तमभिलक्ष्य बहूनां व्येतृणामपेक्षया तत्तद्दृग्-एककेन्द्रतया प्राधान्येन विवक्षा स्पष्टं प्रतीयते । सा च कप्र. अभिना यथा समर्पिता भवेन् न तथा तेन ग. (गतित्वेनाऽऽख्याताऽनुप्रवेशेन तदुपसर्जनभावोपगमात् ) इति कप्र. एवेहाऽभिः स्यान् न गतिरिति निर्गलितोऽर्थः । एतदाश्रयश्च न्याय एवंप्रकारके विवेके कर्तव्ये यथायथं सर्वत्र द्र. ।

[l]) जनान् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. प्रभृ. अभिसुन्ति इति योजुकाः सन्तः स्वरद्वयवर्तीं च षत्वाऽभाववर्तीं च स्थितिमवहेलयन्तः [तु. टि. ऋ २,२३,६]) ।

[m]) देवान् इति द्वि. युक्तः कप्र. (तु. पपा. वैतु. सा. PW. प्रभृ. अभ्यौ[भि-औ]हिष्ट इति) ।

[n]) अस्मान् इति द्वि. युक्तः कप्र. (तु. पपा.; वैतु. सा. PW. प्रभृ. अभ्या[भि-आ]ववृत्स्व इति) ।

[o]) विश्वतः ( =विश्वा दिशः ) इति द्वि. युक्तः कप्र. (वैतु. सा. अस्मान् इति सना. वा. आक्षेपुकः; GW. अभिसभेतु इति) ।

[p]) तु. टि. ऋ ४,४६,३ ।

[q]) तम् इति द्वि. युक्तः कप्र. ( तु. टि. ऋ १,५१,१; वैतु. सा. PW. प्रभृ. प्रथमे स्थ. अभ्यर्चे इति द्वितीये स्थ. सा. अभि तुष्टुवुः इति) ।

[r]) लक्षणे वेत्थंभूतलक्षणे वा. कप्र. *वन्वँ > *वन्वन्न् > *धन्वम् (<*वन्व- [यनि.]) इत्यनेन यतिप्रयोजितोपधागुरुभावमिथ्याप्रत्यायितनकारद्वयप्रकृत्याऽपत्त्या सुशोभेनाऽन्विताः [वैतु. सा. अभि इति स्वार्थप्रधानम् अव्य. इति सं-यत (<सम् √इ, =संयंतः आपः) इति च नितरामुपेक्षितस्वरसंस्कारः (स्याद्वा कथमपि क्रिवि. इति कृत्वा सं-यत ? इति न. द्वि१ इतीव प्रत्यायुकः ) उपेक्ष्यः; GW. अभिसम्···वावृधुः इत्यन्याय्योभयगतिस्वरत्वेन योजुकः; LR. Gri. अभि इत्येतं जनुम् इत्येतेन योजुकौ सन्तावपि सा. वा. नेदीय इव स्पृशन्तौ समानं चिन्त्यौ] ।

[s]) भूम इति द्वि. युक्तः कप्र. । 'भूम्ना (विस्तारेण) अर्यः (<अरि- ) रायः (प्र३; वैतु. सा. द्वि३ इति वदन् स्वरतश्चिन्त्यः) द्यु-सदृशाः इति वा. द्र. (तु. GW.; वैतु. सा. भवसि इति क्रिप. आक्षेपतस्तत्परं गतित्वमुपकल्पुकः) ।

[t]) श्रवः इति द्वि. युक्तः कप्र. । 'अश्वा इन्द्रं श्रवः अभिलक्ष्याऽच्छा वहेयुः' इति वा.; वैतु.सा. अभि···वहेयुः इति योगः [रथेऽवस्थितिभाज इन्द्रायाऽश्वकर्तृकं हविरभिवहनाऽऽख्यमश्रुतपूर्वं कर्म कुतूहलैकहेतु सद् उपेक्ष्यम्]; PW. प्रभृ अभि···ऋज्यन्तः इति) ।

[u]) स्वार्थप्रधानम् अव्य. (तु. पपा.; वैतु. सा. PW. प्रभृ. अभ्यादेदिशानान् इति द्विस्वरयोगं मन्वानाः (आ √दिश् इत्यस्य च दाशतय्यां [तु. १०,१२३,४] सकर्मकता-प्रसङ्गाद् उपेक्ष्याः) ।

१४[a]; १५[b]; ५०, ६[c]; ५३, २[d]; ६०, २[e]; ७[f]; ६१, १४[g], ६३, ७; ७, १५, २[h]; १८, १६; २३, ६[e]; ३१, ४[i]; ३२, २२[j]; २४[k]; ३३, ९[l]; ३४, ५[m]; ३७, ७[n]; ३९, ४[o]; ४८, ३[p]; ६०, २[q]; ६९, २[r]; ८३, ५[s]; ८८, २[t];

a) रातिषाचः (द्वि३ =यजमानान्)' इति द्वि. युक्तः कप्र. ('=तानुद्दिश्य राये भगस्तत् ⌊=चनः⌋ ओषधीभिः प्रजिन्वतु' ⌊तु. Pw. प्रभृ.; वैतु. सा. अभि इत्युपसर्गश्रुतिरिति कृत्वाऽध्याहृतेन क्रिप. तृतीयपादगं पृथग् वाक्यं रचयंश्चिन्त्यः⌋)।

b) विशः इति द्वि. युक्तः कप्र. ('आ देवीभ्यो विड्भ्यो जनान् ⌊=पुत्रपौत्रादीन्⌋ अश्नवाम ⌊च⌋ अदेवीः स्पृधोऽभिक्रमाम च' इत्येवं स्वारसिके वा. सत्य् उत्तरार्धे मध्यमः पादो भिन्नक्रमः द्र. ⌊वैतु. सा. Pw. प्रभृ. प्रथमपादगतं जन-शब्दं शत्रुपर्याय इति कृत्वाऽभिक्रम्यत्वेन व्याचक्षाणा उत्तमे पादे अभ्यश्नवाम इत्यन्याय्यद्वैवर्थ्यदूषितं योगमङ्गीकुर्वाणाश्च⌋)।

c) लक्षणे कप्र. (तु. टि. ऋ १,५१,१)।

d) वसु इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. GW. प्रभृ. अभि···नय इति)।

e) योधिष्टम् इति क्रियायोगमाहुरर्वाञ्चः। तथा तु सति कर्माऽऽकाङ्क्षायां गवादीनां संनिहितत्वात्तैः सहेन्द्राग्नी युद्धमकुरुतामित्याकारकोऽनिष्टोऽर्थः प्रसज्येत। तानभिलक्ष्य वृत्रादिभिरित्यन्वये तु सर्वं सुन्दरमिति दिक्।

f) युवाम् इति द्वि. युक्तः कप्र. (वैतु. वें. सा. अभि···अनूषत इति योगः)।

g) वस्यः इति द्वि. युक्तः कप्र. (वैतु. सा. Pw. प्रभृ. अभि···नेषि इति)।

h) चर्षणीः इति (अत्यन्तसंयोगे) द्वि. युक्तः कप्र. (तु. सा. GW.; वैतु. Pw. MW. अभि निषसाद इति मन्वाना उल्लक्षणस्वरत उपेक्ष्यौ)।

i) लक्षणे कप्र. (तु. टि. ऋ १, ११, २; ८; ५१, १)। यत्तु सा. त्वाम् इत्यस्योपक्षेपमिव कुर्वाणस्तदभिसंबद्धः कप्र. अभिः इति कृत्वा व्याचष्ट, तदंशतोऽसत्। उपक्षेप्यस्य श्रूयमाणत्वे सति तदुपक्षेपणस्य व्यर्थश्रमाऽव्यभिचारात्। कथं तच्छ्रवणमिति। त्वायवः इत्यत्र त्वा। आयुवः (<आयु-) इत्येतयोर्द्वयोः पदयोः सद्भावोपगमादिति (वैतु. पपा. प्रभृ. त्वायु->युवः इति; तु. ऋ १, १३९, ३ ⌊यत्र सा. अभ्यायुः इतीवैकं पदं लिपाधयिषुः पपा. उदात्तपूर्ववर्तिनः स्वरितस्य विशिष्यमाणमपि संकेतमवजानानः स्वयं नितरामुपेक्ष्यः द्र.⌋; ८, ३, ७ च ⌊यत्राऽऽयवो देवतामभिलक्ष्य स्तुतिवाचनपरतया समानं श्राव्यन्ते⌋)। एस्थि. छन्दोनुरोधतः वयमिन्द्र त्वा आयवो अभिप्रणोनुमो वृषन् इत्येषाऽऽर्धर्ची मूलस्थितिः द्र.।

j) लक्षणे कप्र. (तु. टि. ऋ १,११,२;८;५१,१)।

k) औपसर्गिकम् अव्य. व(<स)तः (<सत- <√अस्⌋ द्वि३ ⌊वैतु. सा. प१⌋) इत्यस्य विप (तु. टि. ऋ२, ४, ९ पपा. च; वैतु. सा. अभि···आभार इति, GW. अभीषतः इति)।

l) निण्यम् इति द्वि. युक्तः (वैतु. वें. सा. Pw. प्रभृ. अभिसंचरन्ति इति)।

m) यज्ञम् इति द्वि. युक्तः कप्र.। शेषं तु. टि. ऋ २, १५,५।

n) यम् (=यस्य संमुखे) इति द्वि. युक्तः कप्र. (तु. Pw. प्रभृ.; वैतु. सा. अभि···नक्षन्ते इत्य् आक्षेपमूलकं योगं पश्यन्न् उपेक्ष्यः)।

o) सा. सन्ति इति क्रियायोगमाह, तन्न। तथात्वेऽर्थवैपरीत्यप्रतीतेः। देवा हि यज्ञेषु सधस्थं (=साधस्थ्यं सहभावम्) इच्छन्ति न तु तस्याऽभिभवनं कुर्वन्ति। उपसर्गत्वाऽभावे षत्वाऽभावस्य द्वैस्वर्यप्रसक्तेश् च ज्ञापकताऽपि पूर्वोक्तं मतं द्रढयति (तु. टि. ऋ २, ४, ९;२३,९)।

p) नापू. टि. दिशा कप्र. द्र.।

q) उभे इति द्वि. युक्तः कप्र. (तु. वें. सा.; वैतु. GW. MW. अभि···उदेति इति)।

r) पुत्र भूमा इति द्वि. युक्तः लक्षणे वेत्थंभूताख्याने वा कप्र.। उत्तरे कल्पे भूमा इत्यत्राऽत्यन्तसंयोगे द्वि. द्र. (तु. GW. प्रभृ.; वैतु. सा. अभि···आयातु इति)।

s) मा इति द्वि. युक्तः कप्र. (तु. पपा. GW.; वैतु. सा. Pw. प्रभृ. अभ्या⌊भि-आ⌋तपन्ति इति। तच् चिन्त्यम्। आ√तप् इत्यस्येहाऽकर्मकवृत्तेः ⌊तु. शौ ८, ६,१२; १२, ३,५०⌋)।

t) अन्धः, वपुः इति द्वि. युक्तः कप्र. (वैतु. सा. Pw. प्रभृ. अभि···निनीयात् इति)।

१०४, २[a]; २१[b]; ८, २, १९[c]; ४०[d]; ३, ३[e]; ६, ७[e]; ३४[e]; ४२; ८, १२[f]; १२, १५[e]; २३[e]; १३, २८; १५, १[g]; १७, ७[h]; १५[i]; २०, १९[j]; २१, ५[e]; २३, २६[k]; २५, २१[l]; २७, ६[m]; ३२, १३[n]; २८[o]; ४०, ४[g]; ४५, २२; ४६, १४[p]; ४८, १[q]; ४९, १[r]; ५५, १; ५९, ३[s]; ६०, ४[t];

a) अघ्शंसम् इति द्वि. युक्तः कप्र. (तु PW. प्रभृ.; वैतु. वें. सा. सुम्···अभि ⌊अवतम्⌋ इत्याक्षेपपूर्वकं गतित्वपक्षपातः, GW. सुम्···अभि···ययस्तु इति च)।

b) स्वार्थप्रधानम् अव्य. (तु. सा. प्रभृ. ⌊=प्रत्यक्षे पूजापराणां परोक्षे पूजाविध्वंसकानाम्⌋)।

c) अस्मान् इति द्वि. युक्तः कप्र. (तु. सा. MW.; वैतु. GW. अभि···हृणीथाः इति)।

d) मेध्यातिथिम् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभियन् ⌊< ? अभियन्-⌋ इति)। सस्थ. टि. ?युन्नय इत्यपि द्र.।

e) लक्षणे कप्र. (तु. टि. ऋ १,११,२;८;५१,१)।

f) स्तोमम् इति द्वि. युक्तः कप्र.। 'एवं खल्वयं स्तोमो मयाऽकारि, यथाऽश्विनौ इममभि वह्नी (=एतद्ग्रहणाऽभिप्रायाविव) सन्तौ···अनूषाताम् (=आत्मनो नमनमिवाऽकार्ष्टाम्)' इति वा. (तु. टि. ऋ १,११,२;८;५१,१)।

g) लक्षणे कप्र. (तु. टि. ऋ १,५१,१)।

h) त्वा इति द्वि. युक्तः कप्र. (वैतु. सा. अभि···प्र···सर्पतु इति)।

i) भूयसः इति द्वि. युक्तः कप्र.। 'एकोऽपि सन्नभि बहून् भूर्णिमश्वमनयत्' इति तृतीयपादान्तमेकं वाक्यं द्र. (वैतु. सा. पूर्वार्धेन वाक्यं परिच्छेत्तुमाक्षेपमुखः 'अभिभवति' इति गतित्वपरः)।

j) पावकान् इति द्वि. युक्तः कप्र. (तु. अभि ऋ १, ५१,१; वैतु. सा. PW. अभि···गाय इति)।

k) उत्तमे पादे देवता-निषदनक्रियामात्रस्य विवक्षितत्वात्तस्य च कर्मनिरपेक्षत्वात् पूर्वार्धर्चश्रावितपदार्थाऽभिलक्ष्यत्वं तदानुषङ्गिकसामीप्यसंकेतमात्रत्वं वा द्र. (तु. टि. ऋ ४,६,१;७,१५,२; सा.; वैतु. ?वें. अभिनि √षद् इति)।

l) उद् √चर् इत्यस्याऽकर्मकवृत्तौ प्रसिद्धायामपि (पा १, ३, ५३) यत् सा. pw. प्रभृ. संभवच्चारुयोगान्तरम् अभि गत्यन्तरतया उच्चर इत्याख्यातेनैवाऽभिनद्धुमिच्छन्ति, तत्तेषां सौवरानुशासनस्याऽभिध्यातादुल्लङ्घनहठान् न व्यतिरिच्येत। अतः लक्षणे कप्र. अत्र अभिः इत्येवाऽवदातम्।

m) हव्या इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. सा. PW. अभि···प्रयाथन इति। वस्तुतस्तु अभि ··या··· हव्या···प्रयाथन, ⌊अभि ता हव्या⌋ इत्येवमुत्तरार्धर्चशिरस्यावर्त्य इन्द्रादयो बर्हिरासदन्तु इति वा. द्र.)।

n) इन्द्रम् इति द्वि. युक्तः कप्र. (तु. इन्द्रम् अभि ⌊ऋ १,४,१० प्रभृ.⌋ इन्द्राय इति चतुर्थ्यन्तम् अर्थानुविधायि पदम्)।

o) व्रता इति द्वि. युक्तः कप्र. (तु. PW. प्रभृ.; वैतु. वें. सा. च अभि···चेतति ⌊देवेषु⌋ इति)।

p) वीरम् इति द्वि. युक्तः कप्र. (तु. अभि ऋ ८,२०, १९; वैतु. सा. PW. प्रभृ. च अभि···गाय इति)।

q) युम् इति (अभिलक्ष्य-भूतस्य) द्वि. युक्तः कप्र. प्राधान्येन समर्पणे श्रुतिस्वारस्यात् (वैतु. सा. GW. प्रभृ. अभिसंचरन्ति इत्युत्तन्त्रमिव योजुकाः)।

r) लक्षणे कप्र. (तु. टि. ऋ १,५१,१; ३,५१,४)।

s) *अभि- इत्यस्य क्रिवि. सतः न. द्वि१ द्र. [तु. पपा. (वैतु. GW. प्रभृ. अभि इतीह भवतीति कृत्वा अभिपाति इत्यन्याय्यद्वैस्वर्यदूषितं योगं प्रकुर्वाणाः)। *अभ-, *उभ-, *द्व-, द्वि- इत्येतैः प्राति. सजाते सति *अभि- इति द्वित्वार्थ-विशिष्टे कास. च उप. प्रकृतिस्वरम् (पा ६, २, १३९) च प्राति. अन्यत्(> द्) इति पूप. च (भावे) √भृ > *भ्रि- > *भि- इति उप. च द्र. (*अन्यभ्रि-> *अन्नभ्भि-> *अँभि-> *अभि- इति वर्णसमापत्तिश्च निघातसुकरतरवर्णलोपश्चेत्यभिसंधः ⌊तु. WW १,५४३⌋)]। एस्थि. 'यः अदब्धः वाम् अभि (=इन्द्रं चाऽन्यतो वरुणं चाऽन्यतः) चित्तिभिः पाति' इति वा. द्र.। न चापि अभि इत्येव लक्षणे कप्र. वाम् इत्येतदन्वित इति सुवचम्। तथा सति √पा (रक्षणे) इत्यस्य कर्माऽऽकाङ्क्षाया दुष्पूरत्वात्। अभि इत्यत्रैवाऽऽग्रहश्चेत्तर्हि स्वार्थप्रधानम् अव्य. तद् द्र. इति दिक्।

t) प्रयांसि इति द्वि. युक्तः कप्र. (तु. पूर्वार्धे वीतये इत्यस्य सकक्षो योगः; वैतु. सा. अभि···गहि इति, GW. च यनि. इति वा अभि···आ···गहि इति वा संकल्पुकः)।

६६, १०[a]; ६७, ९[b]; ६९, ४[c]; ५[d]; ११[c]; ७२, २[e]; ७४, १४[f]; ७५, १५[g]; [(७६, ५) | ८८, ११[c]; ४[h]; ८९, ४[i]; ९२, १[c]; ५[c]; ९३, १; ४[j]; १९[k]; २१[l]; ९५, १[c]; ९, | १, २[m]; ४[n]; ३, १[o]; ४, ७[p]; ८[p]; ६, २[q]; ३[r]; ७, ३; ८, १[s]; ९, ५[t];

[a]) पणीन् इति अभिभावकत्वेन प्रतिमानवचनः द्वि. युक्तः कप्र. (वैतु. वें. सा. गतित्वपरौ सन्तौ 'भवति' इत्याक्षेपुकौ)।

[b]) 'अस्मानभिलक्ष्य रिपूणां मृचा मा प्रमृक्षत (=प्रकर्षेण मृक्षाः [<√मृक्ष् <मृक्ष- <√मृच् यद्र.]) भवत' इति वा. कृत्वा नः इति द्वि. युक्तः कप्र. (वैतु. सा. मृक्षत <√मृश् वा √मृज् वेति विकल्पुकः, पूर्वे कल्पे PW. प्रमृ. अपि तमनुसरन्तश्च सन्तः अभिप्रमृक्षत इत्येवं योगेऽपलक्षणद्वैस्वर्यं स्वैरं पोषुकाः)।

[c]) लक्षणे कप्र. (तु. टि. ऋ १,११,२; ८; ५१,१)।

[d]) यत्र अभि (='यत्राऽभितो वर्तमानाः सन्तः [तु. टि. ऋ १,११,२]) इत्येवं संबन्धे सति स्वार्थप्रधानम् अव्य. द्र.; (वैतु. वें. सा. GW. प्रमृ. अभिसंनवामहे इति)।

[e]) अंशुम् इति द्वि. युक्तः कप्र. (तु. GW. प्रमृ.; वैतु. वें. अभि…नि…सीदत् इति, सा. च्युतपद इव द्र.)।

[f]) प्रयः इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. PW., सा. चाऽपि व्यामुग्धभाषी)।

[g]) अवरान् इति द्वि. युक्तः कप्र.। 'परस्याः संवतोऽधि यत्राऽहमस्मि (तत्र) अवरान् (मन्नेदिष्ठान्) अभिलक्ष्य आतर तान् अव (च)' इति वा. द्र. (तु. पपा.; वैतु. सा. भा. [तै.] उ. म. च [मा.], PW. प्रमृ. च अभ्या[भि-आ]तर इति)।

[h]) योद्धाऽसि इति च पृथक्, उपसर्गश्रुतिबलात् 'अभि-भवसि' इति च पृथग् योगाविति सा. अभिप्रैति, तच् चिन्त्यम्। एकेन वाक्येनाऽर्थसिद्धौ वाक्यद्वयी दुष्कल्पा भवेदिति दिक्। अथवा अभियोद्धृ- इति प्राति. विवक्षितं स्यात्। तद् योद्धा सन् 'अभि भवसि' इति च प्रथमे कल्पे 'अभियोद्धाऽसि' इति च द्वितीये कल्पेऽन्वयौ भवेताम् इति विवेको विमृश्यः (तु. GW.)।

[i]) लक्षणे कप्र. (तु. टि. ऋ ४, ५६, ५; वैतु. वें. सा. GW. प्रमृ. अभिप्रभर इति [इह भर <√भृ वा √हृ वेत्येष विषयः प्र√हृ >भृ इत्यत्र सस्थ. विवेच्यमानं यद्र.])।

[j]) युत् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. PW. प्रमृ. अभि…उद्गाः इति)।

[k]) नः इति द्वि. युक्तः कप्र.। 'अस्मभ्यम्' स्तोतृभ्यः इति श्रुतिरेतदेवाऽभिवदति (तु. टि. ऋ ५,४,१; वैतु. सा. स्वार्थप्रधानम् अव्य. इति, PW. प्रमृ. च अभिप्रमन्दसे इति)।

[l]) नः इति द्वि. युक्तः कप्र.। 'अस्मभ्यं रयिं दाशुषे प्रयन्ता बोधि' इति वा. (तु. एपू. श्रुतौ; वैतु. वें. सा. योग्यक्रियाऽध्याहारिणौ)।

[m]) अभि…आसदत् इति योग इति सा. आह, तच्चिन्त्यम्। योनि-सधस्थयोः पार्थक्यान्वये मन्त्रस्वारस्यप्रतीतेः। यथा चाऽभिलक्षणविषयत्वेन योनिम् इति पृथग् अन्वयमर्हति द्रोणाधिकरणकं साधस्थ्यं च आ√सद् इत्यस्य कर्मतया पृथग् गम्यत इति मा २६,२६ इत्यतः स्पष्टं प्रतीति-गोचरं भवति। उपाश्रयमभिलक्ष्यमाणः सोमो द्रोणकलशे तमुपलभत इति निर्गलितोऽर्थो भवति। एस्थि. अपि व्यधिकरणसमानाधिकरणपट्ट विभक्तिव्यत्ययस्याऽगतिगतीयमानस्य यदुपाश्रयम् उ. म. च जगृहतुस् तन् नितरां साहसमात्रतामुपेयाद् इत्युपेक्ष्यम् (तु. एउ. टि.)।

[n]) वीतिम्, वाजम्, श्रवः इति द्वि. युक्तः कप्र. (तु. टि. ऋ ९,६३,१२; वैतु. सा. PW. प्रमृ. अभ्यर्ष इति)।

[o]) द्रोणानि इति द्वि. युक्तः कप्र. इत्थंभूतलक्षणे वा सप्तम्यर्थानुवादी वा कप्र. (तु. एपू. टि., सा. GW. च; वैतु. PW. MW. अभि…आसदम् इति)।

[p]) रयिम् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभ्यर्ष इति)।

[q]) मदम्, अर्वतः इति द्वि. युक्तः कप्र. (वैतु. सा. अभि…क्षर इत्येवं संभेदुकतयाऽरुचिरप्रयोगः)।

[r]) मदम्, वाजम्, श्रवः इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभि…अर्ष इति)।

[s]) कामम् इति द्वि. युक्तः कप्र. (वैतु. GW., सा. च कामम् [=काम्यम्] इति कृत्वा अभि…अक्षरन् इति)।

[t]) तच्छब्देन परामृष्टस्य पदार्थस्याऽभिलक्ष्यत्वेन प्राधान्यसाकाङ्क्षत्वप्रतीतेः अभिः अत्र कप्र. भवति (वैतु. सा. अभि…आदधुः इति च, GW. अभिसन्तम् इति च)।

१२, २[a]; ८[b]; १३, २[a]; ७[c]; १४, ७[d]; १७, २[e]; ६[a]; २०, ४[f]; २१, ३[g]; २३, १; ⌊४[ah]; (१०३.३)⌋[i]; २५, २[j]; २६, २[a]; ३०, ४[k]; ⌊३२, ५; ३३, ५⌋[a]; ३४, ५[l]; ३५, ३[m]; ३६, २[n]; ३७, २[o]; ३८, ६[p]; ४२, ५[aq]; ४४, १[r]; ४५, २[s]; ४८, ३[t]; ५१, ५[au]; ५६, ३[a]; ५७, २[v]; ६२, १; २३; २५[w]; २८; ६३, १२[ax]; २५[y]; २९[z]; ६४, २१[a]; ६५, १९[a1]; ६६, १[w]; ४;

a) लक्षणे कप्र. (तु. टि. ऋ १, ५, १; ११, २; ८; ५१,१)।

b) 'दिवः (ष. ⌊वैतु. सा. पं. इति⌋)' प्रिया पदा इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभि···अर्षति ⌊वैतु. ऋ ९,३४,१;६७,४;९७,३२; १०७, १५ यत्र धा. अस्याऽकर्मिका वृत्तिः श्रूयते⌋)।

c) वत्सम् इति द्वि. युक्तः कप्र. । 'यथा वत्समभिलक्ष्य धेनवो वाश्राः स्युस्तथा वाश्राः सन्त इन्दवोऽर्षन्ति', इति वा. (वैतु. सा. अभि···अर्षन्ति इति, GW. प्रभृ. अभि···दधन्विरे इति च)।

d) पतिम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभि···समग्मत इति)।

e) पृथिवीम्, इन्द्रम् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. प्रभृ. अभि···अक्षरन् इति)।

f) 'मघवद्भ्यः' यशः इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभ्यर्ष इति)।

g) सधस्थम् इति द्वि. युक्तः कप्र. (तु. GW; वैतु. सा. आक्षेपमुखः सन् अभि···अक्षरन् इति ⌊वैतु. यनि. संवादनीयाः श्रुतयः ऋ ९, १२, ३; ३९, ४; ८५,१०⌋)।

h) सदम्, कोशम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभि²···पवन्ते इति)।

i) तु. सस्थ. टि. परि ।

j) योनिम् इति द्वि. युक्तः कप्र. (वैतु. सा. आक्षेपमुखः सन् 'अभिविश' इति, PW. प्रभृ. अभि···कनिक्रदत् इति च)।

k) तु. टि. ऋ ९,३,१।

l) ईम् इति द्वि. युक्तः कप्र. (तु. PW. प्रभृ.; वैतु. वें. सा. अभि···दुहते इति ⌊आत्म. त्वेवं सति चिन्त्यं द्र.⌋)।

m) वार्यम् इति द्वि. युक्तः कप्र. (वैतु. सा. अभि··· क्षर इति)।

n) कोशम् इति द्वि. युक्तः कप्र. (तु. PW. प्रभृ.; वैतु. सा. अभि···पवस्व इति)।

o) योनिम् इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. सा. योग्यक्रियामध्याहारुक उपसर्ग इति)।

p) तु. नापू. टि. यतः अभि···अर्षति इति योग इति सा. इत्येव विशेषः द्र.। उभयत्र क्रन्दनस्याऽभिलक्ष्यवस्तुसमर्पणे श्रुतिस्वरसः द्र.।

q) वार्या, देवान् इति द्वि. युक्तः कप्र. (अर्षणस्याऽभिलक्ष्यवस्तुसमर्पणो श्रुतिरित्यभिसंधिः ⌊वैतु. सा. GW. प्रभृ. अभि···अर्षति इति⌋)।

r) देवान् इति द्वि. युक्तः कप्र. (वैतु. सा. श्रुतिस्वारस्यविघ्नैकफलं वाक्यान्तरं कुर्वाणः क्रिप. अध्याहारतो गतित्वमस्याऽभिलाषुकः; GW. प्र···अर्षसि इति च)।

s) नः इत्येतद् युक्तः लक्षणे कप्र.। 'अस्मदभिप्रायत इन्द्राय दूत्यमर्षं च (अस्मभ्यं) सखिभ्यो वरम् आ (यावद्) देवान् तोशसे च' इति वा. द्र.। एस्थि. नेयं गायत्री स्यात्। किं तर्हि द्विपदा त्रिष्टुब् वा जगती वा यस्याः तोशसे इति-प्रभृति द्वितीयः पाद इति। प्रथमे पादे अभी इति क्वचिद् दीर्घो यच्छ्रूयते ततो मौलिक्या यतेः संकेतलाभः स्यादिति दिक् (वैतु. सा. प्रभृ. अभि··· अर्ष इति)।

t) रयिम् इति द्वि. युक्तः कप्र. (तु. सा. प्रभृ.)।

u) पवित्रम्, वाजम्, श्रवः इति द्वि. युक्तः कप्र. (वैतु. सा. एकत्र 'रक्ष' इति क्रियामाक्षेपुकः, अन्यत्र च ⌊तु. GW. च⌋ अभ्यर्ष इति)।

v) प्रियाणि काव्या इति द्वि. युक्तः कप्र. (वैतु. सा. प्रभृ. अभि···अर्षति इति)।

w) काव्या इति द्वि. युक्तः कप्र. (तु. वें. सा. वैतु. GW. अभि···पवस्व इति)।

x) रयिम्, वाजम्, श्रवः इति द्वि. युक्तः कप्र. (वैतु. वें. सा. GW अभ्यर्ष इति)।

y) काव्या इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. सा. अभि···असृक्षत इति)।

z) शुष्मम् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. GW. अभ्यर्ष इति)।

a1) द्रोणानि इति द्वि. युक्तः कप्र. (तु. वें. सा.; वैतु. GW. अभि···अर्ष इति)।

६७, ३[a]; १४[b]; ६८, ८[c]; ७०, १०[d]; ७१, ७[e]; ७२, ३[e]; ७५, १[f]; ३[c]; ७७, १[g]; ४[h]; ७८, ३[i]; ७९, ३; ८०, २[c]; ८२, २[j]; ३[k]; ८६, २[l]; ३[d]; १५[m]; १७[n]; २५[o]; ३५[o]; ३६[p]; ८७, १[q]; ५[q]; ६[q]; ७[r]; ८८, ६[s];

[a]) शुष्मम् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. GW. अभ्यर्ष इति)।

[b]) द्रोणा इति द्वि. युक्तः कप्र.। 'द्रोणाभिप्राप्तये कनिक्रदत् सन् वर्म विगाहते' इति वा. द्र. (तु. ऋ ९ ४३,५; वैतु. सा. प्रथमे वर्णके 'गच्छति' इति क्रिप. गतित्वेन योजुकः [तु. वें.], GW. MW. अभि···कनिक्रदत् इति च)।

[c]) लक्षणे कप्र. (तु. टि. ऋ १,११,२;८;५१,१)।

[d]) वाजम् इति द्वि. युक्तः कप्र.।

[e]) 'अभिलक्ष्य अत्येति' इति योगमभिप्रयन् सा. न साधुवादी, कर्मभेदात्। अभि√इ इत्यस्य हि गात्रोऽभिलक्ष्यत्वेन कर्मभूताः। अति√इ इत्यस्य तु पवित्रं कर्म गम्यम् (तु. ऋ ९, ९७, ३१)। अतः अभेः कर्मप्रवचनीयता द्र. यथाऽऽहतुः वें. GW.। अथवा अभि इत्यनेन योग्यक्रियाध्याहारमुखेन √इ इत्यस्याऽभ्यासः द्र.। उभयथाऽपि अति√इ इत्यस्य गम्य-कर्मत्वं न विहन्यत इति दिक्।

[f]) नामानि इति द्वि. युक्तः कप्र. (तु. सस्थ. टि अधि; वैतु. वें. सा. PW. GW. अभि···पवते इति)।

[g]) ईम् इति द्वि. युक्तः कप्र.। 'इन्द्रस्य वज्रमभिलक्ष्य वाश्राः सत्य ऋतस्य [धेनवः] अर्षन्ति [अपरा धेनवः] पयसा पयोदोहनिमित्तमातुरायमाणाः सत्यो वाश्रा यथा' इति वा. द्र.।

[h]) लक्षणे कप्र. (वैतु. वें. सा. PW. प्रभृ. अभ्यु[भि-अ]-र्षन्ति इति)।

[i]) सोमम् इति द्वि. युक्तः कप्र. (तु. सस्थ. टि. अन्तर् इति; वैतु. वें. सा. PW. प्रभृ. अभि···अक्षरन् इति)।

[j]) वाजम् इति द्वि. युक्तः कप्र. [='वाजाय मृष्टः' इति वा [तु. ऋ ९, ३, ३], 'वाजाय अर्षसि' इति वा (तु. ऋ १, १८०, २; ४, २१, ८; ५, १०,१; ४३,२; ९,६२,१८;७७,३; ८६,३४; ८७,५ प्रभृ.); वैतु. वें. सा. प्रभृ. अभि···अर्षसि इति]।

[k]) गाः इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. वें. सा. PW. प्रभृ. अभि···असरन् इति)।

[l]) लक्षणे कप्र. यद्वा यथाऽऽहतुः वें. सा. योग्यं क्रियान्तरमाक्षेप्यम्। उत्तरस्मिन् कल्पे वाक्यद्वयत्वे गौरवं तु द्र.।

[m]) संयुतः इति द्वि. युक्तः कप्र. (वैतु. वें. सा. PW. प्रभृ. अभिसंयाति इत्यू आख्यातिकं योगमाहुः, तन्न। अनिष्ट-द्विस्वरता-प्रसङ्गात्, पदविशेषात्मकाऽपादानैकत्वाऽपेक्षया संयान-विषयविभूतानामभिलक्ष्याणां सतां बहुत्वस्य प्राधान्येन विवक्षितत्वाच् च तदर्थं तत्-साधनतया कप्र. ग्रहणौचित्यादिति दिक्)।

[n]) एकतरत्र सोमम् इति द्वि. युक्तः कप्र. अन्यत्र च सप्तमीवचनः ईम् इत्येतदन्वितः (प्रथमे स्थ. [तु. टि. ऋ १,११, २; ८;५१, १] द्वितीये स्थ. [वैतु. वें. सा. PW. प्रभृ. अभि···अशिश्रयुः इति])।

[o]) 'अस्मभ्यम्' इषम्, ऊर्जम् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. प्रभृ. अभ्यर्षसि इति योजुकाश्चिन्त्याः [सोमकर्तृकस्येषश्चोर्जश्च साक्षादभ्यर्षणस्य संगत्यसंभवादिति यावत्])।

[p]) शिशुम् इति द्वि. युक्तः कप्र. ('सोमाख्यस्य नवशिशोः प्रादुर्भावे मातृत्वमुपगताः' इति वा. [तु. ऋ ९, १०२,४ यत्रैना मातृत्वप्रतिष्ठामुपजीविनीव श्रुतिः प्रवर्तेत; वैतु. वें. सा. प्रभृ. गतित्वाऽभिप्रायाः सन्तः 'गच्छन्ति' इत्येतदध्याहारुकाः])।

[q]) गव्या, श्रवांसि इति द्वि. युक्तः कप्र. (तु. वें. GW. प्रभृ.; वैतु. सा. अभि···असृग्रन् इति योगमुशन् असौ व्याहतस्तु भवति। गव्यलक्ष्यीकरणमात्रेणाभेर्गतार्थतायां प्राक् तदुक्तवतोऽनुपदं क्रियाभिसंबन्धवादिनस्तस्य मते अभेः पुनः प्रसवस्य दुरुपपदत्वात्। न च पवित्रैर्गव्यानि लक्ष्यीकृत्य सोमाः सृज्येरन् इति वक्तुं लभ्यते, कर्तृभेदात्। गव्यलक्ष्यीकरणं हि सोमकर्तृकं सोमसृष्टिश्च पवित्रकर्तृकेति भावात्)।

[r]) गाः इति द्वि. युक्तः कप्र.। परि···अदधावत् इति संबन्धः (तु. GW.; वैतु. वें. सा. गा गव्युन् इत्येवं संबन्धुकौ सन्तौ 'गच्छति' इत्यध्याहारमुखेन युयोजयिषन्तौ)।

[s]) कलशान् इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. सा. PW. अभि···असृग्रन् इति)।

८९, ७[a]; ९०, २[b]; ९३, २[c]; ९४, २[d]; ५[e]; ९६, ८[f]; १६[४g]; ९७, ४[h]; १२[i]; २१; २५[j]; ३९[k]; ४५[l]; ४९[४m]; ५०[४n]; ५१[४o]; ९८, १[p]; २[q]; ९९, २[r]; ४[s]; १००, १[s]; १०१, ९[t]; १०२, ७[u]; १०३, ३[s]; १०४, २[v]; ४[s]; १०५, १[w]; १०६, ११[x]; १२[y]; १०७, १४[z]; २१[a1]; २३[b1]; २५;

[a]) देवुवीतिम् इति द्वि. युक्तः कप्र. (तु. ऋ ९,९७, २१; GW. च; वैतु वें. सा. अभि···पवस्व इति)।

[b]) वृषणम् इति द्वि. युक्तः कप्र. (तु. टि. ऋ २,२,२; वैतु. सा. PW. प्रभृ. अभि···अवावशन्त इति)।

[c]) युोषाम् इति द्वि. युक्तः कप्र. ( वैतु. वें. सा. प्रभृ. अभि···यन् इति)।

[d]) लक्षणे कप्र. (तु. टि. ऋ २.२,१)।

[e]) इुषम् , ऊर्जम् , अुश्वम् , गाम् इति द्वि. युक्तः कप्र. (वैतु सा. GW. अभ्यर्ष इति)।

[f]) वाजम् इति द्वि. युक्तः कप्र.।

[g]) नाम, वाजम् , वायुम् , गाः इति द्वि. युक्तः कप्र. ( वैतु. सा. GW. अभ्यर्ष इत्येतत् समस्तं क्रि. दर्शुकौ)।

[h]) लक्षणे कप्र. (तु. टि. ऋ १,५१,१)।

[i]) प्रियाणि (नामानि वा द्रोणानि ⌊तु. सा.⌋ वा) इति द्वि. युक्तः कप्र. (वैतु. GW. अभि···पवते इति। सा. वा. चिन्त्यो भवति । तृतीयपादस्य पूर्वार्धीयायास्तदभिप्रेतायाः संगतेरयुक्तत्वात् ⌊तु. सस्थ. टि. √व्ये > अव्यत⌋)।

[j]) वीतिम् इति द्वि. युक्तः कप्र. (वैतु. सा. GW. अभि···अर्ष इति)।

[k]) गाः इति द्वि. युक्तः कप्र. (तु. सा. GW.; वैतु. PW. MW. अभि···उष्णन् इति चिन्त्यं त्वेतद् भवति। सोम-ज्योतिष्करणकस्य गवाद्युभयसमानकर्मकस्य दहनस्य प्रसिद्धिप्रयोजनाऽभावात् ⌊तु. सस्थ. टि. √उष् > उष्णन्⌋)।

[l]) निम्नम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभि···अक्षाः इति)।

[m]) वायम् , मित्रावरुणा, नरम् , इन्द्रम् इति द्वि. युक्तः कप्र. (='तत्तद्देवताया उद्दिष्टायै वीतये' ⌊वैतु. सा. GW. प्रभृ. अभि···अर्ष इति⌋)।

[n]) 'नः (च. न द्वि.)' वुस्त्रा, धेनूः, अुश्वान् इति द्वि. युक्तः कप्र. ( वैतु. सा. GW. ⌊ण्यर्थमन्तर्भावितण्यर्थे⌋ अभि···अर्ष इति)।

[o]) वुसूनि, आर्षेयुम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभि···अर्ष इति)।

[p]) लक्षणे कप्र. (तु. टि. ऋ ९,६३,१२)।

[q]) द्रुणा ( < *द्रुण- < द्रोण- यद्र.) इति द्वि. युक्तः कप्र. (='द्रोणान्यभिलक्ष्य हितः प्रेरितः' ⌊तु. GW.; वैतु. सा. अभि···हितः इति, PW. अभि···अक्षाः इति च⌋)।

[r]) वाजान् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. PW. प्रभृ. अभिप्रगाहते इति ⌊आख्यातस्याऽकर्मकत्व-संभवे तु. ऋ ९, ८६, ४०⌋)।

[s]) लक्षणे कप्र. (तु. टि. ऋ १, ११,२; ८;५१,१)।

[t]) 'तिष्ठति' इत्याक्षेपमुखेन युयोजयिषन्तौ वें. सा. भवतः। तस्मिन् दर्शने 'य ओजिष्ठः सन्' इति कर्तुर् विशेषणतामात्रम्। कप्र. कल्पे तु 'ओजिष्ठो भवति' इत्यस्य विधेयत्वमिति विवेकः द्र.।

[u]) 'यज्ञे प्राप्ताऽञ्जनः सोम उभे अपि द्यावापृथिव्यौ व्याप्नोति' इत्यर्थस्य स्वारसिकत्वेन प्रतीतेरभिव्याप्यस्य प्रामुख्यवचनः कप्र. द्र. ( वैतु. सा. गतित्वपरः 'गच्छति' इत्याक्षेपुकः)।

[v]) इम् इति द्वि. युक्तः कप्र. (तु. GW.; वैतु. सा. अभि···संसृजत इति)।

[w]) तम् (सोमम्) इति द्वि. युक्तः कप्र.।

[x]) त्रिपृष्ठम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभि···समस्वरन् इति)।

[y]) अभि···असर्जि इति योगं पश्यन् MW. अपश्यो भवति । तथात्वेऽलंकृतिमुद्दिश्योपमामुखेन समर्पयितुमिष्टस्य वस्तुनः पङ्गुभावप्रसङ्गात् । मीळ्हु-सकक्षस्योपमेयभूतस्य कलश-पदार्थस्य लक्षणे कप्र. अभिना प्राधान्येनाऽभिलक्षितत्वे त्वालङ्कारिक्याकाङ्क्षा सम्यक् पूर्तिमियादित्यसावेव पन्था अभ्युपेयः (तु. सा. GW.)।

[z]) लक्षणे कप्र. (तु. टि. ऋ ९,२३,४)।

[a1]) 'असमभ्यं' रयिम् इति द्वि. युक्तः कप्र. (वैतु. सा. PW. प्रभृ. अभ्यर्षसि इति योग इति कृत्वा अभ्य ⌊भि √अ⌋ र्ष् इत्यस्योपरि अभि √क्षर् इत्यस्यार्थं मिथ्याऽऽरोपुकाः)।

[b1]) लक्षण कप्र. (तु. टि. ऋ ९,६२,२५)।

| | | |
|---|---|---|
| १०९, ४[g]; ११०, २[b]; ६[c]; ८[d]; ९[e]; १०, १, ३[c]; ४, २[f]; १७, ६; १८, ८[g]; | १५, ३[h]; २९, ३[i]; ३२, १[j]; ३७, १२[k]; ४३, ७[l]; ४५, ९; ५३, ७; ८[m]; ११[n]; ६४, १[o]; | ३[c]; ६५, १५[p], ६६, ९; ६८, १[q]; ७१, ३[c]; ७५, २[r]; ४[s]; ८१, ६[t]; ७[u]; ८४, १[v]; |

a) ग्राम इति द्वि. युक्तः कप्र. (तु. वें. सा.; वैतु. GW. अभि···प्रवस्व इति)।

b) वाजान् इति द्वि. युक्तः कप्र. (तु. टि. ऋ ९, ९९, २ सा. च; वैतु. PW. प्रभृ. अभि···प्रगाहसे इति)।

c) लक्षणे कप्र. (तु. टि. ऋ १, ११, २; ८ प्रभृ.)।

d) भाव-लक्षण-प्रधानः कप्र. द्र. (तु. सा. MW.; वैतु. GW. अभि···समस्वरन् इति)।

e) रोदसी, भुवना इत्येतदुभयान्वितः सप्तम्यर्थपर्यवसायिनीत्थंभूतलक्षणे कप्र. (वैतु. सा. गतित्वाऽभिसंब-धेनैव चरितार्थशक्तीनि सन्ति पूर्वाधीयानि पदानि दार्ष्टान्तविरचनपरः पुनरपि योगान्तरेणोपयुयोजयिषुः सन् असमर्थभाषीति पर्यनुयोज्यः)।

f) त्वा इति द्वि. युक्तः कप्र. (तु. टि. ऋ ८, ४८, १; वैतु. वें. सा. GW. अभिसंचरन्ति इति)।

g) जीवलोकम्, जनित्वम् इति द्वि. युक्तः उभयत्र लक्षणे कप्र. (तु. सा.; वैतु. सा. [शौ १८, ३, २] PW. प्रभृ. च अभिसंबभूथ इति [=जनित्वम् इति प्रदर्शुकाः])।

h) स्वार्थप्रधानम् अव्य.। चित्- > चित् इत्येतत् नाउ. पदं बस. उप. इव निहतं द्र. (तु. टि. ऋ ६, १७, ९)। वा. वव्रात् इत्येतेन (क्विप. अपेक्षया) नेदीयानिवाऽभिसंबन्धः (तु. सा.; वैतु. GW. अभि···मृळा इति योगं चिकीर्षुः। तदर्थं व्यर्थं वाक्यद्वयमिति कृत्वा क्विप. आवर्त्तयंश्च नः इति च३ सत् द्वि३ इत्युपगमयंश्च [तु. सा. अपि])।

i) गिरः इति द्वि. युक्तः कप्र.। 'यत इमाः स्तुतयस्तत्रत्या एव दुरो विधाव यथा रन्त्यं मदं प्राप्नुयाः' इति वा. (वैतु. सा. प्रभृ. अभि···विधाव इति)।

j) वरान् इति द्वि. युक्तः कप्र. (तु. टि. ऋ ४, १, १३ सा. च; वैतु. GW. प्रभृ. अभि···प्रसीदतः इति)!

k) नः इति द्वि. युक्तः कप्र. (तु. सा. प्रभृ.)।

l) इन्द्रम् इति द्वि. युक्तः कप्र.। अपां च सिन्धुं कुल्यानां च ह्रदमभिलक्ष्येव सोमानामिन्द्रमभिलक्ष्य संक्षरण उपमाया हृदयं भवति। न तु तत्तदभिलक्षितस्याऽभिसंक्षर्यमाणत्व इत्यभिसंधिः (वैतु. उद्गी. सा. GW. प्रभृ. अभि···समक्षरन् इति)।

m) वाजान् इति द्वि. युक्तः कप्र. (तु. सा. प्राप्तुम् उत्तरेम इति [नदीम् इति शेषस्तस्याः कर्मतया प्रकृतत्वात्]। एतदेवम् अपश्यन्तो दयनीयाः स्युः W. विरह्य PW. प्रभृ. अभि···उत्तरेम इति योगमुशन्तः)।

n) योग्याः इति द्वि. युक्तः कप्र. (तु. GW. प्रभृ.; वैतु. वें. सा. च अभि···वनते इति)।

o) स्वार्थप्रधानम् अव्य. (तु. पपा ; वैतु. उद्गी. वें. सा. PW. प्रभृ. अभ्या [भि-आ] ववर्तति इति)। यद्वा कप्र. ऊती [=ऊतीर् (सांहितिको यतिविशेषितप्रवृत्तिकोऽजमध्यस्थरेफलोपः नैप्र. द्र. [वैतु. वें. सा. =ऊत्यै])] इत्येतदन्वितः।

p) भुवना इति द्वि. युक्तः कप्र. (तु. टि. ऋ २, १५, ५)।

q) बृहस्पतिम् इति द्वि. युक्तः कप्र. [तु. टि. ऋ १, ११, २; ८; ५१, १ (वैतु. सा. प्रभृ. अभि···अनावन् इति कृत्वोपमानांशीयस्वारस्यं प्रतिघातुकाः [तु. सस्थ. टि. उद-प्रुत्- > तः, वि- > वयः, √वद् > वावदत्- > -दतः])]।

r) वाजान् इति द्वि. युक्तः कप्र. (तु. सस्थ. टि. वाजान्)।

s) त्वा इति द्वि. युक्तः कप्र. (वैतु. उद्गी. वें. सा. PW. प्रभृ. अभि···अर्षति इति)।

t) माम् इति द्वि. युक्तः कप्र. (तु. टि. ऋ २, १६, ८)।

u) स्वार्थप्रधानम् अव्य. (वैतु. वें. सा. PW. प्रभृ. अभिप्रेहि इति; सपा. शौ [४, ३२, ७] इत्यत्र सा. च 'नः' इत्याक्षिप्तेन सता कप्र. इति, W. WI. च 'तान्' इत्याक्षिप्तेन सता कप्र. इति)।

v) स्वार्थप्रधानम् अव्य. (वैतु. सा. GW. अभिप्रयन्तु इति)। सपा. शौ ४, ३१, १ पै ४, १२, १ उप इति पाभे.।

८७, ९[a]; १४[a]; ९०, ४[b]; ९२, १३[c]; ९६, २[d]; ९८, २[e]; ५[f], १०३, १२[g]; ११३, ४[h]; ११५, ७[i]; १२३, २[c]; ६[j]; १३२, १[k]; १३४, ७[l]; १४८, ३[c]; १८०, ३[m]; १८७, ४[n]; खि १, ६, ३; २, ८, ३; ११, २; ३, २२, ४[?]; ४, ५, २१[o]; ३५; १०, १; ५, ४, ५; ५, १०; १५, ४[?p]; मा ३, ३८[?]–४०[?q]; ४, २५[?c]; ३४[r]; ७, ४५[s]; ११, ४७; ७१[†]; १२, २६[†]; ५७[t]; ७०[u];

[a]) लक्षणे कप्र. प्रथमे स्थ. रक्षांसि इत्येतदन्वितः, द्वितीये स्थ. एतदन्वयार्थं 'तान्' इत्येतदाक्षेप्तव्यम् (वैतु. सा. [प्रथमे स्थ. एव स्पष्टं भाषते], PW. प्रमृ. अभिशोशुचानम् इति)।

[b]) चेतनाचेतनाभिव्याप्तिपूर्वकं विक्रमणे तात्पर्ये लक्षणे कप्र. द्र.।

[c]) लक्षणे कप्र. (तु. टि. ऋ १,११,२;८;५१,१)।

[d]) योनिम् इति द्वि. युक्तः कप्र. (तु. ऋ ९,१०६,११; वैतु. सा. प्रमृ. अभि··· समस्वरन् इति)।

[e]) अस्मद्-वाच्यस्य प्राधान्येन समर्पयितुमिष्टत्वात् तत्-साधनभूतः अभिः कप्र. द्र. (वैतु. PW. GW. अभि··· अगच्छत् इति, वें. सा. अभि··· आ··· अगच्छन् इति [तु. टि. सस्थ. आ √गम् > आगच्छन्])।

[f]) सप्तमीवचनः कप्र. (तु. वें. सा. दु. [या २,११]; वैतु. PW प्रमृ. अभि··· असृजत् इति)।

[g]) 'अमित्रान्' इत्याक्षिप्तेनाऽन्वितः लक्षणे कप्र. (तु. म ; वैतु. सा. उ. PW. प्रमृ. अभिब्रूहि इति द्व्युदात्तमेकं पदं ब्रुवाणाश्चिन्त्याः)।

[h]) पौंस्यम् इति द्वि. युक्तः कप्र. (तु. ऋ ७, ३०, १; ८, ९६, १६; वैतु. सा. रणम् इत्यनेनाऽस्याऽन्वयं पश्यन् यत् साधनं तत् साध्यतया प्रतिपादुकः, PW. प्रमृ. च पौंस्यम् इति संप. इह न भवति। किं तर्हि। रणम् इत्यस्य विप. इतीवाऽभिमन्यमानाः अभि··· प्रापयत् इति योजुकाः)।

[i]) लक्षणे वेत्थंभूतलक्षणे वा कप्र. मानुषान् इत्येतदन्वितः [=तानभिलक्ष्येति वा तानभित इति वा; (वैतु. सा. PW. प्रमृ. अभिसुन्ति इत्यत्र योजुकाः सन्तः स्वरतश्च षत्वाऽभावतश्च पर्यनुयोज्याः [तु टि. ऋ २,४, ९;२३,९;७,३९,४])]।

[j]) तु. सस्थ. टि. वेनन्तः।

[k]) ईजानम् इति द्वि. युक्तः कप्र. (वैतु. वें. सा. च आक्षेपमुखौ अभि-वर्धयति इति, PW. प्रमृ. च अभि-प्रभूषणि इति)।

[l]) स्वार्थ-प्रधानम् अव्य. (तु. वें. सा. ; वैतु. PW. प्रमृ. अभि संरभामहे इति वदन्तोऽव्ययार्थस्य प्राधान्येन विवक्षितत्वाद् गतिभावे तदलाभाद् अनिष्टद्वैस्वर्यस्य दुष्परिहरत्वाच्च चिन्त्याः)।

[m]) क्षत्रम् इति द्वि. युक्तः कप्र. (तु. सा. GW.)।

[n]) लक्षणे कप्र. (वैतु. सा. स्वार्थप्रधानम् अव्य., GW. अभिविपश्यति इति च)।

[o]) सपा. शौ ६,३७,१ उप इति पाभे.।

[p]) सपा. शौ २०,१२९,१३ इति [शंपा.], इव [RW.] इति पाभे.।

[q]) द्युम्नम्, सहः इति द्वि. युक्तः कप्र. (वैतु. PW. प्रमृ. अभि··· आयच्छस्व इति, उ. म. च अभि इत्यु अपि ग. अपि कप्र. इति च यच्छस्व इति √यम् [यमने वा दाने वा] इत्युभयथा व्याचक्षाणौ च विकल्पप्रस्ताविव)।

[r]) धामानि इति द्वि. युक्तः कप्र. (तु. उ. म., [टि. तै ६, १, ११, ५; मै ३, ७, ८ इत्यत्र सपा. ब्राह्मण-भागे अभिप्रच्यवते इति]; वैतु. PW. प्रमृ. अभि··· प्रच्यवस्व इति)।

[s]) रूपम् इति द्वि युक्तः कप्र. (तु. पपा, टि. तै १, २,३,३; वैतु. उ. म. च अभ्या [भि-आ-अ]गाम् इति)। अभि, आगाम् इति सतः पाठस्य स्थाने सपा. तै १, ४, ४१,२,६,६,१,२ अभि, ऐमि इति, मै १,३,३७;४,८,२ अभ्यै-[भि-ए]मि इति च पाभे.।

[t]) स्वार्थ-प्रधानम् अव्य. (तु. पपा. ; वैतु. उ. म. अभि-संवसानौ इति योगं मन्वाना अनिष्ट-द्वैस्वर्यप्रसङ्गादुपेक्ष्यौ)।

[u]) अस्मान् इति द्वि. युक्तः कप्र. [तु. पपा. म. च; वैतु. उ. अभ्या [भि-आ] ववृत्स्व (वैतु. तै. पपा. ४, २, ५,६ अभ्या [भि-आ] ववृत्स्व इति पाभे. [यद्र.])]।

१०३[a]; †१७, ४४; ९६†[b]; ९७; ९८; १८, ४५[१c]; ७४†; २०, ५४†; ६९[d]; २५, ३४†; †२६, ११; २६; २७, १८[e]; ३५†; २९, ६[f]; ३१, ४†[g]; ३२, ११[h]; †३३, ३५; ८१; ३५, १०†; ३६, ७†; का ३, ४, ३[२]; ४[२]; ९, १[i]; ४, ८, ३[२]; १०, ५; ९, २, ५[j]; १२, ४, ११; ७, ६†; १३, २, ९†; ४, १३; ५, ९; ७, २; १८, ४, १२†; †१९, १, ९†[b]; १०; ११; २०, २, ८[१c]; ५, ७†; २२, ५, ८†; ७, ३; २७, १३, ३†; २९, २, ८[o]; ५, ४†; ३१, १, ६†; †३२, ३, ६; ६, १२; ३५, १, ४†[g]; ३, ८; ४, ९†; ३६, १, ७†; तै १, १, ४, २[k]; २, ३, २; ३[l]; ६, १; ९, १; १४, ३†[m]; ३, ४, ३[k]; १४, ३†; ४, ४३, २[n,l]; ४६, २†; ५, ९, ३¶; ६, ३, १¶; १२, ४†; ७, ६, ७¶[o]; ८, ७, २[p]; २, १, १, ६¶[q]; ११, ३[r]; ¶२,

[a]) मा. पपा. अभि आवर्तस्व इत्युभयत्र स्वरदर्शनात् अभि इति स्वार्थ-प्रधानम् अव्य. तदभिभिमतमिति द्र.। का. अपि तथैव स्यादिति च मतं भवति (वैतु. Pw. प्रमृ. ⌊द्वैस्वर्यदोषाच् चिन्त्याः⌋ सपा. तै ४, २, ७, १ अभ्या (भि-आ) वर्तस्व इति पाभे. यद्र.)।

[b]) तु. सस्थ. टि. समनेव।

[c]) मा इति द्वि. युक्तः कप्र. (तु. सा. ⌊तै ४, ७, १२, ३⌋ उ. च; वैतु. म. अभि···वाहि इति)।

[d]) लक्षणे कप्र. (तु. टि. ऋ १, ११, २; ८; ५१, १)।

[e]) अभि, गृणीतम् > सपा. मै २, १२, ६ प्रमृ. अभिगृणीतम् इति, शौ ५, २७, ९ अभिगृणत इति च पाभे.।

[f]) मुखं यज्ञानाम् इति द्वि. युक्तः कप्र. (तु. पपा.; वैतु. उ. म. Pw. प्रमृ. अभिसंविदाने इति अनिष्ट-द्वैस्वर्यं प्रति चोद्याः)।

[g]) पाभे. अनु शौ १९, ६, २ द्र.।

[h]) स्वार्थं-प्रधानम् अव्य.। यद्वा आत्मानम् इति द्वि. युक्तः कप्र. धा. चाऽकर्मकत्वेन वृत्तिः द्र. (तु. पपा.; वैतु. उ. म. Pw. प्रमृ. अभिसंविवेश इति ⌊एपू. टि. दिशा चिन्त्याः⌋)।

[i]) यद् 'रेतः' इति द्वि. युक्तः कप्र. (तु. सा.)।

[j]) पाभे. अभि मा ७, ४५ द्र.।

[k]) सुवः इति द्वि. युक्तः कप्र. (वैतु. भा. सा. स्वार्थ-प्रधानम् अव्य., Pw. प्रमृ. अभिविख्येषम् इति)।

[l]) श्रेयः इति द्वि. युक्तः कप्र. (तु.सा. ⌊ऐब्रा १, १३⌋; वैतु. भा. सा. अभि···प्रेहि इति योगं मन्वानां उपेक्ष्यौ)। पाभे. अधिः शौ ७, ९, १ द्र.।

[m]) तु. सस्थ. टि. वि···द्यौत्।

[n]) रूपम् इति द्वि. युक्तः कप्र. (वैतु. भा. सा. Pw. प्रमृ. अभ्यै ⌊भि-आ-ए⌋ मि इति ⌊द्वैस्वर्यं प्रति चोद्याः⌋)।

[o]) प्रत्यर्थः कप्र. इति सा.। 'तदाभिमुख्येन' इति भा. अपि क्रिवि. सत् कप्र. इत्यभिप्रतीति प्रतीयते। इष्टमपि चैतत्। तथाहि, अनुवाद्यप्रधानांऽशभाजि यज्ञनिवर्तनपुनरालम्भविदि यजिकर्तर्येव विधेयप्रधानांऽशस्याऽपि समावेशनस्य साधीयस्त्वम्। तस्य च यथा कप्र. निगदविस्पष्टत्वं स्यान् न तथा गतित्वेन योगेऽभ्युपगते कर्मकारकमात्रतया गुणभूते तत्पदे संभवेदिति विवेकोऽवधेयः। अस्मिन् कल्पे च द्वैस्वर्यादित्रिप्रतिपत्तयोऽप्यनवकाशत्वात् पुरस्तादेव बाध्येरन्। एस्थि. K. कृतेऽप्यनुवादे 'to' इत्यस्य स्थाने 'towards' इत्येव सुवचमिति दिक्।

[p]) स्वार्थ-प्रधानम् अव्य.। अर्थतः अहम् इति कर्तृपदं नेदीय इव, रक्षः इति कर्मपदं च परंपरयैव स्पृशति (=अभिमुखंभावुकोऽहं यथा स्यां तथा भूत्वा रक्षः संदहामि ⌊तु. तत्रैव श्रूयमाणं संदग्धं रक्षः इत्यश्रूयमाणं च 'अभिसंदग्धं रक्षः' इति; वैतु. सा. अभि इति कप्र. रक्षः इत्येतदन्वितः इति कृत्वा सकर्मिकायाः क्रियायाः कर्माऽऽकाङ्क्षायाः पूर्त्यर्थमपार्थाऽध्याहारप्रदर्शितकौशलः, भा. K. च अभिसंदहामि इति योगमातिष्ठमानौ सन्तौ सुवचेऽपि गपू. गत्यन्तरेऽपलक्षणद्वैस्वर्यमेव परिपोषुकौ⌋)।

[q]) ऊर्जम् इति द्वि. युक्तः कप्र.।

[r]) स्वार्थं-प्रधानम् अव्य. (तु. टि. ऋ ८, ५९, ३; कौ २, १००५; वैतु. भा. सा. अभिसमजानत इति)। समजानत अभि > सपा. शौ ६, ७४, ३ पै १९, १५, ६ अहृणीयमानाः इति पाभे.।

२, ४[a]; ४, ७[2b]; ८[c]; ६, ४[d]; ७, ४[2e]; ११, ६[2f]; ३, १, ३[g]; ६, १[2]¶[h]; १४, ६[i]; ४, १, १¶[j]; १२, २¶[k]; १४, २†; ¶५, २, २[k]; ३[l]; ३, १[m]; ६[n]; ७[2n]; ५, २[o]; ४[o]; ६, ५[p]; ८, ५[q]; ६, ८, ३¶[n]; ११, ४†; ३, १, १, ४[r]; ९, २[s]; २, ¶९, १[t]; ७[t]; ३, ४,

[a]) पुरान् इति द्वि. युक्तः कप्र. (तु. पपा.; वैतु. भा. प्रभृ. अभिनिर्दिशति इत्येवं योजुकाः सन्तोऽपार्थाऽपलक्षणद्वैस्वर्यापेक्ष्या उपेक्ष्याः)। यदेव शमयित्वा इत्यस्य कर्म भवति तदेव निर्दिशति इत्यस्येति च तच्च तदभिलक्ष्यत्वेनेष्टत्वात् पृथग्भूतमिति चाऽभिसंधिः।

[b]) एकतरत्र युजमानम् इति द्वि. युक्तः कप्र. (तु. मै ३, ७, ८, इत्यत्र अभिसंभवतः प्रभृ. यत्र समानप्रकरणे शाखाभेदेन प्रयोगवैशिष्ट्यं निदर्शयन्निव गतित्वमुपलक्ष्येत [. वैतु. K. अभिसंभवतः इति, तन्न । अपलक्षणद्वैस्वर्यप्रसङ्गः स्यादित्येको हेतुः । गतित्वाऽभ्युपगमेऽपि लक्षणविशिष्टसायुज्यार्थस्याऽभिव्याप्त्यनर्थान्तरस्यैव संगतत्वात् तदुक्तस्याऽभिभवनाऽऽख्यस्याऽर्थस्य न कोऽपि प्रसङ्ग इति चाऽप्यपरो हेतुः])। अन्यत्र भागधेयम् इत्येतदन्वितः (तु. भा.; वैतु. MW. प्रभृ. अभि···उद्ध्रियते इति)।

[c]) किम् (=भागम्) इति द्वि. युक्तः कप्र.। शेषं नापू. टि. चरमे भागे द्र.।

[d]) लक्षणे कप्र. (तु. टि. मा ४,३४)। अभि, प्रच्युवते >सपा. मै २, १,२ काठ १०,३ वलुते इति पाभे.।

[e]) राष्ट्राणि, यम् इति द्वि. युक्तः कप्र. (वैतु. भा. PW. प्रभृ. अभिसमियुः इति अभिप्रवेपेरन् इति च मन्वाना निर्दिष्टस्याऽर्थस्य प्राधान्येन विवक्षितस्य सामान्यधर्मताम् आपादयन्तोऽन्याय्यद्वैस्वर्य-प्रसङ्गवादिनश्चिन्त्याः)।

[f]) एनम्, इन्द्रम् इति द्वि. युक्तः कप्र.। 'अस्मै ज्यैष्ठ्याय समानाः संजानते यथेन्द्राय ज्यैष्ठ्याय देवा समजानत' इति वा. द्र. (तु. नापू. कण्डिकायां अन्योन्यस्मै ज्यैष्ठ्याय इति; वैतु. मै २, २, ६ अन्योन्यस्य श्रैष्ट्ये [?=श्रैष्ठ्ये यद्र.]। यत्त्वत्र अभिसंजानते, अभिसमजानत इति योग इति भा. PW. प्रभृ. समर्पितवन्तः, तन्न। अन्याय्यद्वैस्वर्य्यप्रसङ्गाच्च श्रुतिस्वारस्यविघाताच्चेति दिक्)।

[g]) अमुम् इति द्वि. युक्तः कप्र.। 'हे मरुतः उप (इत, च) एना (एनम्) विश्पतिनाऽमुं शत्रुभूतमभिलक्ष्य प्रेत च' इति वा. द्र. (वैतु. भा. अविस्पष्टयोगः)।

[h]) लोकान् इति द्वि. युक्तः कप्र. (तु. भा. सा. [लोकाऽपेक्षया पृथग्भूतस्याऽतिरिक्तवस्तुनः श्रावणे तात्पर्यम्]; वैतु. PW. प्रभृ. अभ्यतिरिच्यातै इति अभ्यु[भि-अ]त्यरिच्यत इति च)।

[i]) लक्षणे कप्र. (तु. सा.; वैतु. भा. अभिप्रतस्थौ इति)।

[j]) 'तेषु देवेषु मृतेषु (रात्रिः) व्यौच्छत्' इति अभिः सप्तम्यनुवादी वाऽऽनन्तर्यवचनो वा कप्र. द्र.। प्रथमे कल्पेऽपि सप्तमीह भावान्तरापेक्षया तत्प्राग्वर्तिभाववचना द्र.। न च तान् मृतान् अभिलक्ष्य (तु. सा.) विशेषतो रात्रिः प्रभाता। तस्याः प्रभातभावस्य सामान्येन सर्वमृताऽमृतलोकेनाऽभिसंबद्धत्वात्। अतो नैवाऽभिलक्षणाऽऽभिमुख्यादिप्रकारको कोऽप्यर्थो गतित्वमनुप्रविष्ट इह लब्धाऽवकाशो भवितुमुपकल्पेत।

[k]) लक्षणे कप्र. (तु. टि. तै २,२,४,७)।

[l]) माम् इति द्वि. युक्तः कप्र. (तु. सा.)।

[m]) इन्द्रम् इति द्वि. युक्तः कप्र.। 'तमभिलक्ष्य प्रद्रवणलक्षणप्रवेपनयुक्ता आसन्' इति भावः (तु. टि. तै २,२,७,४; वैतु. भा. सा. PW. प्रभृ. अभिप्रावेपन्त इत्यलाभविशेषकरं योगमनुजानन्तः स्वरतश्चोद्यतां गताः)।

[n]) तम्, भागधेयम् इति द्वि. युक्तः कप्र. (तु. भा. सा.; वैतु. PW. प्रभृ. अभिसमगच्छन्त इति)।

[o]) यक. 'चन्द्रस्य' निरुप्तं हविः वा ईजानम् वाऽभिलक्ष्योदये वैशेष्याऽभावात् सप्तम्यनुवादी वाऽऽनन्तर्यवचनो वा कप्र. (तु. K.; वैतु. PW. प्रभृ. अभ्युदेति इति)।

[p]) स्वार्थप्रधानम् अव्य. (वैतु. भा. PW. प्रभृ. अभिसमनह्येताम् इति मन्वाना अनिष्टद्वैस्वर्यस्य व्यर्थाऽभ्युपगमप्रसङ्गादुपेक्ष्याः)।

[q]) अग्निं दूतं वृणीमहे इत्येतन्मन्त्रगतविषयेण युक्तः लक्षणे कप्र. (तु. भा.; वैतु. PW. प्रभृ. अभिपर्यवर्तत इति)। [r]) तु. टि. अभि तै १, २, ३,३।

[s]) वसीयः इति द्वि. युक्तः कप्र.।

[t]) एनम् इति द्वि. युक्तः कप्र. (तु. भा. K.; वैतु. PW. MW. अभिप्रवर्तयति इत्यभिप्रयन्तौ द्वैस्वर्यदोषप्रसङ्गादुपेक्ष्यौ)।

| ३¶ª; ४, १, ३¶ᵇ; ११, ३†; ४,१,४,४; ८, २¶ᶜ; २, २, ३†; ५, १ᵈ; ३, ११, ४ᵉ; | १३, ७†; ४, ११, २ᶠ; ६, २, १‡ᵍ'ʰ; ८, ४†; ७, १२, ३ⁱ; ५, १, ५, ९ʲ¶; ११, | २ʲ; ¶२,१, ३ᵏ; ४, ३ˡ; १०, २ᵐ; ३, १, ३¶ⁿ; ¶४, ९, ३ᵒ; ४ᵖ; ५, १, ३¶ᵠ; |
|---|---|---|

[a]) हिरण्यम् इति द्वि. युक्तः कप्र. (तु. K.; वैतु. भा. सा. प्रभृ. अभिन्यनिति इति स्वरत उल्लक्षणं योजुका विमृश्याः [तु. माश ४,१,२,२७ अभिव्युनिति इति यत्रासावेव योगो द्व्युपसृष्टः सन् साधुर्धातुमात्रस्वरः])। अभिन्यनिति > सपा. काठ २९,६ क ४५,७ अभिन्यनिति इति पाभे.।

[b]) स्वार्थप्रधानम् अव्य. (वैतु PW. MW. अभिसमूहति इति वदन्तौ द्वैस्वर्यदोषदुष्टत्वाचिन्त्यौ)।

[c]) वा. सप्तम्यनुवादी कप्र. द्र.। अग्निजिह्वाऽभिगत मग्निजिह्वायां वा वर्तमानमित्यध्वरविशेषणेऽभिप्रायः। मै २,१२,६ काठ १८,१७ इत्यत्र तु जिह्वायाः करणत्वेन श्रवणात् तद्-गतत्वमध्वरस्याऽऽक्षेपात् द्र.। एवं च श्राविताक्षिप्तविषयविवेकात् समस्तस्य अभि √गॄ(निगरणे) इत्यस्य तत्रैवाऽऽक्षेपश्रुत्योः सावकाशत्वं स्यात्। न त्विह यथाऽऽह K. तद्दृष्टोऽध्वरस्याऽग्निजिह्वात्वाऽऽरोपश्चाऽप्रसिद्ध इत्यधिकञ्च।

[d]) लक्षणे कप्र. (तु. टि. मा १२,५७)।

[e]) अभि, लोकम् > सपा. पाग्र ३,३,५ अधिलोकम् इति पाभे.।

[f]) प्रथमः सप्तम्यनुवादी वा लक्षणार्थो वा कप्र. शैशिरावृतू इत्येतदन्वितः। यच्च शाखान्तरे अभिकल्पमानाः इत्येकपदश्रुतिर् भवति (तु. मा १३, २५), तदपि गत्यंशे स्वराऽभावात् सूपपदमित्यतिरोहितमिव। तत्र च ऋतुपदे द्वितीयायाः कालात्यन्तसंयोगे योगो वक्तव्यः। द्वितीयोऽपि अभिः '(तेऽग्नयः शैशिरावृतू) अभि(कल्पमाना एतत्कर्म वेष्टकादिपदार्थविशेषं वा देवा इन्द्रमिव संविशन्तु)' इति सामर्थ्यात् पूरयित्वाऽऽक्षेप्यस्य वाक्यस्याऽवशेषमात्रमिति द्र.। अथवा द्वितीयोऽयम् अभिः शाखाविशेषायत्तद्वैस्वर्यवैशेष्योपाश्रयेण गतिरेव कामं भवतु, नतु तथा सत्यपि प्रथमस्य अभेः तथात्वं सुवचम् अपेक्षाविरहात् (तु. सा. K.च)। अभि कल्पमानाः, अभि संविशन्तु (तैत्रा१,२,१,१८ च) > सपा. मा १३, २५ प्रभृ. माश ८, ७,१,६ अभिकल्पमानाः, अभिसंविशन्तु इति पाभे.। शिष्टं सस्थ. टि. संविशन्तु द्र.।

[g]) नः (अस्मान्) सतुः (=लब्धजनुषः) इति द्वि. युक्तः कप्र. [अस्मन्मनोरथपूर्त्यर्थम् इति यावत् (तु. पपा.; वैतु. सा. अभ्युा [भि-आ] ... जजान इति योजयन् षष्ठीमाह, तन्न। तथात्वे अभिः अनभिसंबद्ध इव भवेत्। तस्य पञ्चमीयोगाऽप्रसिद्धेः। गतित्वे च तस्य द्वैस्वर्यस्याऽनुपपन्नस्य दुर्वारत्वात्)]। यद्यपि नः इति द्वि३ इति K. आह, तथाऽप्यसौ अभेः गतित्व एव कृतास्थो भवति। तेन चोक्ता स्वराऽपत्तिस्तदवस्था भवति। सुत् इति पदस्य नः इत्यनेन सामानाधिकरण्यं वदतश्च तस्य वचनव्यत्ययो दुर्वारः स्यात्। [h]) सपा. ऋ १०,८२,३ विशिष्टः पाभे.।

[i]) यजमानम् इति द्वि. युक्तः कप्र.।

[j]) इत्थंभूतलक्षणे कप्र. (तु. टि. मा २९,६)।

[k]) सप्तम्यर्थे वा लक्षणार्थे वा कप्र. द्र. (वैतु. भा. अभिपर्यावर्तते इति)।

[l]) समीपवचनः कप्र. इति भा.। इष्टकाऽऽधानस्य प्रकृतत्वात्, तस्य च शिक्यांऽधिकरणतयाऽविवक्षितत्वादित्यर्थः। आधानस्य शिक्यांऽधिकरणत्वे सप्तम्यनुवादित्वं सुवचं स्यात् (वैतु. MW. अभ्यु [भि-उ] पदधाति इति [शिक्य-कर्मकत्वाऽभावात्त्वाधानस्य गतित्वाऽसंगतेः])। पाभे. अधि मै ३,२,४ द्र.।

[m]) स्वम् आयतनम् इति द्वि. युक्तः कप्र. (तु. भा. K.; वैतु. MW. अभिपर्यूहते इति द्वैस्वरीपुरस्सर ऐकपद्ये य आग्रहः स दुराग्रह इति [तु. अभ्यू [भि √ऊ] ह् 'प्रापणे'])। अभि पर्यूहते > सपा. काठ २०,९ क ३१,११ अभिपर्यूहति इति पाभे.।

[n]) अपः इति द्वि. युक्तः कप्र.।

[o]) लक्षणवचन उद्देशवचनो वा कप्र. अन्नाद्यम् इत्येतदन्वितः (तु. पपा.; वैतु. भा. PW. प्रभृ. अभ्युपावर्तते इति मन्वानाः श्रुतिस्वारस्यमवहेलयन्तो द्वैस्वर्यं प्रति पर्यनुयोज्याः)।

[p]) एनम् इति द्वि. युक्तः कप्र. (वैतु. सस्थ. टि. अभिपवते इति)। सकृत् अभि, पवते > मै ३, ४,३ पवते इति पाभे.।

[q]) लक्षणे वा विषयसप्तम्यनुवादे वा कप्र. द्र.। पशूनां नानारूपत्वेऽपि वायव्यत्वविशिष्टत्वाद् वायुमेव सन्तं पुरोडाशमभिलक्ष्य तद्विषय इति यावत् तेषां

६, ६, ३[a]; ७, ४, ३?[b]; ४[c]; ¶६, १, १, ७[d]; २, २[e]; ४, ४[f]; ७[g];

५, ५[h]; ९, ४; ११, ५[ii]; $; ६[j]; २, ६, १[k]; ३, ३, ५; ५, ४[l]; १०,

२[l]; ४, १, ५[m]; २, १[n]; ३[d]; ३, २[e]; ४, १[o]; ११, ४[p]; ५, ७,

संज्ञानमेकीभावो भवतीति श्रौतोऽभिप्रायः । तदेवमेकीभावं संप्राप्ताः पशव उपतिष्ठन्त इत्युक्तं भवति । अभेः संजानानाः इत्युत्तरेण स्वरवता कृदन्तेन गतित्वेन योग इति भा. । तन्न, स्वराऽऽपत्तेरेव । अभि···उपतिष्ठन्ते इति चाऽभिप्रैति K. एवं तु सति एतम् इति च एनम् इति चैतद्द्विरुक्तिरसम्यग् व्याख्याता स्यात् (तु. टि. तै २, २,११,६) ।

[a]) शोधः अनूवाच तै ५,६,६,३ द्र. ।

[b]) 'यतश्तीव्राभ्यां तपोदीक्षाभ्याम् ऋषिभिरग्र उपनिषण्णाभ्यां सद्भ्यां क्षत्रं जातं भवति, तत् (तस्मात् कारणात्) अस्मै (राज्ञे [तादृग्जातक्षत्रात्मने]) देवा अ(?अ)भि(?पि) संनमन्तु (किमुत मनुष्याः)' इत्याकारस्यैव पाठस्य स्वारस्यं स्यादिति कृत्वा तत्परः शोधः द्र. । ?अभि, संनमन्तु (तैआ ३,११,९ च) > सपा. शौ १९, ४१, १ ?उपसंनमन्तु इति (यस्था. टि. च द्र.) शांआ १२, ४ अभिसंनमन्ताम् इति च पाभे. ।

[c]) अभि संनमामः > सपा. पै १,५३,२ उपसंनमन्तु इति, शांआ १२, ४ अभिसंनमन्ताम् इति च पाभे. ।

[d]) सप्तम्यनुवाद्युपर्यर्थः अपः इति द्वि. युक्तः कप्र. (तु. भा. K.; वैतु. PW. MW. आशौचप्रसङ्गात् अभ्यंम्रियत इति योगं मन्वानौ तादृशस्याऽऽशौचस्यानुवादमात्रत्वेन संकेतने श्रौताऽभिप्रायाच्चिन्त्यौ) । पाभे. अधि मै ३, ६,३ द्र. ।

[e]) यज्ञम् इति द्वि. युक्तः कप्र. (वैतु. भा. MW. प्रभृ. अभिप्रयुङ्क्ते इति) ।

[f]) यज्ञम् इति द्वि. युक्तः कप्र. (तु. भा.) ।

[g]) एकतरत्र पशून् इति द्वि. युक्तः कप्र. (तु. भा. K.; वैतु. MW. [ब्राह्मणान्तरीये समानप्रकरणे] अभिदीक्षेत इति योगो द्वैस्वर्याऽऽपत्तेश्चिन्त्यः) । अन्यतरत्र माम् इत्येतदन्वितः ।

[h]) उदयनीयम् इति द्वि. युक्तः कप्र. (तु. भा.; वैतु. PW. K. अभिनिर्वपति इति मन्वाना अनिष्टद्वैस्वर्यप्रसङ्गादुपेक्ष्यौ) । अभि निर्वपति > सपा. काठ २३, ९ क ३६,६ अभिनिर्वपति इति पाभे. ।

[i]) द्वयोः स्थ. ग्रामानि उद्दिश्य प्रच्युवते इत्यभिप्रायवत्यां श्रुतौ लक्षणे कप्र. (तु. टि. मा ४,३४; मै ३,७,८) । एकत्र च यत् क्रीत उपनद्धः सोमो (ह्रियते) यजमानमभिलक्ष्य वरुण एवैतीत्यभिप्रायवती श्रुतिः । तेन वरुणेन यजमानस्याऽऽशङ्कितस्य ग्रहणस्य निवारणार्थमेवाऽनुपदं शान्तिः श्राव्यते नमो मित्रस्य इति ।

[j]) यजमानम् इति द्वि. युक्तः कप्र. (तु. टि. तै २, २, ४, ७) । अनुपदं यत्तस्य निष्क्रयणं श्रूयते तदेवेह अभिना संकेत्यते । अभिसंभवतः इति योगं व्याचक्षाणः K. चिन्त्यः, द्वैस्वर्याऽऽपत्तेः । न चाऽग्नीषोमकर्तृकस्य यजमानाऽभिभवस्येह कश्चिदवकाशः । भा. अपि कल्पद्वयमाह तच्च चिन्त्यम् । तत्राऽपि हि चोद्यमुक्तम् । अभि, संभवतः > सपा. काठ २४. ७ प्रमृ. अभिसंधत्तः इति, मै ३,७,८ अभिसंभवेताम् इति च पाभे. ।

[k]) अग्निम्, अपः, आदित्यम् इति द्वि. युक्तः कप्र. (वैतु. भा. अभिविपश्यति इति यदाह तद् द्वैस्वर्यदोषाच्चिन्त्यम्) ।

[l]) हृदयम् इति द्वि. युक्तः कप्र. । समेति इत्यस्य 'लीयते' इत्यर्थात् अकर्मकता च द्र. (तु. K; वैतु. भा. अभिसमेति इत्यभिप्रयन् अपलक्षणद्वैस्वर्यप्रसङ्गाच्चिन्त्यः) ।

[m]) नापू. टि. तै. शाब्दप्रवृत्ति-विशेषस्य शाखा-विशेषगतस्येदमपरमुदाहरणं द्र. । शाखान्तरे समान-प्रकरणे गतित्वयोगदर्शनात् (तु. मै.) । अभि, समेति > सपा. मै ३, १०, ७ अभिसमेति इति पाभे. ।

[n]) सप्तम्यनुवादी कप्र. । 'यस्य (वसतीवरीषु) अगृहीतासु [सूर्यः] निम्रोचेत्' इति वा. (तु. भा. 'अभिलक्ष्य' इति, K. च वसतीवरीरगृहीतवन्तम् अभीत्यादिव्याचक्षाणस्तात्पर्यबद्धदृष्टिरिति; वैतु. PW. प्रभृ. अभिनिम्रोचेत् इति) । अभि,निम्रोचेत् > सपा. मै ४,५,१ अभिनिम्रोचेत् इति, माश ३,९, २, ८ अभ्यस्तमियात् इति च पाभे. ।

[o]) उपांशुसवनम् इति द्वि. युक्तः कप्र. (तु. भा.) ।

[p]) वत्सम् इति द्वि. युक्तः कप्र. (तु. पपा. K.; वैतु. भा. प्रभृ. अभिनिवर्तते इति चिन्त्ययोगाः [भा. 'यत्र यत्र···तत्र तत्र' इत्येनैव अभेः अर्थस्य परिसमाप्तत्वेऽपि पुनस्तदाख्याताऽनुप्रवेशोऽर्थान्तरनिर्देशश्च दुर्वच इत्यभिसंधेः]) ।

२[a]; ६, १, १[b]; २[२]§[c,d]; ७,३; १०, २[e]; ११, १; ५[f]; ६[g]; ¶७, १, १, १[h]; २, १[i]; ५, ५[j]; ७, ४[k]; २, ७, ४†; ३,११, १[२]§[k]; ४, ८,१[l]; ३[m]; १०, २[n]; ११, २[n]; ५, ५, २[o]; मै १, २, ५[२p]; ६[q]; ३, ३९[r]; ४, ३[s]; ७, २[t]; ३[t]; २,२, १; ७, ५; ७†; ९†; ११[u]; १०, ३‡[v,w]; १२, ३[२]; १३, ८; ९†; १०[x]; ३, १, ९¶[k]; २, ९¶; ७,४; ८[२q]; ¶; ¶८, ३[२]; ४[५p,y]; १०[q]; ११, ४[p]; १६, १†; २[z]; ४, २,५[२]; १०[a1]; ¶३, ६[b1]; ८; ६, ९¶[o1]; ७, ८¶[c1]; ८, ६¶[z]; १०, ५†; †११, २; ४; ५†[o1]; †१२, ३[२]; ४; ६; †१४, ३; ५; १०; १२; १६; काठ २, ६[p]; ७[q]; ४, ९[d1]; १३[k,r]; ६, ११†[o1]; ७, १६†;

a) तृतीयसवनम् इति द्वि. युक्तः कप्र.। गतित्वोपाश्रयः K. प्रतिभाति । तेन तु तस्य द्वैस्वर्यापत्तेर्मोक्षो दुष्करः स्यात् । सप्तम्यनुवादिनि कप्र. सवितारम् इत्येतदन्विते सति तु सुश्लिष्टोऽन्वयः द्र. । अभि.,पर्यणयन् > सपा. मै ४, ७,१ अभिपर्यौहन् इति पाभे. ।

b) सदः इति द्वि. युक्तः कप्र. (वैतु. भा.) ।

c) रूपम् इति द्वि. युक्तः कप्र. ।

d) तु. टि. पाभे. च अभि मा ७, ४५ ।

e) लक्षणे कप्र. । तु. टि. पाभे. च तै ३,३,४,३ ।

f) ज्यायश्छन्दोऽभिलक्ष्य तद्विषये वा कनीयसा छन्दसा व्यशंसन् (विहृतं शंसनमकुर्वन्) इति लक्षणार्थे वा विषयसप्तम्यनुवादे वा कप्र. द्र. (एकेन छन्दसा छन्दोन्तरस्य विहरणप्रकारार्थं तु. आश्रौ ६,३, १२; १३) । यत्तु भा. PW. प्रमृ. अभिव्यं(वि-अ)शंसन्, अभिविशंसति इत्याख्यातिकौ योगावाहुस्तच्चिन्त्यम् । द्विस्वराऽऽपत्तेः । द्वितीये प्रयोगे च अभेः च वेः च पपा. भेदतो निर्देशोऽप्यस्मदभिमतं द्रढयेत् । गतित्वे हि नामोदात्तवति तिङि वि-वत् अभेः अपि निघातप्रसङ्गात् । अपवादाऽभावात् । यच्च शस्त्रे ज्यायश्छन्दोऽभितः कनीयसोश्छन्दसोर्दर्शनात् कनीयसी छन्दसी अभितः कृत्वा ज्यायश्छन्दो विशंसतीति K. व्याचष्टे, तन्मन्दमिव भवति । विहरणप्रकारस्य तथात्वाऽभावात् । तत्र हि कनीयसैकेन च्छन्दसाऽपरस्यैकस्य ज्यायसश्छन्दसो विहरणं भवति । तयोः पच्छो व्यत्यासपूर्वकं शंसनं विशंसनं भवतीति भावः ।

g) लक्षणे कप्र. (तु. भा.; वैतु. K. अभिसंपादयति इत्यानुष्टुभेन शस्त्रसंपत्तौ तात्पर्याद् अनुष्टुप्संपत्तिमात्रपर्यवसितो गतित्वदर्शी चिन्त्यः) ।

h) नापू. टि. दिशा लक्षणे कप्र. ।

i) स्वार्थप्रधानम् अव्य. द्र. ।

j) तु. सस्थ. टि. अनूवाच । k) लक्षणे कप्र. ।

l) यक्र. आँस्, व्यँस्तम् इति द्वि. युक्तः कप्र. ।

m) सप्तम्यर्थानुवादी कप्र. द्र. (तु. तत्रैव पूर्वपक्षे इति) ।

n) लक्षणे वा सप्तम्यनुवादे वा कप्र. द्र. । विराजमभिलक्ष्य विराजि वा संपद्यन्ते संपूर्णा दशत्वसंख्याविभज्यत्वविशिष्टा भवन्ति, विराट्त्वया परिणता भवन्तीति भावः । K. तु अभि-सं√पादि इति ण्यर्थे सकर्मकतया व्याचक्षाणोऽप्रमाणः स्वरदोषश्चोक्तदिशा द्र. । सा. अपि शुद्धां सकर्मकतां समर्थयंस्तद्दिशैवाऽनुयोक्तव्यः । अभि, संपद्यन्ते > सपा. काठ ३३, २ अभिसंपद्यन्ते इति पाभे. ।

o) लक्षणे वोद्देशवचने वा कप्र. (तु. भा. K. च) । पाभे. अतिरिच्यंत तै ७,५,५,२ द्र. ।

p) लक्षणे कप्र. (तु. टि. ऋ १,५१,१) ।

q) लक्षणे कप्र. (तु. टि. मा ४,३४) ।

r) पाभे. अधि क ३,११ द्र. ।

s) सपा. काठ ५,६ अभिसंबभूवुः इति पाभे. ।

t) पाभे. अनु काठ ८,१५ द्र. ।

u) स्वार्थ-प्रधानम् अव्य. (तु. टि. मा १२,५७) ।

v) सत् इति द्वि. युक्तः कप्र. (तु. टि. तै ४,६,२,१) ।

w) पाभे. अभि तै ४,६,२,१ द्र. ।

x) पाभे. अभि तै ४,३,११,४ द्र. ।

y) अभि[२], नमति[१]; अभि[२], नमेत्[२] >सपा. तै ६,२,६,१ उप···नमति (तु. काठ २५,३), उप···नमेत् इति पाभे. ।

z) इत्थंभूतलक्षणे कप्र. (तु. टि. मा २९,६) ।

a1) सप्तम्यनुवादे कप्र. द्र. । अनुपदम् स्वे कुलाये संवेशयति इति श्रौतालिङ्गादिति दिक् ।

b1) प्रजापत्युद्देशेन पशूनां प्रतिष्ठात्मना सृष्टेर् अहेतुत्वेनोपन्यासाद् उद्देशार्थस्य प्राधान्येन समर्पकः कप्र. द्र. । c1) तु. सस्थ. टि. वि···द्यौत् ।

d1) लक्षणे कप्र. । तु. टि. पाभे. च मा ७,४५ ।

८, २¶[a]; ५¶[b]; ७¶; ९¶[b]; १०[७c]; १६[२]†; ९, १९†; १०, ४¶[d]; ६; ७; १३[e]; ११, ३¶[e]; ५¶[d]; ६[e]; ¶१२, ८[f]; १३[g]; १५†; १६, ४;७†; ९†; ११[h]; १७, १८†; १८, १‡[i]; १४[२]; १९, ५; ८[e]; ¶२०, ३[b]; ७[j], १०[k]; २१, ६¶[b]; ९[e]; १२[l]; १३†; २३, ६¶[h,m]; ९[n]; ११†; १२†; २४,५; ६[o]; ७[२p]; २५, ७[q]; ९¶[r]; १०¶[d,s]; ¶२६, २[२t]; ३[२u]; २७, ९¶[v]; २८,१¶[w]; २¶; ४[२x]; ¶३०, १[y]; २[z]; ३†; ४[a1]; ६§; ७; ¶३४, ७[२b1]; १७[२c1]; ३५, १६¶[d1]; ३६, १[b]; ३७, ९[e1]; ३८, ९; १३†; ३९, १०[f1]; ११; १२†; ४०, ७†; ४३,१[२]; ४६, २[g1]; ५†; क १, १९; २,१; ३,७[h1]; ६, ७¶[a]; ¶७, १; ४; ५; ६[b]; २५, २; २८, २‡[i]; ५†; २९, ३[l]; ३०, ३; ३१,५; ९[j]; १२; २१; ३७,६;७[o]; ८; ३९, ५; ¶४०, २; ३[२s]; ५[२]; ¶४१, १[२]; ४४, ४[२h1]; ४६, ४; ५¶; ६†; ७; ४८, १४; † कौ १, १२५; १२६; १३२; १४६; १५५; १६१; १६४;

a) द्यावापृथिव्योर्विभागे प्रकृते पृथिव्या दिव्ययज्ञियसृष्ट्यभिलक्ष्यत्वेन श्रवणात् तत्प्रवचनः कप्र. द्र. । इमाम्, अभि >सपा. तैब्रा १,१, ३,२ अस्याम् इति पाभे. ।

b) लक्षणे कप्र. ।

c) लक्षणे कप्र. (तु. टि. ऋ १, ११,२; ८; ५१, १; वैतु. SI. अभि √नम् इति [एकतरत्र तस्य अधि··· अभिनमतु इति द्व्युपसर्गयोगो नितरां चिन्तनीयः])।

d) सप्तम्यनुवादी कप्र. द्र. ।

e) लक्षणे कप्र. (तु. टि. तै २,३,१४,६)।

f) तु. मै ४,३,६ यत्-संवादत इह हेरश्रुतावपि तदर्थो गम्य इति सुवचम् ।

g) ऊर्जम् इति द्वि. युक्तः कप्र. ।

h) स्वार्थ-प्रधानम् अव्य. (तु. टि. मा १२,५७)।

i) पाभे. अभि तै ४,६,२,१ द्र. ।

j) स्वर्गम् इति द्वि. युक्तः कप्र. (तु. शौ १२, ३, २६)।

k) SI. आभिः इति पठश्चिन्त्यः ।

l) पाभे. अभि तै ५,४,९,४ द्र. ।

m) पाभे. अनु क ३६, ३ द्र. ।

n) पत्नीम् इति द्वि. युक्तः कप्र. ( वैतु. SI. अभिप्रतितिष्ठति इति) । पाभे. अधि क ३६,६ द्र. ।

o) तु. टि. अभि तै ५,१,५,९ द्र. ।

p) लक्षणे कप्र. (तु. टि. मा ४,३४)।

q) देवताः इति द्वि युक्तः कप्र. ( वैतु. SI. अभिप्रच्यावयति इति) ।

r) एतावत् इति वीप्सायां द्वि. युक्तो कप्र. (तु. संटि. यदनु क. कप्र. अभावः स्यात् [वैतु. क. मुपा. च संटि. च])।

s) पाभे. अधि तै ६,२,१०,५ द्र. ।

t) लक्षणे कप्र. (वैतु. SI. अभिप्रयन्ति , अभिप्रतितिष्ठति इति)।

u) लक्षणे कप्र. (तु. सपा. तै ६,३,३,५)।

v) लक्षणे कप्र. (तु. टि. तै ६,४,११,४)।

w) भागधेयम् इति द्वि. युक्तः कप्र. ।

x) एकतरत्र लक्षणे कप्र. (तु टि. पाभे. च मा ७,४५)।

y) सप्तम्यनुवादी कप्र. (तु. टि. तै ५,२,४,३ यत्रत्या सौवरी स्थितिर् विनिगमिका)।

z) कर्मविशेषस्य पर्यवसानसांयोगिकम् उदूहनं श्रूयते । तेन पर्यवसानवाचिनः अन्त-शब्दस्य कप्र. योगेन प्राधान्येन निर्देश उचितो भवति (वैतु. MW. गतित्व-दर्शी )।

a1) लक्षणे कप्र. ( वैतु. SI. अभि···वर्षति इति)।

b1) छन्दसां यज्ञस्त्राराज्यान्यतरविषयत्वेन सृष्टेर्विविच्य श्राव्यमाणत्वात् प्राधान्येन तद्विवेकोऽवगमकरः कप्र. ।

c1) तन्त्रम् , अरम् इति द्वि. युक्तः कप्र. (वैतु. SI. अभिप्रतितिष्ठन् इति)।

d1) लक्षणे कप्र (तु. टि. काठ ४,१३)।

e1) स्वार्थप्रधानम् अव्य. ।

f1) पाभे. अभि तै ४,३,११,४ द्र. ।

g1) लक्षणे कप्र. (तु. टि. मा २९,६)।

h1) पाभे. अभि मा ७,४५ द्र. ।

